इसके लिए सबसे पहले हमे अपनी अवधारणा बदलनी होगी।
कल्पना करेंगे, तो विकास की अवधारणा भी बदलनी पडेगी।

आज विकास भी आडंबर व दिखावे मे चल रहा है। विकसित राष्ट्र व
है, जिसके नागरिको के पास खाने-पीने की प्रचुर सामग्री है, अच्छे मकान,
और टी.वी. है, सुख-सुविधा के प्रचुर साधन है। इस आधार पर लोगो ने
अवधारणा को परिभाषित कर दिया, किन्तु इसके साथ यह नही जोड़ा
मस्तिष्क संस्कारो से पूर्ण विकसित है, वह विकसित है। साधन-सम्पन्नता अ
सम्पन्नता होने पर भी भ्रष्टाचार चलता है। कई जानते है कि कब किस
प्रधानमत्री को भ्रष्टाचार के आरोप का सामना करना पडा है। कुछ राष्ट्रो के
राष्ट्रपति तो जेल मे भी रहे है।

**प्रश्न है** —इतना बौद्धिक विकास होने के उपरान्त भी ऐसा क्यो हो रहा है
रहा है कि आज तक मस्तिष्क की वाछनीय परत को जगाने का प्रयत्न कम किया है
की अवाछनीय परत को उत्तेजना देने का प्रयत्न ज्यादा किया है। **अणुव्रत का
है— बाह्य से गहराई की ओर जाने का, कानून के साथ व्रत की ओर
मस्तिष्क की पाशविक परत को निष्प्रभावी बनाकर मानवीय परत को
का, बस यही नये मनुष्य के जन्म का राज है।**

इस जन्म के आधार पर हम कल्पना कर सकते है कि नये युग का
समाज का प्रारम्भ होगा। काम सरल नही है, किन्तु इसका एकमात्र विकल्प तो
द्वेष (क्रोध, मान, माया, लोभ) का उपशमन, पाशविक ब्रेन को निष्क्रिय करने
प्रस्थान। सस्कारो का शिक्षण और प्रशिक्षण, अगर इन बातो पर हमारा ध्यान के
अणुव्रत का स्वप्न साकार हो सकता है, नये मनुष्य का जन्म सम्भव बन सक

## ॐ जीव अरूपी है — अमूर्त है ॐ

**लघु कथा** — एक सेठजी थे। उनकी धर्म मे रुचि नही थी। सेठानी
ध्यान की ओर विशेष रूप मे झुका हुआ था। सेठ को यह सब सुहाता नह
सेठानी का व्यक्तित्व ही कुछ ऐसा था कि सेठ उसे धर्म-आराधना करने से र
थे, बल्कि यदा-कदा वह सेठजी से आग्रह किया करती थी – "आप भी
आराधना किया करो।"

सेठ कहता – "तुम्हे क्या पता? मुझे कितना काम रहता है। दम लेने
फुरसत नही है।" वह कहती – "संसार का काम तो चलता ही रहेगा। मरते
छूटने वाला नही है, परन्तु थोडा समय धर्म के लिए निकाला करो। परभव
जायेगा, बाकी सब तो यही रहेगा।" सेठ चिढकर कहता– "धर्म-कर्म ।लतृ
जीव, लोक-परलोक आदि ये सब बाते बेकार हैं। किसने देखा परलोक !
बना नही और परलोक बनाने चली हो। जो चीज दिखाई ही नही देती है,
पीछे पडना, बुद्धिमानी नही है।"

# अथ सप्तदशं पापश्रमणीयमध्ययनम् ।

इह प्रागध्ययने ब्रह्मचर्यगुप्तय उक्तास्ताश्च पापस्थानवर्जनादेवेति पापश्रमणस्वरूपाभिधायक सप्तदशमध्ययनमा-

जे केइ उ पव्वइए नियठे धम्मं सुणित्ता विणओववन्ने ।
सुदुल्लहं लहिउं वोहिलाभं विहरिज्ज पच्छा य जहासुहं तु ॥ १ ॥

व्याख्या–य॰ कश्चित् 'तु पूरणे' प्रव्रजितो निष्क्रान्तो निर्ग्रन्थो धर्मं श्रुतचारित्ररूपं श्रुत्वा विनयेन ज्ञानाद्युपचारात्मकेनोपपन्नो युक्तो विनयोपपन्न । सुदुर्लभं सुष्टु दुष्प्रापं 'लहिउ'ति लब्ध्वा प्राप्य बोधिलाभमर्हदुक्तधर्मप्राप्तिरूपमनेन भावत॰ प्रव्रजित इत्युक्तं स्यात् । स किमित्याह–विहरेच्चरेत् पश्चात् प्रव्रजनोत्तरकालं 'च पुनरर्थे' । कोऽर्थ॰ ? पूर्वं सिंहवृत्त्या प्रव्रज्य पश्चात् पुनर्यथासुखं यथा यथा निद्रा–विकथाऽऽदिकरणलक्षणेन प्रकारेण सुखमात्मनोऽवभासते । 'तुरेवार्थे' यथासुखमेव शृगालवृत्त्यैव विहरेदित्यर्थ ॥ १ ॥

स च गुरुणाऽन्येन वाऽधीष्वेत्युक्तो यद् वक्ति तदाह—

सिज्जा दढा पाउरण मे अत्थि उप्पज्जई भुत्तु तहेव पाउं ।

जाणामि जं वट्टइ आउसु त्ति किं नामु काहामि सुएण भंते ! ॥ २ ॥

व्याख्या–शय्या वसतिर्दृढा शीत–वातातप–जलाद्युपद्रवैरनभिभाव्या । तथा प्रावरणं मे ममास्ति । किंचोत्पद्यते भोक्तुं भोजनाय तथा पातुं पानाय 'यथाक्रममशनं पानं चेति शेषः' तथा जानामि यद् वर्तते यदिदानीमस्ति, आयुष्मन्निति प्रेरयितुः सम्बोधनमित्यस्माद् हेतोः किं नाम ? न किञ्चिदित्यर्थः 'किं क्षेपे' 'काहामि'त्ति करिष्यामि श्रुतेनागमेन 'अधीतेनेत्यध्याहारः' भदन्त पूज्य ! अयमस्याशयो यथा ये भवन्तोऽधीयन्ते तेऽपि नातीन्द्रियं वस्तु किञ्चनावबुध्यन्ते तत् किं हृदय–गल–तालुशोपकारिणाऽधीतेन ? इत्येवमध्यवसितो यः, स पापश्रमण इत्युच्यते । इतीहापि सिंहावलोकितन्यायेन सम्बध्यते इति ॥ २ ॥

किञ्च—

जे केइ उ पव्वइए निद्दासीले पगामसो । भुच्चा पिच्चा सुहं सुवई पावसमणि त्ति वुच्चई ॥ ३ ॥

व्याख्या–यः कश्चित् प्रव्रजितो निद्राशीलः प्रकामशो बहुशो भुक्त्वा दध्योदनादि, पीत्वा दुग्धादि सुखं यथा स्यादेवं सकलानुष्ठाननिरपेक्ष एव स्वपिति यः, स पापश्रमण इत्युच्यते इति । अत्र दृष्टान्तमाह—

अत्रास्ति भरते क्षेत्रे मधुरा मथुरा पुरी । विहारा यत्र हारन्ति विशुद्धा भूरमोरसि ॥ १ ॥

यस्याः सरसतां वीक्ष्य कालिन्दी यत्र कालिमाम् । दधावियं मम गुणं जग्राह चेत्यसूयया ॥ २ ॥

तत्रैयुरन्यदाऽनेकशिष्या श्रीमङ्गुसूरय । श्रुताब्धिपारदृश्वानो विहरन्तो भुवस्तले ॥ ३ ॥
महेभ्या भावसद्भक्तियुक्ता श्राद्धा यदृच्छया । साधुभ्यो ददते तत्र भोज्यं पेय रसाद्भुतम् ॥ ४ ॥
ततश्च सातर्द्धि–रसगौरवत्रयगृद्धित' । सुखशीलतया जाता सूरयो नित्यवासिन ॥ ५ ॥
प्रणीतमशनं स्वैरमश्नन्त्युच्चै पिबन्ति च । सुरभि स्वादु पानीयं खाद्य–स्वाद्ये अदन्ति ते ॥ ६ ॥
सर्वर्त्तुसुखदायां हि शय्यायां शेरतेऽनिशम् । सातगौरविता किन्तु जातास्ते शिथिलक्रियाः ॥ ७ ॥
एते तपस्विपु श्रेष्ठा. सच्चारित्रिपु सत्तमाः । उपदेष्टृपु वागीशा' किमन्ये सयतब्रुवा ? ॥ ८ ॥
इति श्लाघाऽन्यनिन्दाभ्यामनुमोदनया तु ते । हृष्यन्तोऽहयचो मिथ्यादृशो मिथ्याभिमानगा. ॥ ९ ॥
क्षेत्रे कुले च ममताभाज' प्रतिबन्धमास्तिकेपु भृशम् । कुर्वाणास्तस्थुस्ते श्रुतपाठ–तपस्सु निरपेक्षा. ॥ १० ॥
(त्रिभिः कुलकम्)

विहाय सन्तोपमनन्तसौख्यद रज्यन्ति तुच्छेष्वपि गौरवेपु ।
अल्पस्य हेतोर्बहु हारयन्ति ते दुरन्तता ही ! खलु मोहकर्मणः ॥ ११ ॥

स चाचार्योऽप्रतिक्रान्तव्रतातीचारवारक' । आयु क्षये महायक्ष' पुरनिर्धमनेऽजनि ॥ १२ ॥
स्वं ज्ञात्वाऽवधिना पूर्वभव गौरवदूपितम् । शिष्यान् बोधयितुं स्वीयान् तद्बहिर्गमनाध्वनि ॥ १३ ॥

दीर्घां प्रासारयज्जिह्वां तां दृष्ट्वा मुनयोऽब्रुवन् । कस्त्वं भोश्चेष्टयेदृश्याऽस्मान् विभीषयसे कथम् ? ॥ १४ ॥
यक्षः प्राख्यद् विपण्णास्तो भो वाचंयमपुङ्गवाः ! । जानीत यूयमात्मीयं गुरुं तं मङ्गुनामकम् ॥ १५ ॥
नित्यवासात् तथा तीव्रगौरवत्रयसेवनात् । सोऽहमीदृग्विधे स्थानेऽभूवमल्पर्द्धिकः सुरः ॥ १६ ॥
ततो यूयं सदावासं गौरवत्रितयं तथा । प्रतिवन्धं परित्यज्य विहरध्वं व्रतादराः ॥ १७ ॥
स्वीकृत्य तद्वचस्तेऽन्तेवासिनो भवभीलुकाः । ततो विहृत्य चारित्रं निरीहाः प्रत्यपालयन् ॥ १८ ॥
यथैवं मङ्गुराचार्यो नित्यवासादियोगतः । पापश्रमणतां भेजे नैषा कार्या तथाऽपरैः ॥ १९ ॥

॥ इति रसादिगृद्धत्वेन पापश्रमणत्वे मङ्ग्वाचार्यकथा ॥ ३ ॥

तथा—

आयरिय-उवज्झाएहिं सुयं विणयं च गाहिए । ते चेव खिंसई बाले पावसमणि त्ति वुच्चई ॥ ४ ॥

व्याख्या-आचार्योपाध्यायैः श्रुतं विनयं च ग्राहितः शिक्षितो 'यैरिति गम्यते' । तानेवाचार्यादीन् खिंसति निन्दति बालो विवेकविकलो यः, स पापश्रमण इत्युच्यते इति ॥ ४ ॥

ज्ञानविषयं पापश्रमणमुक्त्वा दर्शनविषयं तदाह—

आयरिय-उवज्झायाणं सम्मं नो पडितप्पई । अप्पडिपूयए थद्धे पावसमणि त्ति वुच्चई ॥ ५ ॥

व्याख्या—आचार्योपाध्यायानां सम्यगवैपरीत्येन न परितप्यते न तत्तसि भक्तादिचिन्तां करोति। तथा अप्रतिपूजकोऽर्हदादिपु यथोचितप्रतिपत्तिरहित स्तब्धो गर्वाध्मात आत्मानमेव बहु मन्यते य, स पापश्रमण इत्युच्यत इति ॥ ५ ॥

चारित्रविषय तदाह—

सम्मद्दमाणे पाणाणि बीयाणि हरियाणि य। असजए सजयमन्नमाणे पावसमणि त्ति वुच्चई ॥ ६ ॥

व्याख्या—संमर्दयन् प्राणानिति प्राणिनो द्वीन्द्रियादीन्, बीजानि शाल्यादीनि, हरितानि दूर्वाऽऽदीनि 'सर्वैकेन्द्रियोपलक्षणमिदम्' अत एवासंयतोऽपि संयतोऽहमिति मन्यमानोऽनेन संविग्नपाक्षिकत्वमप्यस्य नास्तीत्युक्तं स पापश्रमण इत्युच्यते ॥ ६ ॥

तथा—

संथारं फलग पीढं निसिज्ज पायकंबल। अपमज्जियमारुहइ पावसमणि त्ति वुच्चई ॥ ७ ॥

व्याख्या—संस्तारकं कम्बलादि, फलक दारुमय, पीठमासनं, निषिद्या स्वाध्यायभूमि', पादकम्बलं पादपुञ्छनम्, अप्रमृज्य रजोहरणादिनोपलक्षणादप्रत्युपेक्ष्य चारोहति य', स पापश्रमण इत्युच्यते ॥ ७ ॥

तथा—

दवदवस्स चरई पमत्ते य अभिक्खणं । उल्लंघणे य चंडे य पावसमणि त्ति वुच्चई ॥ ८ ॥

व्याख्या–द्रुतं द्रुतं शीघ्रं शीघ्रं तथाविधालम्बनं विना त्वरितं चरति गच्छति भिक्षाचर्याऽऽदिषु पर्यटति प्रमत्तश्च प्रमादवान् अभीक्ष्णं वारं वारं उल्लङ्घनश्च वत्स–बालादीनामधःकर्ता चण्डश्च क्रोधनो यः, स पापश्रमण इत्युच्यते ॥ ८ ॥

तथा—

पडिलेहेइ पमत्ते अवउज्झइ पायकंबलं । पडिलेहा अणाउत्ते पावसमणि त्ति वुच्चई ॥ ९ ॥

व्याख्या–प्रतिलेखयति प्रत्युपेक्षते प्रमत्तः सन् । 'अवउज्झइ' त्ति अपोह्यति यत्र तत्र निक्षिपति पादकम्बलं पादपुञ्छनम् । 'उपलक्षणात् सर्वोपधि' न प्रत्युपेक्षत इत्यर्थः । स एवं प्रतिलेखनानायुक्तः प्रत्युपेक्षाऽनुपयुक्तश्च यः, स पापश्रमण इत्युच्यते ॥ ९ ॥

तथा—

पडिलेहेइ पमत्ते से किंचि हु निसामिया । गुरुं परिभावए निच्चं पावसमणि त्ति वुच्चई ॥ १० ॥

व्याख्या–प्रतिलेखयति प्रमत्तः स 'किंचि हु' त्ति 'हुरप्यर्थः' ततः किञ्चिदपि विकथाऽऽदिकं निशम्य श्रुत्वा तत्रा-

क्षिप्तचित्ततयेति भाव । गुरून् परिभवतीति गुरुपरिभावको नित्यम् । को भावोऽसम्यक् प्रत्युपेक्षमाणो वितथमाचरन् वा गुरुभिर्नोदितस्तानेवाभिभवति, यथा स्वयमेव प्रत्युपेक्षध्वम्, युष्माभिरेव वयमित्थं शिक्षिता भवतामेवायं दोष इत्यादि य', स पापश्रमण इत्युच्यते ॥ १० ॥

किञ्च—

वहुमाई पमुहरी थद्धे लुद्धे आणिग्गहे । असंविभागी अचियत्ते पावसमणि त्ति वुच्चई ॥ ११ ॥

व्याख्या–बहुमायी प्रभूतवञ्चनाप्रयोगवान्, प्रकर्षेण मुखरो वाचाल', स्तब्धो लुब्ध इति प्राग्वत् । अनिग्रहो न निग्रहीतेन्द्रियनोइन्द्रिय । असंविभागी गुरु–ग्लानादिभ्योऽशनादि न संविभज्य दाता । 'अचियत्ते'त्ति गुर्वादिष्वप्यप्रीतिमान् य, स पापश्रमण इत्युच्यते ॥ ११ ॥

अन्यच्च—

विवाय च उईरेइ अहम्मे अत्तपन्नहा । वुग्गहे कलहे रत्ते पावसमणि त्ति वुच्चई ॥ १२ ॥

व्याख्या–विवाद वाकलहं 'च पूरणे' 'उईरेइ'त्ति उदीरयत्युपशान्तमप्युत्प्रासनादिना वृद्धिं नयति । अधर्मोऽसदाचार, 'अत्तपन्नह'त्ति आप्ता सद्बोधरूपतया हितां प्रज्ञां स्वस्यान्येषां वा बुद्धिं कुतर्कव्याकुलीकरणतो हन्तीत्याप्तप्रज्ञहा । व्युद्ग्रहे दण्डादिघातजे विरोधे, कलहे वाचिके रक्त. सक्तो य, स पापश्रमण इत्युच्यते ॥ १२ ॥

अपरं च—

अथिरासणे कुक्कुईए जत्थ तत्थ निसीयई । आसणंमि अणाउत्ते पावसमणि त्ति वुच्चई ॥ १३ ॥

व्याख्या-अस्थिरासनः कुत्कुचः स्पन्दकः यत्र तत्र संसक्तरजस्कादावपि निपीदत्युपविशत्यासने अनायुक्तोऽनुपयुक्तो यः, स पापश्रमण इत्युच्यते ॥ १३ ॥

तथा—

ससरक्खपाउमुवई सिज्जं न पडिलेहए । संथारए अणाउत्ते पावसमणि त्ति वुच्चई ॥ १४ ॥

व्याख्या-सह रजसा वर्तेते इति सरजस्कौ एवंविधौ पादौ यस्य स सरजस्कपादः । कोऽर्थः ? पादावप्रमृज्य शेते तथा शय्यां वसतिं न प्रतिलेखयति 'उपलक्षणान्न प्रमार्जयति' । संस्तारके कम्बलादौ 'सुप्त इति शेषः' अनायुक्तः 'कुक्कुडिपायपसारण आयामेउं पुणो वि आउंटे' इत्यागमार्थानुपयुक्तो यः, स पापश्रमण इत्युच्यते इति ॥ १४ ॥

तपोऽतिक्रमतः पापश्रमणमाह—

दुद्ध-दही विगईओ आहारेइ अभिक्खणं । अरए य तवोकम्मे पावसमणि त्ति वुच्चई ॥ १५ ॥

१ कुक्कुटीपादप्रसारणं आयम्य पुनरप्याकुञ्चेत् ।

व्याख्या–दुग्धं च दधि च दधि–दुग्धं 'प्राकृतत्वात् सूत्रे व्यत्यय' विकृतिहेतुत्वाद् विकृती 'उपलक्षणाद् घृताद्यशेषविकृतिपरिग्रह' आहारयत्यभीक्ष्ण वारं वार तथाविधपुष्टालम्बनं विनाऽपीति भावः। अत एवारतिश्चाप्रीतिमाश्च तप कर्मणि य, स पापश्रमण इत्युच्यते ॥ १५ ॥

अपि च—

अत्थंतमि य सूरमि आहारेइ अभिक्खण। चोइओ पडिचोएइ पावसमणि त्ति वुच्चई ॥ १६ ॥

व्याख्या–अस्तान्ते अस्तमयपर्यन्ते 'उदयादारभ्येति गम्यते' सूर्ये आहारयत्यभीक्षणम्। कोऽर्थः? प्रातरारभ्य सन्ध्यां यावत् पुन.पुनर्भुङ्क्ते। 'चोइओ पडिचोएइ'त्ति केनचिद् गीतार्थेन चोदितो यथाऽऽयुष्मन्! किमिति त्वया नित्यमाहारतत्परतयैव स्थीयते?, दुर्लभेयं मनुजत्वादिसामग्री तत एनामवाप्य तपसि किं नोद्यम्यते? इति प्रेरित' सन् प्रतिचोदयति यथा त्वमेवं जानन्नपि भवान्न विकृष्टतपः कुरुते इति प्रतिवक्ति य, स पापश्रमण इत्युच्यते ॥१६॥

तथा—

आयरियपरिच्चाई परपासंडसेवए। गाणंगणिए दुब्भूए पावसमणि त्ति वुच्चई ॥ १७ ॥

व्याख्या–आचार्यपरित्यागी, ते हि तपसि सीदन्तं नोदयन्त्यानीतं चान्नादि बाल–ग्लानादिभ्यो दापयन्त्यतो-

ऽतीवाहारलौल्यात् तत्परित्यजनशीलः । परपाखण्डान् 'मृद्वी शय्या०' इत्यादिवादिनो बौद्धादीनत्यन्ताहारप्रसक्तान् सेवते इति परपाखण्डसेवकः । तथा स्वेच्छया षण्मासाभ्यन्तरमेव गणाद् गणं संक्रामतीति गाणंगणिकः इत्यागमिकी भाषा । अत एव दुर्भूतो दुर्निन्दितं भूतं भवनमस्येति दुर्भूतो दुराचारतया निन्द्यो भूत इत्यर्थः यः, स पापश्रमण इत्युच्यते ॥ १७ ॥

वीर्याचारविषयं तमाह—

सयं गेहं परिच्चज्ज परगेहंसि वावडे । निमित्तेण य ववहरे पावसमणि त्ति वुच्चई ॥ १८ ॥

व्याख्या–स्वकमात्मीयं गेहं गृहं परित्यज्य त्यक्त्वा प्रव्रज्याऽङ्गीकरणतः परगृहेऽन्यगृहे 'वावडे'त्ति व्याप्रियते पिण्डार्थी सन् स्वतस्तत्कृत्यानि कुरुते इत्यर्थः । निमित्तेन च शुभाशुभसूचकेन वचनेन व्यवहरति द्रव्यार्जनं करोति यः, स पापश्रमण इत्युच्यते । अत्रार्थे दृष्टान्तस्तथाहि—

कस्मिंश्चित् संनिवेशेऽभूत् क्षत्रियो ग्रामनायकः । महाराजाज्ञया सोऽगाद् द्रष्टुं देशान्तरं सुधीः ॥ १ ॥
काले भूयस्तरे जाते तद्भार्या रमणोत्सुका । भिक्षाऽर्थमागतं कञ्चित् साधुमेकमपृच्छत ॥ २ ॥
भोः ! सर्वज्ञसुता यूयं निमित्तं वित्थ वा नवा ? । साधुनोक्तमहं साधु तज्जानामि जिनागमात् ॥ ३ ॥
यद्येवं तर्हि मे ब्रूहि प्राणनाथः कदैष्यति ? । सोऽवग् ज्ञानावलोकेन श्वः समेष्यति ते धवः ॥ ४ ॥

किमभिज्ञानमत्रार्थं वद ज्ञानविदां वरः । मुनिस्तद्गुह्यदेशस्थं मषं स्वशादि चादिशत् ॥ ५ ॥
सजातप्रत्यया साऽनु तज्ज्ञानगुणरञ्जिता । ततस्तस्मै ददौ तुष्टा मोदकादि यथेप्सितम् ॥ ६ ॥ (युग्मम्)

अथ द्वितीयेऽह्नि गृहं प्रमार्जनोपलिम्पन–स्वस्तिकमण्डनाद्भुतम् ।
ससूत्रकण्ठैः कलशैर्विभूषितं साऽचीकरद् वन्दनमालिकाङ्कितम् ॥ ७ ॥

प्रातः पत्युरभिमुखं सा प्रैषीत् स्वपरीजनम् । स समायान्नथैकाकी स्वगृहाचारमीक्षितुम् ॥ ८ ॥
ग्रामेशो ददृशे तेन नतस्तेनाप्यभाणि स । युष्मकाभिः कथं ज्ञातं मदागमनमद्य भोः ? ॥ ९ ॥
ततः परिजनोऽवादीत् त्वत्पत्नीवचसैव हि । ततो विस्मितचित्तोऽसावन्तरुल्लसितप्रमुत् ॥ १० ॥
समागात् स्वगृहं चित्रां वीक्ष्य तादृग्गृहश्रियम् । कथं मदागमो ज्ञात इत्यपृच्छन्निजां प्रियाम् ॥ ११ ॥
सर्वं गुह्यमपाद्येषा साधुप्रोक्तमचीकथत् । ग्रामाध्यक्षस्ततो रुष्टो मुनौ मिथ्याविकल्पनात् ॥ १२ ॥ (युग्मम्)
परीक्षाऽर्थं समाहूय तं साधुं प्रणिपत्य च । सोऽपृच्छत् कथय त्वं भोः ! यदि विज्ञानवानसि ॥ १३ ॥
वडवाया यथैतस्या गर्भः कीदृग् भविष्यति ? । किशोरः पञ्चपुण्ड्राङ्कोपेतस्तेनेति जल्पितम् ॥ १४ ॥
ग्रामेशस्तत्प्रतीत्यर्थं व्यदारीद् वडवोदरम् । दृष्टो यथावदुक्तोऽथ किशोरः पञ्चचन्द्रकः ॥ १५ ॥
तेनाभाणि पुनः सत्यं यद्येतद् वचनं तव । नाभविष्यत् तदा तुदं तेऽभविष्यद् विदारितम् ॥ १६ ॥

ततः सत्कृत्य तं साधुं विससर्ज स भौतिकः । एवं निमित्ततः सोऽथ पापश्रमणकोऽभवत् ॥ १७ ॥

॥ इति निमित्तादिप्रयोगे साधुकथा ॥ १८ ॥

अपि च—

सन्नाइपिंडं जेमेइ नेच्छई सामुदाणियं । गिहिनिसिज्जं च वाहेई पावसमणि त्ति वुच्चई ॥ १९ ॥

व्याख्या–स्वज्ञातिभिः स्वजनैर्निजकोऽयमिति यः स्निग्धाद्याहारो दीयते, स स्वज्ञातिपिण्डस्तं जेमति भुङ्क्ते । नेच्छति समुदानानि भिक्षास्तेषां समूहः सामुदानिकं बहुगृहसम्बन्धिनं भिक्षासमूहमज्ञातोञ्छमित्यर्थः । गृहिणां निषिद्या तूल्यादिशय्यां वाहयति सुखशीलतया आरोहति यः, स पापश्रमण इत्युच्यत इति ॥ १९ ॥

अथाध्ययनमुपसंहरन् दोषासेवन–त्यागयोः फलमाह—

एयारिसे पंचकुसीलसंवुडे रूवंधरे मुणिपवराणि हिट्ठिमे ।
अयंसि लोए विसमेव गरहिए न से इहं नेव परत्थ लोए ॥ २० ॥

व्याख्या–एतादृशो यादृश उक्तः, पञ्च कुशीलाः पार्श्वस्थादयस्तद्वदसंवृतोऽनिरुद्धाश्रवद्वारः पञ्चकुशीलासंवृतः । रूपं रजोहरणादिवेषं धारयतीति रूपंधरः 'प्राकृतत्वात् सूत्रे बिन्दुभावः' । मुनिप्रवराणां 'हिट्ठिमो'त्ति अधोभागवर्ती

जघन्यसयमस्थानवर्तितया निकृष्ट॰ । एतत्फलमाह—'अयंसि'त्ति अस्मिन् लोके विषमिव गर्हितो धिगेन भ्रष्टप्रतिज्ञमिति नीचैरपि निन्द्यतेऽत एव न स इहेतीह लोके नैव परत्र लोके 'परमार्थत सन्निति शेष.'। यस नैहिक आमुष्मिकोऽपि गुणलाभस्तस्य सतस्तु गणनाऽभावादविद्यमानतैवेति भाव ॥ २० ॥

जे वज्जए एय सया उ दोसे से सुव्वए होइ मुणीण मज्झे ।

अयासि लोए अमय व पूइए आराहए लोगमिणं तहा पर ॥ २१ ॥ त्ति बेमि ॥

व्याख्या—यो वर्जयत्येतानुक्तरूपान् सदा दोपान् पापानुष्ठानरूपान् स तादृश. सुव्रतो निरतिचारतया प्रशस्यव्रतो भवति मुनीना मध्ये भावमुनित्वेन स मुनिमध्ये गण्यत इति भाव । तथा चास्मिन् लोकेऽमृतमिव पूजित आराधयति लोकमिममिहलोकं तथा परं परलोकमिति । इह सकललोकपूज्यतया परलोके च सुगतिप्राप्ते, ततः पापवर्जनमेव कार्यमिति । इति समाप्तौ ब्रवीमीति प्राग्वत् ॥ २१ ॥ ग्र० १४१–८ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां पापश्रमणीयाख्यं सप्तदशमध्ययनं समाप्तम् ॥ १७ ॥

## अथ संयतीयाख्यमष्टादशमध्ययनम् ।

अनन्तराध्ययने पापस्थानवर्जनमुक्तम् । तच्च भोगर्द्धित्यागतः संयतस्यैव भवतीत्यतः संजयोदाहरणतः प्रतिपादयन्नाह—

कंपिल्ले नयरे राया उदिन्नबलवाहणे । नामेण संजए नाम मिगवं उवनिग्गए ॥ १ ॥

व्याख्या–काम्पील्ये नगरे राजा नृपतिरुदीर्णमुदयप्राप्तं बलं शरीरसामर्थ्यं वाहनं गजाश्वादि यस्यासावुदीर्णबलवाहनः । स च नाम्नाऽभिधानेन संजयो नामेति प्रसिद्धौ ततश्च संजयनाम्ना प्रसिद्धो मृगव्यां मृगयां प्रति उपनिर्गतो निष्क्रान्तः 'तत एव नगरादिति गम्यम्' ॥ १ ॥

स च कीदृग् विनिर्गतः ?, किं च कृतवानित्याह—

हयाणीए गयाणीए रहाणीए तहेव य । पायत्ताणीए महया सव्वओ परिवारिए ॥ २ ॥

मिए छुभित्ता हयगओ कांपिल्लुज्जाणकेसरे । भिए संते मिए तत्थ वहेइ रसमुच्छिए ॥ ३ ॥

अनयोर्व्याख्या–विभक्तिव्यत्ययाद् हयानीकेन, गजानीकेन, रथानीकेन, तथैव च पदातीनां समूहः पादातं तदनीकेन कटकेन महता सुविस्तृतेन सर्वतः परिवारितः सन् ॥ किं ? मृगान् क्षिप्त्वा प्रेरयित्वा काम्पील्यस्य तस्यैव नगरस्य

केसरनामकमुद्यान काम्पील्योद्यानकेसरं तस्मिन् भीतान् त्रस्तान् सतो मितान् परिमितांस्तत्र तेषु मृगेषु मध्ये 'वहेइ'त्ति हन्ति व्यापादयति शरादिभि कृत्वा रसस्तत्पिशितास्वादस्तत्र मूर्च्छितो गृद्ध इति सूत्रद्वयार्थः ॥ २–३ ॥

अत्रान्तरे यदभूत् तदाह—

अह केसरमि उज्जाणे अणगारे तवोधणे । सज्झाय—ज्झाणसजुत्ते धम्मज्झाणं ज्झियायइ ॥ ४ ॥

अप्फोवमडवंमी झायती क्खवितासवे । तस्सागए मिए पासं वहेइ से णराहिवे ॥ ५ ॥

अनयोर्व्याख्या—अथानन्तर तस्मिन् केसरोद्यानेऽनगारस्तपोधन॰ स्वाध्यायोऽनुप्रेक्षणादि , ध्यान धर्मध्यानादि ताभ्यां युक्तो यथाऽवसर तदासेवकोऽत एव धर्मध्यानमाज्ञाविचयादि ध्यायति चिन्तयति ॥ केत्याह—'अप्फोव' इति वृद्धानुवादाद् वृक्षाद्याकीर्ण स चासौ मण्डपश्च तत्र ध्यायति 'धर्मध्यानादीति गम्यते' पुनरभिधानं ध्यानस्य अतिशयकरणीयताख्यापकम् । स च कीदृश. ? क्षपिताश्रव निर्मूलोन्मूलितकर्मबन्धहेतु॰ । अथ तस्य मुने पार्श्वं समीप आगतान् मृगान् हन्ति स नराधिपो राजा संजय इति सूत्रद्वयार्थ. ॥ ४–५ ॥

तदा च किमभूदित्याह—

अह आसगओ राया खिप्पमागम्म सो तहिं । हए मिए उ पासित्ता अणगारं तत्थ पासई ॥ ६ ॥

व्याख्या–अथानन्तरमश्वगतो राजा क्षिप्रं शीघ्रमागत्य स इति संजयनामा तस्मिंस्तपोधनाधिष्ठिते मण्डपे हतान् व्यापादितान् 'तुशब्द एवार्थे' ततो मृगानेव न पुनरनगारं, दृष्ट्वाऽनन्तरमवहितोऽनगारं साधुं तत्र मंडपान्तः पश्यतीति ६

ततः किमसावकार्षीदित्याह—

अह राया तत्थ संभंतो अणगारो मणाहओ। मए उ मंदपुन्नेण रसगिद्धेण घत्तुणा ॥ ७ ॥

आसं विसज्जइत्ताणं अणगारस्स सो निवो। विणएण वंदई पाए भगवं! इत्थ मे खमे ॥ ८ ॥

अनयोर्व्याख्या–अथ राजा तत्र मुनिदर्शने सति सम्भ्रान्तो भीतो यथाऽनगारो मनाक् स्तोकं हतो भविष्यति 'तदासन्नमृगहननादित्यभिप्रायः' मया तु मंदपुण्येन स्तोकपुण्यवता रसगृद्धेन 'घत्तुण'त्ति घातकेन हननशीलेनेत्यर्थः ॥ ततश्चाश्वं विसृज्य अनगारस्य स नृपो विनयेन वन्दते पादौ वक्ति च यथा भगवन्नत्रैतस्मिन् मृगवधे मम 'अपराधमिति शेषः' क्षमस्व सहस्व ॥ ७–८ ॥

ततश्च—

अह मोणेण सो भगवं अणगारे झाणमस्सिए। रायाणं न पडिमंतेइ तओ राया भयद्दुओ ॥ ९ ॥

संजओ अहमस्सीति भगवं! वाहिराहि मे। कुद्धे तेएण अणगारे दहिज्ज नरकोडिओ ॥ १० ॥

अनयोर्व्याख्या–अथ मौनेन स भगवाननगारो ध्यानमाश्रितो राजानं न प्रतिमन्त्रयते न प्रतिवक्ति यथाऽहं क्षमिष्ये नवेति । ततस्तत्प्रतिवचनाभावादयमवश्य क्रुद्ध इति राजा भयद्रुतो भयत्रस्तो मां मध्यमप्रकृतिं ज्ञात्वा सुतरां कोप करिष्यतीति ॥ निजैश्वर्यं ज्ञापयन्नाह 'संजउ'त्ति सयतनामा राजाऽहमस्मि, न तु नीच इत्यस्माद् हेतोर्व्याहर सम्भाषय मे इति माम् । न चाहमनर्थक भयद्रुत इत्याह क्रुद्धस्तेजसा अनगारो दहेन्नरकोटीरपि, आस्तां शतं सहस्र चेत्यतो भयद्रुत इत्यर्थः ॥ ९–१० ॥

अथ मुनिराह—

अभय पत्थिवा ! तुब्भ अभयदाया भवाहि य । अणिच्चे जीवलोगंमि किं हिंसाए पसज्जसि ? ॥ ११ ॥
जया सव्व परिच्चज्ज गतव्वमवसस्स ते । अणिच्चे जीवलोगंमि किं रज्जंमि पसज्जसि ? ॥ १२ ॥

अनयोर्व्याख्या–अभयं पार्थिव ! राजन् ! 'तुब्भ'त्ति तव 'न कश्चित् त्वा दहतीति भाव ' इत्यमाश्वास्योपदेशमाह–अभयदाता च त्वमपि भव यथा भवतो मृत्युभयमेवमन्येषामपीत्यर्थ । अनित्ये जीवलोके किं हिंसायां प्रसजसि ? । अल्पदिनकृते किमित्थ पापमुपार्जयसि ? नेदमुचितमित्यर्थ ॥ इत्थ चानित्यत्वे सिद्धे 'जय'त्ति यदा सर्वं कोशान्त - पुरादि परित्यज्य गन्तव्य भवान्तरं अवशस्य अस्वतन्त्रस्य ते तव ततोऽनित्ये जीवलोके किं राज्ये प्रसजसि? हिंसादिनिमित्तत्वादस्य ॥ ११–१२ ॥

अनित्यत्वं भावयितुमेवाह—

जीवियं चेव रूवं च विज्जुसंपायचंचलं । जत्थ तं मुज्झसी रायं ! पेच्चत्थं नावबुज्झसी ॥ १३ ॥

व्याख्या—जीवितं जीवनं चैव रूपं च विद्युत्सम्पातो विद्युच्चलनं तद्वच्चञ्चलं यत्र जीविते रूपे च त्वं मुह्यसि मोहं गच्छसि राजन् ! प्रेत्यार्थं परलोकप्रयोजनं नावबुध्यसे परलोककृत्यावबोधोऽपि नास्ति कुतस्तत्करणं तवेत्यर्थः ॥ १३ ॥

अथ मोहपरिहारार्थमिदमाह—

दाराणि य सुता चेव मित्ता य तह बंधवा । जीवंतमणुजीवंति मयं णाणुवयंति य ॥ १४ ॥

नीहरंति मयं पुत्ता पियरं परमदुक्खिया । पियरो वि तहा पुत्ते बंधू रायं ! तवं चरे ॥ १५ ॥

अनयोर्व्याख्या—दाराश्च सुताश्चैव मित्राणि तथा बान्धवा अपि जीवन्तमनुजीवन्ति तदुपार्जितद्रव्यभोगाशयाऽनुवर्तन्ते तदनुगच्छन्ति, मृतं पुनर्नानुव्रजन्त्यपि; किं पुनः सह यास्यन्ति ?। अतः कृतघ्नेषु कलत्रादिषु नास्था विधेयेति भावः ॥ अपि च निःसारयन्ति मृतं पुत्राः पितरम् । परमदुःखिता अतिशयसञ्जातदुःखा अपि पितरोऽपि तथा पुत्रान् निःसारयन्ति बन्धवश्च 'बन्धूनिति शेषः' । ततो राजन् ! तपश्चरेः व्रतमासेवस्व ॥ १४–१५ ॥

तत्पुत्रादय किं कुर्वन्तीत्याह—

**ततो तेणज्जिए दव्वे दारे य परिरक्खिए। कीलतन्ने नरा राया हट्ठ–तुट्ठमलंकिया ॥ १६ ॥**

व्याख्या–ततो नि सारणादनन्तर तेन पित्रादिनोपार्जिते द्रव्ये दारेषु च परिरक्षितेषु सर्वोपायप्रतिपालितेषु 'आर्षत्वादेकवचनम्' क्रीडन्ति रमन्ते 'तेनैव धनेन तैरेव दारैरिति गम्यम्' अन्ये नरा हे राजन्! हृष्टा· तुष्टा अलङ्कृता। तत्र हृष्टा बहि'पुलकिता, तुष्टा· मन·समाधिभाज', अलङ्कृता विभूषिता। इयं च भवस्थितिरीदृशी। अतस्तपश्चरेरिति सम्बन्ध ॥ १६ ॥

मृतस्य को वृत्तान्त इत्याह—

**तेणावि ज कय कम्म सुह वा जइ वा दुह। कम्मुणा तेण सजुत्तो गच्छती उ परं भव ॥ १७ ॥**

व्याख्या–तेनापि पित्रादिमृतेनापि यत् कृतं कर्म शुभं वा यदि वेत्यथवाऽशुभम्। 'तुशब्दस्य व्यस्तसम्बद्धत्वादेवकारार्थत्वात्' तेनैव शुभाशुभरूपेण कर्मणा, न तु धनादिना संयुक्तो गच्छति पर भवं भवान्तर शुभाशुभयो· कर्मणोरनुयायित्वाच्छुभहेतु तप एव चरेरित्यर्थ· ॥ १७ ॥

अथ तद्वच श्रुत्वा राजा किमकार्षीदित्याह—

**सोऊण तस्स सो धम्मं अणगारस्स अंतिए। महया सवेग-निव्वेयं समावन्नो नराहिवो ॥ १८ ॥**

संजओ चइउं रज्जं निक्खंतो जिणसासणे। गद्दभालिस्स भगवओ अणगारस्स अंतिए ॥ १९ ॥

अनयोर्व्याख्या—श्रुत्वा आकर्ण्य तस्य प्रस्तुतस्यानगारस्यान्तिके इति सम्बन्धः। स इति संजयाख्यो धर्ममुक्तस्वरूपं
'महय'त्ति 'आर्पत्वान्महत्' संवेग—निर्वेदं समापन्नो नराधिपो राजा ॥ ततश्च संजयः संजयनामा त्यक्त्वा राज्यं
निष्क्रान्तः प्रव्रजितो जिनशासने, न तु सुगतादिमते इति भावः। गर्दभालेः गर्दभालिनाम्नो भगवतोऽनगारस्यान्तिके
संजयोऽयमुपगतवान्। स हि गर्दभालिनामा गुरुरिति सूत्रद्वयार्थः ॥ १८–१९ ॥

स चैवमुपात्तव्रतोऽवगतकृत्याकृत्यविभागः सामाचारीप्रयतश्चानियतचर्यया विहरंस्तथाविधं
संनिवेशमाजगाम। तत्र तस्य यदभूत्, तदाह—

चिच्चा रट्ठं पवइओ खत्तिओ परिभासई। जहा ते दीसई रूवं पसन्नं ते तहा मणो ॥ २० ॥

किंनामे किंगुत्ते कस्सट्ठाए व माहणे?। कहं पडियरसी बुद्धे कहं विणीय त्ति वुच्चसि? ॥ २१ ॥

अनयोर्व्याख्या—त्यक्त्वा राष्ट्रं देशं प्रव्रजितः क्षत्रियः क्षत्रजातिरनिर्दिष्टनामा परिभाषते 'संजयमुनिमित्युपस्कारः'।
स हि पूर्वजन्मनि वैमानिक आसीत्, ततश्च्युत्वा क्षत्रियकुले समुत्पद्य तथाविधनिमित्ततः स्मृतपूर्वजन्मा तत एवो-
त्पन्नवैराग्यश्च प्रव्रजितवान् विहरंश्च तत्र संजयमुनिं दृष्ट्वा विमर्शार्थमिदमुक्तवान्। यथा ते दृश्यते रूपमाकृतिः
प्रसन्नं निर्विकारं तथा ते तव मनः 'प्रसन्नमिति प्रक्रमः'। तत्कलुषतायां बहिरपि न प्रसन्नतासम्भवः ॥ तथा

किंनामा ? किंगोत्र: ? 'करसट्टाए'त्ति कस्मै चार्थाय प्रयोजनाय माहनो हिंसानिवृत्त: ? प्रव्रजित इति भाव: । कथं वा प्रतिचरसि सेवसे वृद्धानाचार्यादीन् कथं वा विनीत ? इत्युच्यसे ॥ २०–२१ ॥

सञ्जयमुनिराह—

सञ्जयो नाम नामेण तहा गुत्तेण गोयमो । गद्दभाली ममायरिया विज्जाचरणपारगा ॥ २२ ॥

व्याख्या–'नामेत्यामन्त्रणे' अहं संजयो नाम्ना, तथा गोत्रेण गौतम: । शेषप्रश्नत्रयोत्तरमाह–गर्दभालयो नामानो ममाचार्या विद्याचरणपारगा श्रुतचारित्रपर्यन्तगामिन: । एवं च कथयतस्तस्यायमेवाभिसन्धि: । गर्दभाल्याचार्यैर्जीवघातात् निवर्तितोऽहं तैश्च श्रुतधरैस्तन्निवृत्तौ मुक्तिस्वरूपं फलमभ्यधायि। तदर्थं माहनोऽस्मि । तदुपदेशानुसारतो गुरूनपि प्रतिचरामि । तच्छासनसावधानत्वाद् विनीतश्चेत्यर्थ ॥ २२ ॥

अथ तद्वचनश्रुतिप्रमुदितमना अपृष्टोऽपि क्षत्रियमुनिस्तं प्रति तत्त्वोपदेशमाह—

किरियं अकिरियं विणयं अन्नाणं च महामुणी । एएहिं चेव ठाणेहिं मेयन्ने किं पभासई ॥ २३ ॥

व्याख्या–क्रियाऽस्तीत्येवरूपा, अक्रिया तद्विपरीता, विनयो नमस्करणादि: । 'सर्वत्र लिङ्गव्यत्ययः प्राकृतत्वात्'। अज्ञानं तत्त्वानवगमश्चेति । हे महामुने ! एतै: क्रियाऽऽदिभिश्चतुर्भि: स्थानै कृत्वा 'मेयन्ने'त्ति मेयं प्रमेयं जीवादि

जानन्तीति मेयज्ञाः स्वाभिप्रायकल्पितैः क्रियाऽऽदिभिर्वस्तुपरिच्छेदिन इत्यर्थः । किमिति कुत्सितं प्रभापन्ते, विचाराक्षमत्वात्; तथाहि—ये तावत् क्रियावादिनस्तेऽस्तिक्रियाविशिष्टमात्मानं मन्यमाना अपि विभुरविभुः, कर्ता अकर्ता, मूर्त्तोऽमूर्त्तोऽसावित्याद्येकान्तवादमभ्युपगताः । कुत्सितभाषणं चैतद् युक्त्यागमबाधितत्वात् । तथाहि—विभुत्वाद्यङ्गीकारे तल्लिङ्गभूतचैतन्यस्य सर्वत्रोपलम्भप्रसङ्गः । अङ्गुष्ठपर्वमात्राधिष्ठातृतायां स्वरूपाविभुत्वैकान्ते शरीरव्यापिचैतन्यानुपपत्तिरेवं कर्तृत्वाद्यनुपपत्तिरपि वाच्या । अक्रियावादिनस्त्वस्तिक्रियाविशिष्टमात्मानं नेच्छन्त्येवैतच्चासङ्गततरं प्रत्यक्षादिप्रमाणप्रसिद्धत्वात् तस्य । वैनयिकवादिनस्तु सुर–नृपति–यति–चतुष्पद–पक्षि–मकरादिनमस्करणान्निर्वृत्तिमभ्युपगताः । अन्याय्यं चैतल्लोके समये च गुणाधिकस्यैव विनययोग्यत्वेन प्रसिद्धत्वात्, इतरस्याप्रयोजकत्वात् । अज्ञानवादिनस्तु कीटसङ्ख्यापरिज्ञानतुल्येन किमात्मादिज्ञानेन, तपःप्रभृतिकष्टादेवेष्टसिद्धिरिति प्रतिपन्नाः । इदं चात्यन्तमयुक्तं ज्ञानं विना सत्प्रवृत्तेरप्यनुपपत्तेः । अतः सर्वेऽप्यमी कुत्सितं प्रभापन्त इति स्थितम् । एतद्विस्तरस्तु बृहट्टीकातोऽवसेयः ॥ २३ ॥

न चैतन्मयैवोच्यते, किन्तु—

इइ पाउकरे बुद्धे नायए परिनिव्वुए । विज्जाचरणसंपन्ने सच्चे सच्चपरक्कमे ॥ २४ ॥

व्याख्या—इत्येतत् क्रियादिवादिनः कुत्सितं भापन्त इत्येवं रूपं प्रादुरकार्षीत् प्रकटितवान् बुद्धो ज्ञाततत्त्वः ज्ञात

एव ज्ञातक· क्षत्रिय स चेह प्रस्तावान्महावीर परिनिर्वृत इति कपायाग्निशमनाच्छीतीभूतो विद्या–चरणाभ्यां क्षायिकज्ञान–चारित्राभ्यां सम्पन्नोऽत एव सत्य· सत्यवाक् सत्यपराक्रमोऽवन्ध्यवीर्य इति ॥ २४ ॥

तेषां च फलमाह—

पडति नरए घोरे जे नरा पावकारिणो । दिव्व च गइ गच्छंति चरित्ता धम्ममारिय ॥ २५ ॥

व्याख्या–पतन्ति नरके घोरे ये नरा पापकारिण प्रस्तुतत्वादुन्मार्गप्ररूपणात्मकविधायिन । ये त्वनीदृशास्ते पुनर्दिव्यां गति गच्छन्ति । कि कृत्वा ? चरित्वा आसेव्य धर्मं 'आरियं'ति आर्यं सत्प्ररूपणारूपं ततश्च सत्प्ररूपणापरेणैव भवता भाव्यमित्युपदेशार्थ. ॥ २५ ॥

अमीषां पापकारित्वमुपपादयति—

मायावुइयमेय तु मुसाभासा निरत्थिया । संजममाणो वि अह वसामि इरियामि य ॥ २६ ॥

व्याख्या–मायया शाठ्येन 'वुइयं'ति उक्त मायोक्तम् । एतत् क्रियादिवादिवचनम् । 'तुरवधारणे' ततश्च मायोक्तमेवैतत् । अतश्चैतन्मृषाभाषा निरर्थिका प्रयोजकार्थशून्या । तत एव 'संजममाणो वि'त्ति 'अपिरेवकारार्थ.' ततः सयच्छन्नेव उपरमन्नेव तदुक्त्याकर्णनादिभ्योऽहं वसामि तिष्ठामि 'उपाश्रयादाविति गम्यते' । 'इरियामि'त्ति

ईर्यैव कोऽर्थः ? ईर्यया यामि गच्छामि च गोचरादिष्विति । इह च स्वयं स्वस्वरूपकथनं तन्मनःस्थिरीकरणार्थम् । उक्तं हि—"[1]गुणसुट्ठियस्स वयणं घय-महुसित्त व्व पावउभा" इति ॥ २६ ॥

स्वस्य तद्वचनाकर्णनादिनिवृत्तेः कारणमाह—

सव्वे ते विइया मज्झं मिच्छादिट्ठी अणारिया । विज्जमाणे परे लोगे सम्मं जाणामि अप्पगं ॥ २७ ॥

व्याख्या-सर्वे ते क्रियाऽऽदिवादिनो विदिता मम यथाऽमी मिथ्यादृष्टयोऽत एवानार्या अनार्यकर्मप्रवृत्ताः । कथं विदिता इत्याह-विद्यमाने सति परे लोकेऽत्र जन्मनि सम्यग् जानाम्यात्मानम् । ततः परलोकात्मनोः सम्यग्ज्ञानान्मम ते विदिता अतो मा मिथ्यात्वात् परत्र नरकादिभवभ्रमणं भूयादिति तदुक्त्याकर्णनादिभ्यः संयच्छामीति ॥ २७ ॥

कथं पुनरात्मनः परलोकादिसद्भावं जानासीत्याह—

अहमासि महापाणे जुइमं वाससओवमे । जा सा पाली महापाली दिव्वा वरिससओवमा ॥ २८ ॥
से चुए बंभलोगाओ माणुसं भवमागओ । अप्पणो य परेसिं च आउं जाणे जहा तहा ॥ २९ ॥

१ गुणसुस्थितस्य वचनं घृतमधुसिक्तमिव प्रतिभाति ।

अनयोर्व्याख्या—अहमभूवं महाप्राणे ब्रह्मलोकविमाने द्युतिमान् 'वाससय' त्ति मध्यमपदलोपी समास इति वर्षशतजीविता उपमा यस्य स वर्षशतोपम॰ । यथेदानीं वर्षशतजीवी पूर्णायुरुच्यते, एवमहं तत्र सम्पूर्णायुरभूवम् । तथा हि—या सा पालिरिव पालिर्जीवितजलधारणाद् भवस्थितिः सा च पल्योपमप्रमाणा, महापाली तु सागरोपमप्रमाणा तस्यास्ततो महत्त्वात् । दिवि भवा दिव्या । तथा—"वाससए वाससएक्किके अवहियमि जो कालो" इत्यादिवचनात् केशोद्धारहेतुभिर्वर्षशतैरुपमा 'अर्थात् पल्यविषया' यस्यां सा वर्षशतोपमा । तत्र मम महापाली दिव्या भवस्थिति 'आसीदित्युपस्कार' ॥ 'से' इत्यथ स्थितिक्षये च्युतो ब्रह्मलोकान्मानुष्य भवमागतः । जातिस्मरणातिशयमाख्यायातिशयान्तरमाह—आत्मनश्च परेषां चायुर्जाने यथाऽस्ति तथैव, न त्वन्यथेत्यभिप्राय॰ ॥ २८–२९ ॥

इत्थं प्रसङ्गतः परितोषतश्चापृष्टमपि स्ववृत्तान्तमभिधायोपदेष्टुमाह—

नाणारुइं च छंद च परिवज्जिज्ज संजए । अणट्ठा जे य सवत्था इइ विज्जामणुसंचरे ॥ ३० ॥

व्याख्या—नाना अनेकधा रुचि क्रियैकान्ताद्यभिलापं नानारुचिं छन्दश्च स्वविकल्पिताभिप्रायरूपं परिवर्जयेत् संयतो यतस्तथा । अनर्था निष्प्रयोजना ये च 'व्यापारा इति गम्यते' तानपि सर्वत्र 'वर्जयेदिति सम्बन्धः' । आकारोऽलाक्षणिकः । इत्येवंरूपां विद्यां तत्त्वज्ञानात्मिकामनुलक्षीकृत्य सचरेः संयमाध्वनि यायाः ॥ ३० ॥

---

१ वर्षशते वर्षशतेकैकेऽवहिते य॰ काल. ।

अपि च—

पडिक्कमामि पसिणाणं परमंतेहिं वा पुणो । अहो उट्ठिए अहोरायं इइ विज्जा तवं चरे ॥ ३१ ॥

व्याख्या–प्रतिक्रमामि निवर्ते प्रश्नेभ्यः शुभाशुभसूचकेभ्यो दीपप्रश्नादिभ्यः । तथा परे गृहस्थास्तेषां मन्त्रा गृहकार्यादिपर्यालोचनरूपास्तेभ्यः 'वाशब्दः समुच्चये, पुनर्विशेषणे' एषामतिसावद्यत्वविशिष्टेभ्यः परमन्त्रेभ्यश्च प्रतिक्रमामि । सोपस्कारत्वात् सूत्रस्य य ईदृशाभिप्रायवान् स 'अहो! इति विस्मये' उत्थितो धर्मं प्रत्युद्यतः खलु अहोरात्रमहर्निशं इतीत्येतद् 'विज्ज'त्ति विद्वान् जानन् सन् तप एव चरेरासेवस्व, न तु प्रश्नादिकं सावधारणतया व्याख्येयम् ॥ ३१ ॥

अत्रान्तरे तस्य सातिशयतामवगम्य संजयमुनिनोक्तं ममाप्यायुराख्याहि, ततोऽसावाह—

जं च मे पुच्छसी काले सम्मं सुद्धेण चेयसा । ताइं पाउकरे बुद्धे तं णाणं जिणसासणे ॥ ३२ ॥

व्याख्या–यच्च मां पृच्छसि काले कालविषये सम्यक् शुद्धेन चेतसोपलक्षितः । 'ताइं' ति तत् प्रादुष्कृतवान् प्रकटीकृतवान् बुद्धः सर्वज्ञोऽत एव तज्ज्ञानं जिनशासन एव नान्यत्र दर्शने 'सावधारणत्वाद् वाक्यस्य' अतो जिनशासने यत्नो विधेयो यथा त्वमपि जानीषे इत्यर्थः ॥ ३२ ॥

पुनरुपदेष्टुमाह—

किरियं च रोयए धीरो अकिरियं परिवज्जए । दिट्ठीए दिट्ठिसंपन्नो धम्मं चर सुदुच्चरं ॥ ३३ ॥

व्याख्या—क्रियां चास्ति जीव इत्यादिरूपां रोचयेद् धीरः अक्रियां नास्त्यात्मेत्यादिकां परिवर्जयेत् । ततश्च दृष्ट्या सम्यग्दर्शनात्मिकया उपलक्षितो दृष्ट्या सम्यग्ज्ञानात्मिकया सम्पन्न एवं सम्यग्दर्शनज्ञानान्वित. सन् धर्मं चारित्रधर्मं चर सुदुश्चरमिति ॥ ३३ ॥

अथ पुन क्षत्रियमुनि. संजयमुनि प्रति महापुरुषोदाहरणैर्धर्ममुपदिशन्नाह—

एयं पुण्णं पयं सोच्चा अत्थ–धम्मोवसोहियं । भरहो वि भारहं वासं चिच्चा कामाइ पव्वए ॥ ३४ ॥

व्याख्या—एतदनन्तरोक्तं पुण्यं पुण्यहेतुकं पदं क्रियाऽऽदिस्थापनारूपं नानारुचिवर्जनाद्यावेदकं च शब्दसन्दर्भं श्रुत्वा । अर्थ. स्वर्गापवर्गादि , धर्मस्तदुपायभूतः श्रुतधर्मादिस्ताभ्यामुपशोभितमर्थधर्मोपशोभितम् । भरतोऽपि प्रथमचक्रवर्त्यपि यथावक्ष्यमाणा सगरादयस्तथाऽयमपीत्यर्थ । भारतं वर्षं त्यक्त्वा चशब्दस्याध्याहारात् कामांश्च त्यक्त्वा प्राव्राजीत् । तच्चरित्रोद्देशो यथा—

कोशलायां युगादीशजिनसर्वसुताग्रणी । साम्राज्यं भरतो भेजे मघवेव त्रिविष्टपे ॥ १ ॥

पूर्वजन्मास्खलत्साधुवैयावृत्त्यप्रसादतः । आससाद महाभोगं प्राथम्यं चक्रवर्त्तिनाम् ॥ २ ॥
चतुर्दशमहारत्न–नवसेवधिसंनिधिः । द्वात्रिंशन्मौलिवद्राजसहस्रकृतशासनः ॥ ३ ॥
चतुःषष्टिसहस्रान्तःपुरीभोगमहार्णवे । रममाणो यथाकामं जलद्विप इवान्वहम् ॥ ४ ॥
द्वासप्ततिसहस्रोरुपत्तनादिमहेशताम् । षण्णवतिकोटिमितिग्रामपादात्यवैभवम् ॥ ५ ॥
अभ्यष्टमितिलक्षाणां रथाश्व–करिणामपि । दधत् प्रभुत्वं पट्खण्डभरतेऽप्येकनायकः ॥ ६ ॥
वस्त्रासन–धनान्नाद्यैर्वात्सल्यं समधर्मिणाम् । कुर्वंश्चिरं सिषेवेऽसौ श्रीयुगादिजिनेश्वरम् ॥ ७ ॥
जाते मुक्तिपरीरम्भसुभगेऽथ जगद्विभौ । अष्टापदेऽचले सिंहनिषद्याऽऽख्ये जिनालये ॥ ८ ॥
विश्वश्लाघे चतुर्द्वारे योजनायामशालिनि । त्रिगव्यूतोच्छ्रये रत्नदलैरेव स्वकारिते ॥ ९ ॥
मणीमयमहापीठे देवच्छन्दकवर्तिनः । सिंहासनपरीवारोपकृतिच्छत्रशालिनः ॥ १० ॥
निजवर्णप्रमाणाङ्कसंयुक्तान् स्थापनाऽर्हतः । यथाजिनोपदेशेन स्थापितान् वृषभादिकान् ॥ ११ ॥
वन्दमानोऽर्चयन् भक्त्या शक्त्या तीर्थं प्रभावयन् । शुद्धदृक् पञ्च पूर्वाणां लक्षान् द्रागत्यवाहयत् ॥ १२ ॥
तदा श्रीभरते राज्यं प्राज्यं शासति भूतले । धर्मार्थ–काम–मोक्षाणां काऽपि वृद्धिः पराऽभवत् ॥ १३ ॥
अन्यदा स्फातिमान् स्नातालङ्कृतोऽधिकदीधितिः । नृपतिर्मुकुरागारमगाद् द्रष्टुं वपुःश्रियम् ॥ १४ ॥

पश्यतः स्वाङ्गसौन्दर्यमङ्गुलीतः कथञ्चन । पपात मुद्रिका चक्री राभस्यान्न विवेद ताम् ॥ १५ ॥
क्रमात् तां मुकुरे तादृगुपाधिवियुताङ्गुलीम् । मुडोत्तमाङ्गवन्नि श्रीकां व्यलोकत भूपतिः ॥ १६ ॥
सर्वत्रोपाधिजन्या श्रीरिति प्रत्ययहेतवे । भूधवोऽपनयद् देहादेकैक भूषणं क्रमात् ॥ १७ ॥
निखिलालङ्कृतित्यक्तमात्मान श्रीपरिच्युतम् । लूनपद्म सर इवालोक्य दध्यौ क्षितीश्वरः ॥ १८ ॥
अहो ! वृथाऽभिमानोऽयं मूढानां मोहहेतुक । आगन्तुकद्रव्यकृते सौन्दर्ये काऽवलिप्तता ? ॥ १९ ॥
स्वभावसुन्दरे ह्येकमात्मरूप निरञ्जनम् । अन्यत् सर्वं भवत्येव विपाके वैपरीत्यभाक् ॥ २० ॥
पवित्रं रुचिरं वस्तु यत्सङ्गादितरद् भवेत् । तत्रापि वपुषि भ्रान्त्या कल्पयन्त्यभिरामताम् ॥ २१ ॥
तदेतस्याकृतज्ञस्य शर्मणे पापकर्मभि । जन्म व्यर्थयितु युक्तं न तत्त्वज्ञानिनो मम ॥ २२ ॥
षट्खण्डभरतैश्वर्यं यद्यप्याप्तमरिक्षयात् । ततः किं ?, परमैश्वर्यं नाप्यं मोहक्षयं विना ॥ २३ ॥
किञ्च– रे रे पश्यत पश्यतेह चरितं किञ्चिज्जनस्याद्भुतं, अन्धस्येक्षणशालिनोऽपि विदतोऽपि भ्रान्तिमच्चेतसः ।
यद्यत्रात्मनि रागतः सुखमुरु स्यात् तत्र न प्रीतिमान् यस्मिन् दृष्टिगतेऽपि नास्ति कुशलं तं गाढमालिङ्गति॥२४॥
इत्यादि चिन्तयाऽऽयातसच्चारित्राभिसन्धितः । वर्धमानशुभध्यानाद् भरतोऽजनि केवली ॥ २५ ॥
अथ श्रीशक्रविज्ञप्तो व्यवहारमनुस्पृशन् । पञ्चमौष्टिकमाधत्त लोचं स्वेनैव पाणिना ॥ २६ ॥

सहस्रैर्दशभी राज्ञां सहितो भावलिङ्ग्यपि । प्रव्रज्यामग्रहीच्छक्रोपनीतद्रव्यलिङ्गभृत् ॥ २७ ॥
लक्षपूर्वी केवलित्वे पर्याये सोऽत्यवाहयत् । नैका विहारव्याहारैर्जनताः प्रत्यबूबुधत् ॥ २८ ॥
आदित्ययशःप्रमुखास्ततश्चाष्टौ तदङ्गजाः । भोजं भोजं महीराज्यं धृत्वा मुकुटमार्षभम् ॥ २९ ॥
तथैव केवलं प्राप्य प्रबोध्य भविकान् जनान् । प्रापुश्च परमानन्दं निर्वृत्ते भरते क्रमात् ॥ ३० ॥

॥ इति भरतचरित्रम् ॥ ३४ ॥

तथा—

सगरो वि सागरंतं भरहवासं नराहिवो । इस्सरियं केवलं हिच्चा दयाए परिनिव्वुडो ॥ ३५ ॥

व्याख्या—सगरोऽपि द्वितीयश्चक्र्यपि सागरान्तं समुद्रपर्यन्तं पूर्वादिदिग्त्रये । उत्तरस्यां हिमवदन्तं भारतवर्षं भरतक्षेत्रं नराधिपः राजा । ऐश्वर्यं च केवलं परिपूर्णं हित्वा त्यक्त्वा दयया संयमेन परिनिर्वृत्तो मुक्तः । तथाहि—

श्रीयुगादिप्रभोर्वंशे कोशलायामिलापतिः । जितशत्रुः प्रतापाग्निदग्धशत्रुपतङ्गकः ॥ १ ॥
रूप-लावण्य-सौभाग्य-सम्पदामस्ति सेवधिः । विजयेति जगत्ख्याता कान्ताऽस्यान्तःपुराग्रणीः ॥ २ ॥
तत्कुक्षिभूः सुवर्णाङ्गः सिन्धुराङ्को जगत्पतिः । विश्वप्रदीपो द्वितीयो जिनोऽभूदजितः सुतः ॥ ३ ॥
युवराजोऽनुजो राज्ञः सुमित्रविजयाह्वयः । पुत्रो यशोमतीकुक्षिभूस्तस्य सगराभिधः ॥ ४ ॥

गजादिस्वप्ननिर्णीतचक्रिभोगो महाभुजः । समर्थोऽप्यजितस्वामिसेवायां स्वमलीनयत् ॥ ५ ॥
तौ प्राप्तपुण्यतारुण्यौ नैका भूमीश्वराङ्गजा. । वल्लभाः परिणिन्याते तथा च सुखमासतु. ॥ ६ ॥
वैजयेयस्य साम्राज्यं दत्त्वोपादितसानुज. । नृपति. संयमैश्वर्यमैक्ष्वाकूणां ह्ययं क्रम. ॥ ७ ॥
षट्खण्डमात्रनियतशासनं चक्रवर्त्तिनाम् । एकाकारं त्रिलोकेऽपि तदभूदजितप्रभो. ॥ ८ ॥
स्वय यमक्षणे क्षीणमोहो राज्यधुराधरम् । प्रभु. श्रीसगरं कृत्वा निष्क्रान्तो जगदर्चित· ॥ ९ ॥
सगरोऽपि समुत्पन्नचक्राद्यखिलसाधनः । षट्खण्डभरताधीशश्चक्रवर्त्ती क्रमादभूत् ॥ १० ॥
तस्य जह्नुकुमाराद्या वीरा. शूरा. प्रतापिन. । षष्टि सहस्रा. पुत्राणामजायन्त जयोद्धुरा ॥ ११ ॥
स तै. परिवृत. पुत्रैर्मूर्त्तैर्वीररसैरिव । न दुष्करं जगज्जेतुं सेन्द्रासुरममन्यत ॥ १२ ॥
स्वभ्यस्तां कामपि कलामन्यदा वीक्ष्य भूप्रभु· । स्वैरं वरं वृणीष्वेति जह्नुमाह वृहत्सुतम् ॥ १३ ॥
सोऽपि बद्धाञ्जलि· प्रोचेऽभिलापोऽसौ मम प्रभो ! । पश्याम्यहं महीपीठ सबन्धु. सर्वरत्नयुक् ॥ १४ ॥
सुतवाक्यं महीनाथ. प्रीत्यैव प्रत्यपद्यत । स्कन्धावारमुपादाय निर्जगाम शुभक्षणे ॥ १५ ॥
चक्रिरत्नान्युपादाय यात्यस्मिन् ससहोदरे । क्षोभं क्षोण्यखिला लेभे बालेव प्रौढसङ्गमात् ॥ १६ ॥
महीं जनपद–ग्राम–नगराकर–काननाम् । सरो–गिरि–सरिच्छ्रेणी ददर्शासौ सकौतुक ॥ १७ ॥

उपाष्टापदमायातस्तस्य स्फाटिकदीधितेः । रामणीयकमालोक्य जन्म मेने तदैव सः ॥ १८ ॥
सैन्यमस्य निवेश्याधः सतन्त्रोऽसौ तमारुहत् । अपश्यत् फुल्लनेत्राब्जश्चैत्यं भरतकारितम् ॥ १९ ॥
स्वर्ण–चन्द्रार्क–रत्नादिपुद्गलैरिव निर्मिते । यथोक्तं तत्र जैनानि बिम्बान्यानर्च शुद्धिमान् ॥ २० ॥
हृष्टोऽथामात्यमापृच्छद् धन्यः श्रीभरतेश्वरः । येनेदृशे महादुर्गे चिरस्थायि यशः कृतम् ॥ २१ ॥
शैलः कोऽपीदृशोऽस्त्यन्यः सर्वद्रष्टव्यभाजनम् । कारयामो वयं यत्र पवित्रं चैत्यमीदृशम् ॥ २२ ॥
भवेज्जन्म–रमा–बुद्धिसाफल्यं सुस्थिरं यशः । पुण्यवृद्धिः स्व–परयोरिति चैत्यफलं विदुः ॥ २३ ॥
नियुक्तैरथ सर्वाऽपि चरैरुर्वी गवेषिता । सूर्यात् परः प्रकाशीव ददृशे नेदृशो गिरिः ॥ २४ ॥
जह्नुमाह ततोऽमात्य आभिजात्ययुजा गिरा । निश्चितं नः पुराऽपीदं पदं नेदंनिदं क्वचित् ॥ २५ ॥
तच्चैत्यस्यास्य रक्षायां यतध्वं क्रमशो नराः । कालदोषाद् भविष्यन्ति लुब्धाः प्रायोऽविवेकिनः ॥ २६ ॥
तन्नूतनकारणात् पूर्वचैत्यादेः पालनं वरम् । यशः–कीर्त्यनपेक्षैव यदत्र विशदा मतिः ॥ २७ ॥
इति श्रुत्वाऽथ दण्डेन पातयित्वाऽस्य भूभृतः । नितम्ब–दन्त–शृङ्गाद्यमष्टसोपानता कृता ॥ २८ ॥
एतावता न दुर्गत्वं तादृशं प्रतिभासते । परिकैलासमिति तैरखानि परिखा क्षणात् ॥ २९ ॥
चक्रभृन्नन्दनौजोभिर्दण्डरत्नं तदाऽस्फुरत् । आयोजनसहस्रान्तं विभेद जगतीतलम् ॥ ३० ॥

जर्जरीभूतभूपिण्डनिर्घातागतधूलिभिः । आकुलाऽभूत् तले नागकुमारनगरी तदा ॥ ३१ ॥
नागेश्वरोऽप्यदो ज्ञात्वाऽवधिसम्बन्धबन्धुरः । विस्मितोऽमितकोपाग्निरागादुपनृपाङ्गजम् ॥ ३२ ॥
अवादीदक्षरद्रूक्षाक्षर रक्तेक्षणक्षणम् । महीं विभिद्य किं मत्तैर्नागपुर्युपद्रुद्रुवे ? ॥ ३३ ॥
बलमात्मवधायैव नूनं वो वेधसा कृतम् । निजपक्षबलादेव पतङ्गो ह्यनलं विशेत् ॥ ३४ ॥
चक्रवर्त्तिसुतत्वेनोज्जृम्भन्तां स्वेच्छया भुवि । पातालखननं यत् तद् वितथं स्वध्वंसकारणम् ॥ ३५ ॥
अथावक् प्राञ्जलिर्जह्नुकुमारो नागनायकम् । मा कुप्योऽस्मासु यन्नादश्चक्रे वस्तापहेतवे ॥ ३६ ॥
अष्टापदमहातीर्थरक्षायै परिखा कृता । यत् कृतं तत् कृतं नाथ करिष्याम इतोऽधिकम् ॥ ३७ ॥
विपह्यमेकशो ह्याग इति नागाधिपे गते । ज्येष्ठः प्राह क्षणं स्थित्वाऽवरजान् वरजात्यगीः ॥ ३८ ॥
परिखैषा रजःपूरैः कालतः पूरयिष्यते । पूरयामस्तदम्भोभिः कार्ये दार्ढ्यं हि शस्यते ॥ ३९ ॥
ततस्तैर्दण्डरत्नेन प्रणाल्या कृतया जलम् । विभिद्य गङ्गामानीय खातिकां तामपूरयन् ॥ ४० ॥
उच्छलल्लोलकल्लोलं परितोऽष्टापदं जलम् । परिखामप्यतिक्रम्य चचले जलराशिवत् ॥ ४१ ॥
यथा पूर्वं रजः पेते तथा तन्नागवेश्मसु । पपात सुतरां नीरं भेदकेभ्यो हि भेदकम् ॥ ४२ ॥
नाग—नागीकुलं तत्र जलेऽथ जलजन्तुवत् । तरद् वीक्ष्य पुनर्दत्तावधिर्नागविभुर्जगौ ॥ ४३ ॥

यदि पापात्मनां तेषामागो मृषितमेकशः । ततोऽधिकमुपद्रोतुं धिगेभिरुपचक्रमे ॥ ४४ ॥
दुर्जनानामुपशमो दण्डैरेव न सामभिः । मधुरैनौषधैर्यान्ति दुःसाध्यव्याधयो नृणाम् ॥ ४५ ॥
पीडयित्वा परान् जन्तून् यत् किञ्चित् सुकृतार्जनम् । पापार्जनं तत्त्वतस्तन्मांस–मद्यादिदानवत् ॥ ४६ ॥
इत्यधिक्रोधसम्बन्धबाध्यमानकृपारसः । आहूय दृग्विषान् नागानिति निःशङ्कमादिशत् ॥ ४७ ॥
सगराङ्गभुवां षष्टिं सहस्रानपि नेत्रजैः । अह्नाय वह्निभिर्भस्मीभूतान् कुरुत लीलया ॥ ४८ ॥
तैरप्यादेशतत्कालं निःसृत्यैते महोरगैः । नामैकशेषतां नीता नेत्राग्निविषयीकृताः ॥ ४९ ॥
ईदृश्युत्पातसम्पाते शोचनैस्तत्परिग्रहैः । रोदनाक्रन्द–दैन्यानामद्वैतमिव निर्ममे ॥ ५० ॥
प्रभग्नवलये तेषामवरोधाङ्गनाजने । अविश्रान्तं प्रलपति क्षणज्ञो मन्त्र्यवोचत ॥ ५१ ॥
इदं दैवकृतं किञ्चिदाकस्मिकमचिन्तितम् । अशक्यैकप्रतीकारमिदानीं जातमश्रुतम् ॥ ५२ ॥
एकोऽप्येषां न जेयः स्यादिन्द्राद्यैर्मिलितैरपि । युगपत् तेऽहिभिर्दग्धाः पूत्कुर्मः ननु किम्पुरः ? ॥ ५३ ॥
दारुणत्वं परीणामे संसारस्य यदुच्यते । व्यलोकि तदिदं साक्षादाप्तोक्ता ह्यन्यथा न गीः ॥ ५४ ॥
अयं दैवपरीणामः केनापि हि न शक्यते । निवारयितुमागच्छन् तत् किं निष्फलया शुचा ? ॥ ५५ ॥
न शोकविषयाः कर्तुं युज्यन्ते ते कुमारकाः । यत् ते यशःशरीरेण जीवन्ति सुकृतार्जनात् ॥ ५६ ॥

इत्यादिनाऽथ सस्थाप्यामाध्यस्थ्ये शोचकं जनम् । उद्दिश्य कोशला सैन्य प्रयाणकमकारयत् ॥ ५७ ॥
तददूरपदं प्राप्ते क्रमात् सामन्त–मन्त्रिभिः । पर्यालोचीदमन्योऽन्यं लज्जा–शोक–भयाकुलै. ॥ ५८ ॥
महाराज· कथं दृश्यस्तस्य दर्श्यं कथं मुखम् ? । यत् कुमारान् विना नैक कोऽपि दग्धो महाहिभि· ॥ ५९ ॥
अरेऽहिभि· कुमारेषु दह्यमानेषु निष्कृपम् । कृतश्चैर्नियतत्वेन स्वस्वात्मोद्धारित· कथम् ? ॥ ६० ॥
प्रज्वाल्य मद्भुजव्यूह स्वदोश्चक्रं निरर्थकम् । सहानीय मुखं स्वीयं दर्शयन्तो न लज्जथ ? ॥ ६१ ॥
आयातैरपि युष्माभि· किं साध्यं कुमरोज्झितै· ? । भक्तत्वमपि नाज्ञापि ही ! केनाप्यग्निसेवनात् ॥ ६२ ॥
इदं निरर्गलं जल्पन् केन वार्य क्षितीश्वरः ? । इदानीमपि तत् सेव्यो वह्निर्गत्यन्तरं विना ॥ ६३ ॥ (चतुर्भिः कलापकम्)
इत· कोऽपि द्विजस्तत्रोपसृत्यैतानभाषत । ज्ञाततादृग्व्यतिकरश्चातुरीपरिकीर्णवाक् ॥ ६४ ॥
अनेनालं विषादेनास्मि प्राग् ज्ञापयिता नृपम् । ततो निवेद्यं युष्माभिर्न भेतव्यं क्षितीश्वरात् ॥ ६५ ॥
इत्युदित्वैष निर्नाथशवमादाय चक्रिण· । सौधद्वारमगाद् 'मुष्टो मुष्टो मुष्ट' इत्युच्चरन् ॥ ६६ ॥
कृपोद्दीपनमाकर्ण्य तदाक्रन्द धराधवः । विप्रमाहूय पप्रच्छ केन मुष्टोऽतिदु ख्यसि ? ॥ ६७ ॥
द्विजोऽथ दैन्ययुक् प्राख्यदेक एवायमात्मजः । दैवाद् दष्टोऽहिना देव ! मृतस्तं प्राणय प्रभो ! ॥ ६८ ॥

समर्थोऽसि जगत्त्राणे निराधारोऽस्मि सर्वथा । तद् देहि सुतभिक्षां मे किमसाध्यं भवादृशाम् ? ॥ ६९ ॥
इतस्ते मन्त्रि-सामन्ता भूपमानम्य संसदि । निविष्टा एत्य चक्री च दिदेश भिषजस्तदा ॥ ७० ॥
उपायशतमाधाय निर्विषं विप्रनन्दनम् । कुरुध्वं तेऽपि तद्वृत्तज्ञातारो नृपमूचिरे ॥ ७१ ॥
यत्र कोऽपि मृतो नाज्ञी भूतिं यदि ततः कुलात् । आनयत्येष भूदेवः स्यात् सज्जोऽस्य सुतस्तदा ॥ ७२ ॥
सर्वां पुरीं परिभ्रम्य विप्रः प्राप्तोऽवदन्नृपम् । सहस्रशो हि जातानि मरणानि गृहे गृहे ॥ ७३ ॥
ततः क तादृशी भूतिर्लभ्येत्यथ नृपोऽवदत् । सर्वसाधारणे मृत्यौ तदियत् किमु शोचसि ? ॥ ७४ ॥
स हि कोऽप्यस्ति संसारे मृत्युना यो न जग्रसे ? । तत् किं विज्ञाततत्त्वोऽपि त्वमेकः परिताम्यसि ? ॥ ७५ ॥
देव ! सत्यमिदं वेद्मि परमेकं सुतं विना । क्षीण एवाधुना वंशः किञ्चित् प्रतिकुरुष्व तत् ॥ ७६ ॥
तेनेत्युक्तेऽवदच्चक्री तपस्विन् ! विधिनिर्मितम् । हरिणा चक्रिणा मन्त्रैः शस्त्रैरपि न वार्यते ॥ ७७ ॥
मूर्ख एव हि शोकेन स्वमात्मानं विमिश्रयेत् । कृतेऽपि बहुशः शोके मृतो यन्न निवर्तते ॥ ७८ ॥
प्रहरन् शक्यते वीरः प्रहर्तुं दृष्टिगोचरः । अदृष्टे वैरिणि विधौ कः कुर्यात् पौरुषं भटः ? ॥ ७९ ॥
परस्मै सुखमुच्यन्ते वैराग्यजनिका गिरः । त्वयाऽपि न प्रभो ! शोच्यं यदेवमसि तत्त्ववित् ॥ ८० ॥
असम्भाव्यं यतः शोककारणं किञ्चिदस्ति ते । इति विप्रवचः श्रुत्वा किं किमित्याह भूपतिः ॥ ८१ ॥

तत सोऽप्याह निर्नाथं सैन्यमेतदुपागतम् । षष्टिं सुतसहस्रांस्तु कालोऽकवलयत् क्षणात् ॥ ८२ ॥
अस्माद् वज्रानलप्रायादक्षरश्रवणान्नृप. । पपाताधृतचैतन्य' पृथ्व्या सिंहासनाल्लुठन् ॥ ८३ ॥
कथञ्चिदासचैतन्यो चिरराम न रोदनात् । पिशाचकीव बहुशो व्यलपन्मुक्तकुन्तल' ॥ ८४ ॥
रे पाप्मन् ! दैव ! हरता युगपन्मम बालकान् । दुष्पूरोदरमापूरि नादाता किं परानतः ? ॥ ८५ ॥
समकालपतत्सर्वपुत्रमृत्युमहाशनि. । न सञ्जहार यदि मां न ममाथ मृति. क्वचित् ? ॥ ८६ ॥
मध्ये षष्टिसहस्राणां न ह्येकोऽप्युद्धृत सुत । हहा ! किमचलम्नेन सस्थाप्यं हृदयं मया ? ॥ ८७ ॥
इति पूत्कृत्य पूत्कृत्य रोदिति क्षितिवल्लभे । बभाण ब्राह्मणो शुक्त्वा प्रस्तुतोपशमोचितम् ॥ ८८ ॥
क्वेदृशं मज्जनं शोके उपदेश क्व तादृश' ? । क्व तादृक् तत्त्वविज्ञानं क्वेदृशी मूढता हहा ! ॥ ८९ ॥
परापदि सुखं लोक. संसारानित्यतां वदेत् । स्वबन्धुमरणे चित्रं जह्यात् सर्वोऽपि धीरताम् ॥ ९० ॥
एकस्यापि हि पुत्रस्य मृत्यु सोढु न शक्यते । यत्तु षष्टिसहस्राणां समं तदतिदुःसहम् ॥ ९१ ॥
सन्त एव सहा. सोढुं व्यसनं किन्तु गुर्वपि । उर्व्येव सहते वज्रपातं न तु तृणोच्चयः ॥ ९२ ॥
धैर्यमाश्रय सत्त्वमात्मारामं विचारय । त्वं किं मुह्यसि दोषघ्न ! श्रुताजितजिनेन्द्रगी. ॥ ९३ ॥
पुत्रादीष्टवियोगो हि मूढानां शोकसाधनम् । मोहान्तर्हितवैराग्यव्यञ्जकस्तु मनस्विनाम् ॥ ९४ ॥

विप्रेणेत्युक्तिविन्यासैरल्पशोके कृते नृपे । तैरप्यमात्य–सामन्तैर्यथावृत्तं न्यवेद्यत ॥ ९५ ॥
प्रधानगुरुभिर्वृद्धैर्धीरितश्च क्रमादसौ । कर्तव्यमुचितं सर्वं चक्रे सत्त्ववदग्रणीः ॥ ९६ ॥
इतश्चाष्टापदोपान्तवासिभिर्ज्ञापिते जनैः । परिखोद्भेदिभिर्नीरैर्जाते नीवृदुपप्लवे ॥ ९७ ॥
निजान्वयाम्बरे पूषा जह्नुजातो भगीरथः । निवृत्त्यै तदुपद्रुत्याः समादिश्यत चक्रिणा ॥ ९८ ॥
सोऽप्युपाष्टापदं गत्वाऽष्टमं कृत्वोरगेश्वरम् । आराध्य प्रकटीभूतं तच्चिन्तितममार्गयत् ॥ ९९ ॥
सोऽप्याह नय दण्डेन गङ्गां प्राचीपयोनिधिम् । उपद्रवकृतो वार्यो मयेत्याख्याय सोऽगमत् ॥ १०० ॥
ततो नागबलिं कृत्वा गिरीन् दण्डेन चूर्णयन् । गङ्गाप्रवाहमाकृष्य पूर्वाम्भोधावमेलयत् ॥ १०१ ॥
आत्तानेकनदीवृन्दः स यत्राविशदम्बुधिम् । गङ्गासागर इत्याख्यं तत् तीर्थं तत्र पप्रथे ॥ १०२ ॥
पूर्वं हि जह्नुनाऽऽकृष्टा गङ्गाऽभूदिति जाह्नवी । भगीरथाब्धिं नीतत्वादासीद् भागीरथीति च ॥ १०३ ॥
कृतकृत्यः क्रमात् पौत्रः पितामहमुपागमत् । सत्कृत्य कृत्यवित् पट्टे निजेऽस्थापयदञ्जसा ॥ १०४ ॥
स्वयं त्वजिततीर्थेशप्रसादादाप्य संयमम् । कृतकर्मक्षयः सिद्धिसौधमध्यास शाश्वतम् ॥ १०५ ॥
भगीरथोऽन्यदाऽपृच्छत् सर्वज्ञं युगपन्मृतेः । कारणं किं कुमाराणामित्याह भगवानपि ॥ १०६ ॥
सङ्घः पल्लीपरिसरग्रामं प्राप्तः पुरा महान् । श्रीसम्मेतमहातीर्थनमस्यायै व्रजन् क्रमात् ॥ १०७ ॥

अनार्यै. परतस्तत्र मिलित्वाऽयमुपद्रुत । आक्रोश–निन्दनाघातैर्धनाद्युद्दालनैरपि ॥ १०८ ॥
तत्प्रत्ययमघं कर्म बद्धं तैरपि चिक्कणम् । तत्रैककुम्भकारस्तु लुण्टतस्तानवारयत् ॥ १०९ ॥
अथ सङ्घेऽमतो याते प्रक्रान्तसुकृतोत्सुके । क्वचित् प्रजापतौ तस्मिन् गते ज्ञातिनिमन्त्रिते ॥ ११०॥
राज्ञस्तद्ग्रामचौरेण लक्ष्मीवेश्मनि लुण्टिते । निरुद्धद्वारमज्वालि ग्रामोऽसौ तत्क्षणं भटै. ॥ १११ ॥
तस्मिन् जनसहस्राणां षष्टिरेकपदे मृता । क्वचित् कौद्रविकात्वेन जाता वर्षासु कानने ॥ ११२ ॥
करी तेन पथा गच्छन्नमर्दयदिमा क्षणात् । सङ्घोपद्रवपापेनाभ्रमन्नानाकुयोनिषु ॥ ११३ ॥
अनन्तरभवे किञ्चित् कृत्वा पुण्यं तथाविधम् । षष्ट्यङ्गजसहस्रत्वं लेभिरे सगरेशितुः ॥ ११४ ॥
सामुदायिकतत्कर्मशेषाद् युगपदाप्नुवन् । मृत्युं तेऽपि हि सेत्स्यन्ति चैत्यरक्षोत्थपुण्यत. ॥ ११५ ॥
स कुम्भकृत् क्वचित् ग्रामे मृतो भूत्वा धनी वणिक् । तदा सुकृतकर्मा सोऽभून्नृपोऽनन्तरे भवे ॥ ११६ ॥
भुक्तभोग परिव्रज्यां स प्रपद्य दिव गत । ततश्च्युतो जह्नुसुतो राजाऽभूस्त्व भगीरथ. ॥ ११७ ॥
चक्रिपौत्र इदं श्रुत्वा स्वयं जिनवरोदितम् । सुश्राद्धधर्ममादाय चिरं साम्राज्यमन्वशात् ॥ ११८ ॥
इति सगरचरित्रं मोहतार्णकदात्रं श्रुतिपथमवतार्य स्वादु चित्तेऽवधार्य ।
किमपि तदिह कृत्यं कृत्यमत्यन्ततुल्य शिवसुखपरिरम्भ. स्यादत क्षीणदम्भ. ॥ ११९ ॥

॥ इति सगरचरित्रम् ॥ ३५ ॥

चइत्ता भारहं वासं चक्कवट्टी महड्ढिओ। पव्वज्जामब्भुवगओ मघवं नाम महाजसो ॥ ३६ ॥

त्यक्त्वा भारतं क्षेत्रं चक्रवर्त्तिर्महर्द्धिकः प्रव्रज्यामभ्युपगतः प्राप्तः मघवा नामा महायशा इति सुगमम्।

तच्चरित्रोद्देशस्तु—

श्रावस्त्यां पुरि सत्समुद्रविजयक्ष्मापान्वये भानुमान् श्रीभद्रोदररत्नभूधरमणिः चक्री तृतीयो महान्।
साम्राज्यं मघवा विमुच्य विपुलं लात्वोत्तमं संयमं सोऽपि प्राप सनत्कुमारतविषं ज्ञान–क्रियाऽभ्युद्यतः ॥३६॥

सणंकुमारो मणुस्सिंदो चक्कवट्टी महड्ढिओ। पुत्तं रज्जे ठवेऊणं सो वि राया तवं चरे ॥ ३७ ॥

सनत्कुमारनामा मनुष्येन्द्रो मनुष्येषु इन्द्र इवेन्द्रः चक्रवर्त्तिर्महर्द्धिकः पुत्रं राज्ये स्थापयित्वा सोऽपि राजा तपः चरेदकरोदिति सुगमम्। अथ सनत्कुमारचरित्रम्—

कुरुजाङ्गलदेशालङ्कारे गजपुरे पुरे। कुरुवंशावतंसः श्रीअश्वसेनोऽभवन्नृपः ॥ १ ॥
सौख्यकामगवी कामं सहदेवीति तत्प्रिया। चतुर्दशमहास्वप्नसूचितस्तत्सुतोऽजनि ॥ २ ॥
सनत्कुमार इत्याख्यश्चक्रित्वोचितभाग्यवान्। बाल्यादपि समभ्यस्तकलस्तारुण्यमाश्रयत् ॥ ३ ॥
महेन्द्रसिंह इत्यस्य निर्विशेषमनाः सुहृत्। पांशुक्रीडा–कलादाने व्यतिरेकं न योऽभजत् ॥ ४ ॥

शुष्पकालेऽन्यदोद्यानं राज्ञि क्रीडार्थमागते । हयं जलधिकल्लोलं कुमारः स्फारमारुहत् ॥ ५ ॥
सुता क्षितिभृतोऽन्येऽपि स्वं स्वमर्वन्तमाश्रिताः । समं वाहयितुं लग्ना जगदाश्चर्यकारिणः ॥ ६ ॥
वक्रशिक्ष कुमाराश्वस्तथा पञ्चमधारया । त्वरितं गन्तुमारेभे यथा प्रापददृश्यताम् ॥ ७ ॥
ससैन्यः केटके तस्य लग्न' क्षोणीभृदाकुल. । इत प्रचण्डवातोऽश्वक्रमाध्वानमभञ्जयत् ॥ ८ ॥
अथो महेन्द्रसिंहेन तद्वियोगविषादिना । व्यज्ञपि क्ष्माभृदानेताऽस्मीदानीमेव त प्रभो ! ॥ ९ ॥
निवर्तता महाराज इत्युक्त्या वलिते नृपे । स साहसी सुहृच्छुध्यै विवेशारण्यमुद्भ्रमन् ॥ १० ॥
वर्षप्रान्ते क्वचित् सारकासारोपान्तसस्थितम् । तरुणीश्रेणिमध्यस्थं स वीक्षामास भूपजम् ॥ ११ ॥
चिर व्यकल्पयत् कार्यं कुमारस्तरुणीवृत' । विभ्रम कोऽप्यसौ मेऽस्ति किं वा सत्यमिदं भवेत् ? ॥ १२ ॥
इति दोलायमानेऽस्मिन्नुच्चैरूचेऽथ वन्दिना । विश्वाधार ! कुमाराश्वसेनवंशरवे ! जय ॥ १३ ॥
श्रुत्वेति क्षीणसन्देह' प्राप्तकिञ्चिद्रसान्तरम् । कुमारदृक्पथं गत्वा यावदस्थात् क्षणं सुहृत् ॥ १४ ॥
उपलक्ष्य क्षणादेनमभ्युत्थाय नृपाङ्गभू' । उत्थाप्य पादपतितमालिङ्ग्योपन्यवीविशत् ॥ १५ ॥
कृत्वैकान्तमपृच्छचानन्दोच्छ्वसितकण्टकः । कथं मित्र ! त्वमेकाकी महारण्यमिदं श्रित' ? ॥ १६ ॥
कथमत्रासि विज्ञातो गुरुरम्बा च सौख्यभाक् । आख्यन्महेन्द्रसिंहोऽपि सर्वमस्य यथास्थितम् ॥ १७ ॥

वरविद्याधरस्त्रीभिर्मज्जितो भोजितोऽपि च । कुमारं ज्ञातवृत्तान्तमपृच्छत् स्वच्छमानसः ॥ १८ ॥
न हि स्वयं निजां ख्यातिं कुर्वते सज्जना इति । निजां वकुलमत्याख्यां तदर्थं त्वादिशत् प्रियाम् ॥ १९ ॥
रतिवेश्म स्वयं गत्वा प्रसुप्तो व्याजनिद्रया । विद्यया साऽपि विज्ञाय कौमारं चरितं जगौ ॥ २० ॥
तेनाश्वेन तदा वन्यामार्यपुत्रः प्रवेशितः । श्रान्ते तस्मिन् मृते नीरकृतेऽसौ वनमभ्रमत् ॥ २१ ॥
सुकोमलतनुर्ग्रीष्मे दीर्घाध्वातर्षधर्षितः । अनाप्नुवन् जलं सप्तच्छदच्छायां क्षणं श्रितः ॥ २२ ॥
मूर्च्छाविलुप्तचैतन्यस्तत्रास्ते क्षितितल्पगः । तावत् तत्पुण्याकृष्टेन यक्षेणैतद्द्रुवासिना ॥ २३ ॥
सिक्तो जलेन सर्वाङ्गमयमावृत्तचेतनः । पपौ तदुपनीताम्बु तुष्टश्चैनमथावदत् ॥ २४ ॥
कस्त्वं कुत इदं नीरमत्यन्तस्वादु शीतलम् ? । स प्राहात्रत्ययक्षोऽहमम्ब्वानीतं च मानसात् ॥ २५ ॥
आचचक्षे कुमारस्तं मां नेहि लघु मानसम् । तत्र चाद्भुतमीक्षित्वा स्नात्वा सन्तोषमादधे ॥ २६ ॥
उक्त्यनन्तरमेवासौ नीतो यक्षेण तत् सरः । मराल–कमलारामरम्यं दृष्ट्वैव पिप्रिये ॥ २७ ॥
स्वैरं मज्जनमाधाय यावत् तटमियाय सः । असिताक्षाभिधो यक्षस्तावत् प्रादुरभूत् पुरः ॥ २८ ॥
व्यसनस्थोऽयमेकाकी कुमार इति दुष्टधीः । प्राग्भवारिः कुमारेण नियोद्धुमुपचक्रमे ॥ २९ ॥
मरुद्भिः क्षुभितो नैष तन्मुक्तैर्गिरिभञ्जनैः । पिशाचैर्दहनाकारैर्न च भीतो मनागपि ॥ ३० ॥

अत्रोटयन्नागपाश तत्कृतं जीर्णरज्जुवत् । तन्मुक्तमुद्गरं मुष्टिघातेन द्रागचूर्णयत् ॥ ३१ ॥
अपसार्य गिरिं यक्षमुक्त दोर्भ्यां च वक्षस. । असौ पराक्रमी बाहुयुद्धेन तमखेदयत् ॥ ३२ ॥
देव इत्याप न मृतिं मृताभासः परं क्षणात् । मुक्त्वा राटिमसौ नष्टः कुमारकरपीडित. ॥ ३३ ॥
ववर्ष खचरश्रेणि. कौतुकालोकमागता । यक्षजेतु कुमारस्योत्तमाङ्गे कुसुमोच्चयम् ॥ ३४ ॥
विजित्य राक्षस यावदेषोऽगादनु पश्चिमम् । कियद् भुवोऽन्तरे तावदपश्यन्नन्दन वनम् ॥ ३५ ॥
तन्मध्येऽष्टौ दिशा कन्या इव सौभाग्यभाजनम् । स्निग्ध ददर्श विद्याभृत्कनीर्गुणकरण्डिका. ॥ ३६ ॥
नन्वरण्येऽत्र का एता इत्युपसृत्य पृष्टवान् । यूय का कस्य नन्दिन्यस्ता अप्यूचुरिति प्रियम् ॥ ३७ ॥
अद्य नः सुकृत किञ्चिदूर्जस्वि स्फुटमस्ति यत् । स्वदर्शनेन नेत्राणामातिथेयं त्वया कृतम् ॥ ३८ ॥
इतोऽस्ति नातिदूरे पूरस्माक प्रियसङ्गमा । तत्र गत्वा भज स्वास्थ्य स्वयं ज्ञाताऽखिलं क्रमात् ॥ ३९ ॥
कुमारस्ताभिरित्युक्तेऽचलत् तद्दर्शिताध्वना । सन्ध्यायां ता पुरीमाप सर्वस्वमिव सम्पदाम् ॥ ४० ॥
कन्याज्ञापितवृत्तान्तो भूपस्तं ससदागतम् । सत्कृत्य भानुवेगाख्य' स्नेहान्वितमिदं जगौ ॥ ४१ ॥
अलं चर्चाभिरन्याभिर्ममाष्टावङ्गुता सुता. । तद्योग्यपतिलाभेऽह चिन्तया व्याकुलोऽभवम् ॥ ४२ ॥
जेताऽसिताख्ययक्षस्यैतासां भावी वरो वर. । इत्यर्चिमालिनाऽभाणि मुनिना ज्ञानिना पुरा ॥ ४३ ॥

तदुद्वहैताः साफल्यमस्त्वासां जन्मनस्त्वया । इत्याग्रह्यार्यपुत्रेण विभूत्या ता व्यवाहयत् ॥ ४४ ॥
आमुक्तकङ्कणः सुष्वापैताभिर्वासवेश्मनि । प्रबुद्धः प्रातरद्राक्षीत् स्वमरण्येऽद्वितीयकम् ॥ ४५ ॥
स्वप्नायमानवीवाहो निर्विषादमनाः पुरः । गिरिशीर्षे मणि–स्वर्णमयमैक्षिष्ट मन्दिरम् ॥ ४६ ॥
प्रागिवेयमपि भ्रान्तिर्भवितेति व्यचिन्तयत् । यावत् प्रासस्तदासन्नं तावत् शुश्राव रोदनम् ॥ ४७ ॥
प्रविश्य भवनं भूमिमारुरोह च सप्तमीम् । तत्रैक्षामास पद्माक्षीमेकां विरहपीडिताम् ॥ ४८ ॥
सनत्कुमार ! मे भूया भर्ताऽन्यत्रापि जन्मनि । पुनः पुनर्भणित्वेदं रुदन्तीं तामुवाच सः ॥ ४९ ॥
बाले ! सनत्कुमारस्य काऽसि त्वमधितद् यतः । एवं खिद्यसि साऽप्याह किञ्चिद्विपरिदेवना ॥ ५० ॥
सुरप्रभस्य साकेतनायकस्य सुताऽस्म्यहम् । सुनन्दाऽऽख्या प्रियाऽत्यन्तं प्रसूश्चन्द्रयशास्तु मे ॥ ५१ ॥
दूतानीतोपमातीतचित्रतद्रूपमोहिता । तस्यैव दयितात्वेन जनकेनास्मि कल्पिता ॥ ५२ ॥
तद्विवाहकृतोत्कण्ठाऽकस्माद् गगनचारिणा । हृत्वा केनापि मुक्ताऽत्र नवे वेश्मनि रोदिमि ॥ ५३ ॥
स च क्वापि जगामेति जल्पन्त्यामेव खेचरः । नन्दनोऽशनिवेगस्य वज्रवेगः स आगमत् ॥ ५४ ॥
सङ्कथां सह मत्पत्न्या कुर्वाणोऽसीति निर्भरम् । कोपेन व्योम्नि चिक्षेप कुमारं माररूपिणम् ॥ ५५ ॥
कुमारोऽपि निहत्यैनं मुष्टिना दुष्टखेचरम् । उपकन्यं द्रुतं प्राप निःशल्या मुमुदे च सा ॥ ५६ ॥

गन्धर्वेण विवाहेन तां पत्नीकृत्य तस्थुषि । कुमारे वज्रवेगस्य नाम्ना सन्ध्यावली स्वसा ॥ ५७ ॥
उपायाता पुरो वीक्ष्य कुपिता भ्रातर हतम् । भ्रातृघ्नपतितां स्वस्मिन् स्मृत्वा ज्ञानिनिवेदिताम् ॥ ५८ ॥
शान्ता च कुमरं पाणिग्रहणायोपतस्थुषी । सुनन्दाऽनुमतो भूपसुतस्तामप्युदूढवान् ॥ ५९ ॥
अथ पुत्रवधात् क्रुद्धोऽशनिवेगो महाबलः । चमूभि. पूरितव्योमा कुमारमभ्यषेणयत् ॥ ६०॥
चन्द्रवेग–भानुवेगादयो विद्याधराः परे । कुमारस्य सहायत्वे ससैन्या उपतस्थिरे ॥ ६१ ॥
प्रवर्तितजगत्क्षोभे सैन्ययोरुभयो रणे । कुमारोऽशनिवेगेन स्वय योद्धुमुपास्थितः ॥ ६२ ॥
नागास्त्र गरुडास्त्रेणाग्नेय तद् वारुणेन च । वायव्यमचलास्त्रेण तन्मुक्तं कुमरो न्यहन् ॥ ६३ ॥
तदा सन्ध्यावलीदत्तप्रज्ञप्तिविद्यया बली । निर्जीवं तद्धनुश्चक्रे नाराचै. कुमरः क्षणात् ॥ ६४ ॥
तस्याथ कोशकृष्टासे· क्रुधाऽन्धस्य प्रधावत. । तत्कालप्रासचक्रेण राजसूर्गलमच्छिदत् ॥ ६५ ॥
सङ्क्रान्तसर्वविद्याभृद्राज्यश्री. प्रसरन्महा. । चण्डवेगादिभिर्युक्तस्त सौधं प्राप सम्मदात् ॥ ६६ ॥
सन्ध्यावली–सुनन्दाभ्यामानन्दितमनास्ततः । अलञ्चकार वैताढ्यं कुमारो भाग्यसेवधिः ॥ ६७ ॥
तत्रास्य चण्डवेगाद्यैर्विद्याधरनरेश्वरैः । विद्याधरमहाराज्याभिषेको विदधेतमाम् ॥ ६८ ॥
चण्डवेगोऽन्यदा स्वीयनगरे निजवेश्मनि । नीत्वाऽऽर्यपुत्र सत्कृत्य बद्धाञ्जलिरभाषत ॥ ६९ ॥

ज्ञानिना मे पुराऽऽदिष्टं कन्याशतमिदं तव । भानुवेगस्य ताश्चाष्टौ चक्रभृत् परिणेष्यति ॥ ७० ॥
इतो मासात् समेताऽसौ मानसं तत्र जेष्यति । असिताख्यं सुरं पूर्वभवासुहृदसुद्धतम् ॥ ७१ ॥
सनत्कुमारनाम्नोऽस्य कथं वैरी स चेच्छृणु । पुरे पुराऽभूद् विक्रमयशाः स्वर्णपुरे नृपः ॥ ७२ ॥
तस्यावरोधेऽस्ति पञ्चशती राजन्ययोषिताम् । सर्वस्त्रीगुणसङ्क्रान्त्या दूषणैः प्रोषितं यतः ॥ ७३ ॥
सोऽन्यदा नागदत्तस्य सार्थवाहस्य वल्लभाम् । तद्रूपमोहितो विष्णुश्रियमन्तःपुरेऽक्षिपत् ॥ ७४ ॥
तत्पतिस्तद्वियोगार्तस्तद्दर्शनमनाप्नुवन् । मत्तो विलापतो मूढो निनाय समयं भ्रमन् ॥ ७५ ॥
नृपस्त्यक्तान्यकर्तव्योऽपमानितपराङ्गनः । अचिन्तितापवादं च तस्यामेवान्वरज्यत ॥ ७६ ॥
ईर्ष्यया खिलराज्ञीभिर्मिलित्वा कार्मणादिना। निपातितायामेतस्यां नृपोऽपि ग्रथिलोऽभवत् ॥ ७७॥
महामूढो न विष्णुश्रीदेहं दग्धुममन्यत । मन्त्रिभिर्मन्त्रयित्वाऽथ तदमोचि वहिर्वने ॥ ७८ ॥
तमपश्यन् रुदंस्त्यक्तसर्वपानक-भोजनः । त्र्यहमस्थाद् दिशः शून्या वीक्ष्यमाणस्तदाऽऽतुरः ॥ ७९ ॥
सचिवैरपि सोऽरण्ये निन्ये तत्र तमैक्षत । काकाकृष्टदृशं स्पष्टगलत्पूतिं चलत्कृमिम् ॥ ८० ॥
ततोऽसौ लब्धचैतन्यस्तादृग्मौढ्यपरिच्युतः । निनिन्द भृशमात्मानं हा ! किमेतन्मया कृतम् ? ॥ ८१ ॥
यदर्थं कीर्त्ति-यशसी लज्जा-शील-कुलान्यपि । सर्वमेकपदे त्यक्तं तस्यावस्थेयमीदृशी ॥ ८२ ॥

सर्वं भवविवर्तेऽस्मिन्नीदृगेवान्तदारुणम् । अहो ! भक्षितहृत्पूर इव भ्रान्तोऽहमन्वहम् ॥ ८३ ॥
संविग्न इत्यसौ दीक्षामादाय विविध तप । कृत्वा संलिख्य पर्यन्ते तृतीये स. सुरोऽभवत् ॥ ८४ ॥
जज्ञे रत्नपुरे श्राद्धो जिनधर्माभिधस्तत । जिनधर्मं विना यस्य न किञ्चिदभवत् प्रियम् ॥ ८५ ॥
इत स नागदत्तोऽपि वल्लभाविरहार्दित । आर्तध्यानी मृतो भूरिभवास्तिर्यक्ष्वपूरयत् ॥ ८६ ॥
द्विज. सिंहपुरे भूत्वा परिव्राडजनि क्रमात् । नानाऽज्ञानतपःसक्त. सोऽथ रत्नपुरं ययौ ॥ ८७ ॥
हरिवाहनभूपेनामन्त्रितस्तद्गृह गत । पारणार्थी स राजा हि भक्तोऽत्यन्तं त्रिदण्डिनाम् ॥ ८८ ॥
तत्र दैवेन सोऽद्राक्षीज्जिनधर्ममुपागतम् । अज्वलत् पूर्ववैरेण बभाण च धराधवम् ॥ ८९ ॥
पृष्ठिस्थभाजनेऽस्यान्यन्यावृत्त्या पारयाम्यहम् । राजन् पायसमत्युष्ण न यावज्जीवमन्यथा ॥ ९० ॥
ऋषिघातांहसा भीतोऽनुमेने तद्वचो नृपः । दृष्टिरागादथाहूय द्रुतं श्रेष्ठिनमादिशत् ॥ ९१ ॥
तपस्विभक्त्या सम्पन्नो मृत्यु स्वर्गो हि तत्त्वत । तत्कृताभिग्रहस्येत्थमस्य कारय पारणम् ॥ ९२ ॥
कृतनिर्दम्भधर्मोऽसौ निर्विषादस्ततो न्यधात् । पृष्ठिमेतत्पुर सोऽपि पात्र्यामत्र शनैः शनै. ॥ ९३ ॥
पायसीं बुभुजेऽत्युष्णां श्रेष्ठी तत्परितापत. । भुक्तोत्तर विदीर्णत्वक्पीडितात्माऽगमद् गृहम् ॥ ९४ ॥
सम्मान्य क्षमयित्वा स्वान् कृत्वा चैत्यार्चनादिकम् । व्रतीभूय गिरेः शीर्षे गृध्रपृष्ठेन मृत्युना ॥ ९५ ॥

समाहितो मृतः कल्पे सौधर्मेऽभूत् सुराधिपः । तत्कर्मणा तस्य ग्रानं हस्तिमल्लत्रिदण्ड्यपि ॥ ९६ ॥
ततश्च्युतो बहु भ्रान्त्वाऽसिताक्षोऽयं सुरोऽभवत् । सनत्कुमारचक्री तु शक्रोऽभूद् हस्तिनापुरे ॥ ९७ ॥
वैरहेतुरयं ज्ञेय इत्युक्ते ज्ञानिना तदा । भानुवेगो मया प्रैपि निवेश्य प्रियसङ्गमाम् ॥ ९८ ॥
विवाहितो भानुवेगस्याष्टौ भ्रातुः सुता अपि । तन्मर्पितव्यं यत् त्यक्तस्तदा लमादिहेतुना ॥ ९९ ॥
कन्याशतं मदीयं तदनुगृह्णातु पाणिना । वध्वोऽष्टावपि पश्यन्तु सम्प्रति स्ववराननम् ॥ १०० ॥
अथैता अपि तत्रैयुरार्यपुत्रश्च ताः कनीः । शतं श्रीचण्डवेगस्योदवहद् विविधोत्सवैः ॥ १०१ ॥
दशोत्तरप्रियतमाशतसौख्यस्य तिष्ठतः । तत्र प्रियतमस्याद्य मनीषेयमजायत ॥ १०२ ॥
युद्धं यत्रासिताक्षेण वृत्तं तत्र गमिष्यते । अतः स्ववल्लभावृन्दवृतोऽमुं देशमाश्रितः ॥ १०३ ॥
अत्र प्रेक्षणकाक्षूणक्षणानुभवभासुरः । त्वया सुहृत् परीरब्धोऽजागरीद् राजसूरितः ॥ १०४ ॥
सतत्रः प्राप वैताढ्यं विज्ञप्तः सुहृदाऽन्यदा । त्वद्वियोगाग्निसन्तप्तौ त्वन्माता–पितरौ भृशम् ॥ १०५ ॥
अतः किं भूरि वक्तव्यं विज्ञोऽसि हि कुरूचितम् । इत्युक्त्यनन्तरं चण्डवेगादीन् सोऽन्वजिज्ञपत् ॥ १०६ ॥
ततो विद्याधरश्रेणिसेनया स पुरस्कृतः । नभोऽध्वना सतत्रो द्राक् चत्रयगान्निजपत्तनम् ॥ १०७ ॥
आलिङ्ग्य सुतमुद्धूतस्वार्जितश्रीभरोद्धुरम् । जनकावन्वभूतां तत् सुखं वाच्यं न यद् भवेत् ॥ १०८ ॥

आकरा इव हर्यस्य नागरा जज्ञिरेऽखिलाः । अभ्यषिञ्चन्निजे राज्ये कृतकृत्योऽथ तं नृप ॥ १०९ ॥
मित्रं महेन्द्रसिंहाख्य तस्य सेनापतिं न्यधात् । स्वयं धर्मार्हतस्तीर्थे व्रत्यभूदुपसद्गुरु ॥ ११० ॥
कर्मक्षयक्षम कृत्वा तप' प्राप महोदयम् । श्रीमान् सनत्कुमारोऽपि भेजे राज्यमहोदयम् ॥ १११ ॥
चक्राद्यखिलरत्नर्द्धिर्दशभि. शरदां शतैः । प्रसाध्य भरत सर्वं प्रसिद्धश्चक्रवर्त्यभूत् ॥ ११२ ॥
तस्य राज्याभिषेकस्य क्षणे द्वादशवार्षिके । श्रीशक्रोऽवधिना ज्ञात्वा श्रीदमित्यादिशन्मुदा ॥ ११३ ॥
यथाऽहमत्र शक्रोऽस्मि तथाऽसौ चक्र्यभूत् पुरा । समानस्थान–योनित्वात् तदसौ मे सहोदरः ॥ ११४ ॥
तद् विधेहि द्रुतं गत्वाऽस्याभिषेकमहोत्सवम् । अद. सुरेश्वरादेशाच्छ्रीदो भुवमवातरत् ॥ ११५ ॥
सिंहासने निवेश्यैनं चक्रिण रत्नमण्डपे । सुवर्णकलशानीतै. क्षीरोदाम्भोभिरुज्ज्वलै ॥ ११६ ॥
नृत्यन्तीभिः सुरस्त्रीभिर्गन्धर्वै. स्वादुगायिभि. । अभिषिच्याथ संयोज्यालङ्कारांश्चक्रिवर्ष्मणि ॥ ११७ ॥
समर्प्य प्राभृत स्फीत दत्त्वा च्छत्रादि चाद्भुतम् । ऐन्द्रप्रणयमावेद्य दिवि वैश्रमणो ययौ ॥ ११८ ॥
उत्तसीकृतजैनाज्ञमनन्यसमतेजसम् । भोगाभोगमनोहारि चक्री राज्यमपालयत् ॥ ११९ ॥
श्लाघामद्वैतरूपस्य चक्रिणः शक्रनिर्मिताम् । श्रुत्वाऽऽगतौ परीक्षायै द्वौ देवौ तत्पुरेऽन्यदा ॥ १२० ॥
विजयो वैजयन्तश्च विदेशीयद्विजाकृती । नृपस्नानक्षणेऽभ्येत्य तौ सौधद्वारि तस्थतुः ॥ १२१ ॥

राजाज्ञयाऽन्तरायातौ खल–तैलतिरोहितम् । अपि तद्रूपमालोक्य विस्मितौ भुवनातिगम् ॥ १२२ ॥
लिङ्गावगतचित्रौ तावपृच्छत् कौ युवामिति ? । नृपस्तावाहतुः स्वामिन् ! आवां वैदेशिकद्विजौ ॥ १२३ ॥
अतिविश्वमनोहारिभवद्रूपदिदृक्षया । प्रासाविति नृपः श्रुत्वा प्राहेपदवलेपवान् ॥ १२४ ॥
किमिदानीमिदं दृष्टमव्यक्तमनलङ्कृतम् ? । स्थितस्य दृश्यमास्थाने भुक्तस्य मम तत् पुनः ॥ १२५ ॥
तदभ्युपेत्य तौ यातावथ भुक्तोत्तरं नृपः । पूरयित्वा सभां सर्वशोभया स्वासनेऽविशत् ॥ १२६ ॥
तदा तौ तद्वपुश्चेष्टां निभाल्यान्योऽन्यमाहतुः । वयो–लावण्य–रूपाणि क्षणिकान्येव धिग् नृणाम् ॥ १२७ ॥
विस्मयाच्चक्रिणा पृष्टौ सविषादाववोचतुः । अश्रद्धेयमिदं राजंस्तथापि शृणु कौतुकम् ॥ १२८ ॥
रूप–यौवन–तेजांसि देवानां जन्मतोऽपि हि । अवस्थितानि यावत् षण्मासायुरवशिष्यते ॥ १२९ ॥
नृणां तानि तु वर्धन्ते यावन्मध्यं निजायुषः । ततः परं तु हीयन्ते यावदायुः प्रपूर्यते ॥ १३० ॥
त्वद्रूप–यौवन–श्रीणामिदमाश्चर्यमद्भुतम् । यत् क्षणात् खलमैत्रीवाधुनैवैता गताः क्वचित् ॥ १३१ ॥
चक्री प्राह कथं वित्थो युवां तावप्यथोचतुः । राजन्नाकर्णयतां तत्त्वमद्याद्यदिवि वासवे ॥ १३२ ॥
प्रेक्षमाणे सुधर्मायां सभायां दिव्यनाटकम् । सङ्गमाख्यः सुरः कश्चिदागादीशानतः पुरः ॥ १३३ ॥
शक्रेण सत्कृतस्यास्य दिव्यप्रसृमरत्विषा । निष्प्रभाऽऽसीत् सभा शाक्री भानीवादित्यतेजसा ॥ १३४ ॥

शक्रोऽथ विस्मितैर्देवै. पृष्टो भाऽऽधिक्यकारणम् । आचचक्षेऽमुनाऽऽचाम्लवर्धमान तपः कृतम् ॥ १३५ ॥
प्राग्भवे तन्महात्माऽसौ सर्वादित्याधिकप्रभः । अन्य कोऽपीदृशोऽस्तीति तत्प्रश्नेऽवक् सुरेश्वरः ॥ १३६ ॥
कान्ति–सौभाग्य–लावण्यैर्वैश्वविश्वातिशायिन । सनत्कुमाररूपस्य नायमप्युपमास्पदम् ॥ १३७ ॥
एतदश्रद्धयैवाचामायातौ त्वरितं सुरौ । शक्रोक्ताधिकमालोकि रूपं व' प्राचि दर्शने ॥ १३८ ॥
साम्प्रत ध्वस्तमेवेदमुद्भवव्याधिवाधितम् । ज्ञास्यसि स्वयमेवेदमित्याख्याय गतौ सुरौ ॥ १३९ ॥
हार–केयूरसम्बन्धमपि वक्षो–भुजादिकम् । नृपो निरीक्ष्य विच्छायं प्रत्ययादित्यचिन्तयत् ॥ १४० ॥
अहो ! क्षणिकताऽऽभ्रातं वहिरङ्गमदोऽखिलम् । प्रतिवन्धस्तु तत्रापि यत् तन्मौढ्यविजृम्भितम् ॥ १४१ ॥
वपुर्मोहोऽयमज्ञानमज्ञान रूपगर्विता । अज्ञानं विपयासक्तिरज्ञान ही ! परिग्रह. ॥ १४२ ॥
कर्तुमात्महितं किञ्चिन्ममोचितमथेत्यसौ । पट्टेऽभिपिच्य स पुत्रं व्रतं तत्कालमाददे ॥ १४३ ॥
रत्नानि निधयो देवा नरेन्द्रा पत्तयोऽङ्गना' । तस्यैवानु भ्रमन्ति स पण्मासान् प्रेमलालसा' ॥ १४४ ॥
सिंहावलोकितेनापि तानसौ न व्यलोकयत् । अहो ! निरभिपङ्गत्वं वायोरिव महामुने ॥ १४५ ॥
चीनकूरमजातक्रमिश्रं पष्ठस पारणे । भुक्त्वा चक्रे पुन पष्ठ स तपस्वी महामना. ॥ १४६ ॥
तदादि तादृशाहारदोपादस्य तनू रुज. । अरुचि–ज्वर–कासाद्या क्रमाद् भृशमवाधयन् ॥ १४७ ॥

कच्छ्रस्तु सुतरां कायरूपकान्तिमचूरयत् । तथापि मनसा नायमचिकीर्षच्चिकित्सितम् ॥ १४८ ॥
सप्त वर्षशतान्युच्चैरधिसेहे स वेदनाः । नैव घोरतपोभिश्च कदाचित् स्वं व्ययोजयत् ॥ १४९ ॥
लब्धयोऽस्य तपोजन्या आमर्षौषधिकादयः । समाभवन्नप्रमत्तः परं ता नान्वयोजयत् ॥ १५० ॥
प्रशशंसान्यदा शक्रस्तमहो ! व्याधिबाधितः । सनत्कुमारराजर्षिर्नैच्छत्येव प्रतिक्रियाम् ॥ १५१ ॥
पुनरश्रद्धया देवौ वैद्यरूपावुपागतौ । त्वद्व्याधिप्रशमं कुर्व इत्येनं मुहुराहतुः ॥ १५२ ॥
अनुल्लापविश्रान्तौ तौ मितं मुनिराड् जगौ । शारीरः कार्मणो वाऽयं युवयोः शक्यनाशनः ? ॥ १५३ ॥
आद्यस्तु सुकरध्वंस इत्युक्त्वा सकलौषधीम् । लब्धिं प्रयुज्य सुस्वर्णवर्णां चक्रेऽङ्गुलीं क्षणात् ॥ १५४ ॥
स्वयमेवं बहिर्व्याधिव्यूहध्वंसक्षमोऽस्म्यहम् । तद्बीजभूतं कर्माख्यं शक्तौ शमयतां द्रुतम् ॥ १५५ ॥
अदो मुनिवचः श्रुत्वा तादृशस्थैर्यविस्मितौ । कर्मव्याधिसमुच्छेदे त्वां विना कः परः क्षमः ? ॥ १५६ ॥
इति स्तुत्वा सुरावैन्द्रीं श्लाघां चावेद्य सम्मदात् । नत्वा गतौ दिवं सोऽथ तत्त्वं साधुरसाधयत् ॥ १५७ ॥
पञ्चाशतं सहस्राणि कौमार्य–मण्डलेशताम् । अब्दानां परिपाल्यैष लक्षं चक्रित्वमन्वशात् ॥ १५८ ॥
ततोऽब्दलक्षं श्रामण्यमध्याश्रित्य निरञ्जनम् । तृतीयं स्वर्गमध्यास सम्मेतेऽसौ समाधिना ॥ १५९ ॥
च्युतस्तस्माद् विदेहेऽवतीर्य सेत्स्यति दीक्षया । सनत्कुमारवत् तस्माद् यतध्वं स्वार्थसिद्धये ॥ १६० ॥

॥ इति सनत्कुमारचरित्रम् ॥ ३७ ॥

तथा—

चइत्ता भारहं वासं चक्कवट्टी महड्ढिओ । संती संतिकरो लोए पत्तो गइमणुत्तरं ॥ ३८ ॥

त्यक्त्वा भारतं वर्षं चक्रवर्त्तिर्महर्द्धिको महर्द्धियुक्तः शान्तिः शान्तिकरो लोके मनुष्यलोके प्राप्तो गतिमनुत्तरां सर्वोत्कृष्टां मोक्षलक्षणामिति सुगमम् । अथ पञ्चमचक्री षोडशश्च तीर्थकृत् । ततश्च—

शिवसम्पत्तिकृन्नाम्नः सविज्ञानन्दसाधनम् । चरितं शान्तिनाथस्य स्वामिनः किञ्चिदुच्यते ॥ १ ॥
वैताढ्येऽस्त्युत्तरश्रेण्यां पुरं श्रीरथनूपुरम् । तस्मिन्नमिततेजाः क्ष्मापतिर्विततविक्रमः ॥ २ ॥
सोऽन्यदा सम्मदी स्वीयसुताराभगिनीपतेः । ययौ श्रीविजयाख्यस्य पार्श्वे पोतनपत्तनम् ॥ ३ ॥
तदोच्छ्रितध्वजं जायमाननानामहोत्सवम् । पुरं राजकुलं वीक्ष्यापृच्छत् प्रियतमं स्वसुः ॥ ४ ॥
राजन् ! विशेषमहसि किं निदानं विभाव्यते ? । ततः श्रीविजयो भूपस्तद् वक्तुमुपचक्रमे ॥ ५ ॥
इतोऽष्टमे दिने नैमित्तिकः कोऽपि महामतिः । उपतस्थे सभास्थं मामाचचक्षे च सत्कृतः ॥ ६ ॥
मया निमित्ततो ज्ञातमितः सप्तमके दिने । पोतनाधिपतेः शीर्षे विद्युद्वह्निः पतिष्यति ॥ ७ ॥
अदः कटुवचः श्रुत्वा रुष्टेनाभाणि मन्त्रिणा । रे ! तिष्ठ वावदूकस्य पतिता किं तवोपरि ? ॥ ८ ॥
तेनोचे शृणु भो मन्त्रिन् ! स्वर्णवृष्टिर्भविष्यति । ममोपरि तदा जाते तद्वृत्ते च यथास्थिते ॥ ९ ॥

तथा च मयि मा कुप्यो न द्वेषः कश्चिदस्ति मे । निमित्तं यदुपालम्भि सद्भावात् तत् पटूकृतम् ॥ १० ॥
यतन्ते प्रतिकाराय विज्ञायैष्यदुपद्रवम् । न तु रुष्यन्ति धीमन्तः कथकायोपकारिणे ॥ ११ ॥
संवादपेशलोक्तस्य सत्कारो मे न दुर्लभः । शान्तोऽथ सचिवः प्राह निमित्तज्ञः कुतो भवान् ? ॥ १२ ॥
सोऽवादीत् सह तातेन पुरा प्रव्रजितोऽभवम् । अचलस्वामिनो दीक्षाकाले परमसम्मदात् ॥ १३ ॥
स्थविरैः शिक्षितः शिक्षां पाठितश्च श्रुतं बहु । तत्राष्टाङ्गं मया ज्ञातं निमित्तं श्रुतसागरात् ॥ १४ ॥
ततोऽस्मि वृतकन्याया उत्प्रव्राज्य सहोदरैः । विवाहितो बलात् कर्म यतो बलवदात्मनि ॥ १५ ॥
इत्युक्त्वाऽस्मिन्नुपरते एकेनाख्यायि मन्त्रिणा । तिष्ठत्वब्धौ नृपः पोते विद्युत् तत्र पतेन्न यत् ॥ १६ ॥
न सम्मतं तदन्येषां यतः कर्म पुरातनम् । प्रभवत्येव वार्द्धौ वा गिरौ वाऽप्यविशेषतः ॥ १७ ॥
मन्त्री सन्मतिरित्याख्यत् पोतनाधिपतेर्वधः । न तु श्रीविजयस्यास्य नैमित्तेन प्रवेदितः ॥ १८ ॥
तत् पोतनप्रभुत्वेन कल्प्यः ससदिनी परः । अथास्थाप्यैकमत्येन यक्षः कोऽपि नृपासने ॥ १९ ॥
ससमाहेऽथ मध्याह्ले विद्युदभ्युन्नता ध्वनात् । निपत्य यक्षमदहन्नान्यथा ज्ञानिनो वचः ॥ २० ॥
अहं पौषधशालायां ससरात्रोषितो गृहम् । उत्सवैरागतो राज्येऽभिषिक्तो नागरैः पुनः ॥ २१ ॥
नैमित्तः पूजितः सर्वैस्तदिदं क्षणकारणम् । अश्लाघि मन्त्रिप्रागल्भ्यं श्रुत्वेत्यमिततेजसा ॥ २२ ॥

मिलित्वा स्वसुरात्मीयगृहगेऽमिततेजसि । सुतारयाऽन्यदोद्यानं युक्तः श्रीविजयो ययौ ॥ २३ ॥
तत्र हैमं मृगं वीक्ष्य नृपोऽभाणि सुतारया । मत्क्रीडनकृते कान्त ! द्रुतमेनमुपाहर ॥ २४ ॥
दधावे स्वयमुर्वीशोऽनुमृगं त्वरितैः पदैः । मृगस्तूदपतद् व्योम्नीतश्च यावत् क्षितीश्वरः ॥ २५ ॥
देव ! कुर्कुटसर्पेण क्षतां त्रायस्व मां द्रुतम् । इति देवीवचः श्रुत्वा प्रत्यावृत्त्योपदेव्यगात् ॥ २६ ॥
असौ लघु मृता तावद् तद्रागान्धोऽथ भूपतिः । तस्याः सह गमं कर्तुं चिताऽऽसनमुपाविशत् ॥ २७ ॥
किं जीवितेन किं भोगैर्विनैनां प्राणवल्लभाम् ? । इति स्थिरमना भूपो द्रुतं वह्निमदीदिपत् ॥ २८ ॥
लोकाक्रन्दश्च धूमश्च व्यानशाते नभोऽभितः । दैवात्कुत्राविवायातौ खेचरौ द्वावितोऽन्तरे ॥ २९ ॥
तत्रैकेनाभिमन्त्र्याम्भो लघु सिक्ता ज्वलच्चिता । नष्टा वैतालिनी विद्या सुस्थश्चाह नरेश्वरः ॥ ३० ॥
किमेतत् कौ युवां तौ चावोचतां विहिताञ्जली । आवां तात ! सुतौ भर्तुः प्रेष्यावमिततेजसः ॥ ३१ ॥
आगच्छद्भ्यां जिनं नत्वा सुताराक्रन्दितं श्रुतम् । ददृशेऽशनिघोषश्च तां हृत्वा गगने व्रजन् ॥ ३२ ॥
आवां युद्धोद्यतावुक्तौ देव्याऽलं सयुधा द्रुतम् । यातां वैतालिनीविप्रतारितो मा मृयात् प्रियः ॥ ३३ ॥
आयाताभ्यां तदावाभ्यामिह दृष्टश्चितागतः । वैतालिनीकृतप्रासुसुतारासंयुतो भवान् ॥ ३४ ॥
नष्टा साऽस्मत्प्रयोगेण न कार्याऽथ विषण्णता । आनीतैव सुतारेति प्रोच्यैतौ खचरौ गतौ ॥ ३५ ॥

ताभ्यां बोधिततद्वृत्तोऽमिततेजाः ससैनिकः । सभमीजानिरशनिघोषमाश्वभ्ययेणयत् ॥ ३६ ॥
नंष्ट्वा स्वराजधानीतः सोऽचलस्वामिनोऽन्तिकम् । उत्पन्नकेवलस्यागादनुतत् तावपीयतुः ॥ ३७ ॥
ते शान्तवैराः सर्वेऽपि शुश्रुवुर्धर्ममार्हतम् । सुतारैकेन तत्रैवानिन्ये विद्याभृता क्षणात् ॥ ३८ ॥
अथोचेऽशनिघोषेण न दुर्भावान्मया हृता । सुताराऽपि तु दृष्ट्वैनामभवं त्यक्तुमक्षमः ॥ ३९ ॥
पूर्वस्नेहवशाद् वैतालिनी व्यतिकरेण तत् । मोहयित्वा नृपं हृत्वैनामगां क्षम्यमित्यदः ॥ ४० ॥
आकर्ण्यामिततेजास्तदपृच्छज्जिननायकम् । कुतः स्नेहः सुतारायामस्येत्यर्हन्नपीत्यवक् ॥ ४१ ॥
भरते मगधादेशेऽचलग्रामे द्विजन्मनः । कस्यापि कपिला चेटी तत्पुत्रः कपिलोऽभवत् ॥ ४२ ॥
कर्णश्रुत्यैव चतुरः स वेदांश्चतुरोऽपठत् । जनुर्दोषात् तु तत्रैनं नाध्यापयति कश्चन ॥ ४३ ॥
अतो देशान्तरे रत्नपुरेऽध्यापकमाश्रितः । प्रख्याप्य स्वं द्विजसुतं स्मृत्याद्यध्ययनेच्छया ॥ ४४ ॥
तत्प्रज्ञापरितोषेणाध्यापको निजनन्दिनीम् । कपिलेन गुणस्तुल्यां सत्यभामां व्यवाहयत् ॥ ४५ ॥
अन्यदा प्रावृषि श्यामाप्रदोषे वर्षदम्बुदे । अन्तःकक्षं स वस्त्राणि संगोप्य गृहमाययौ ॥ ४६ ॥
तीमितांशुक इत्यन्यान्युपादायोपतस्थुषीम् । वस्त्राणि प्रोचिवान् कान्तां तिमिरेऽसौ निरंशकः ॥ ४७ ॥
अस्ति विद्याप्रभावो मे जलं न क्रमतेंऽशुके । सा तु दक्षा विवेदास्य नाग्न्यं वैद्युततेजसा ॥ ४८ ॥

अकौलीन्यमिदमिति मन्दस्नेहा क्रमादभूत् । सत्त्वभाजा नृणां स्त्रीणां नाकुलीने मनोरतिः ॥ ४९ ॥
तेन यत्द्विजपुत्रत्वमूचे सोऽपि द्विजोऽन्यदा । तत्रागात् सत्यभामा तं रहसीदमभाषत ॥ ५० ॥
त्वत्पुत्रोऽयं यदि तदा पृथक् पङ्क्तिः कृता कथम् ? । सोऽप्यैदम्पर्यमाचष्ट महास्यास्तनुभूरिति ॥ ५१ ॥
निर्विण्णा कामभोगेभ्यो जिघृक्षुर्व्रतमादृता । अपृच्छत् कपिलं नानुमेने स तु कथञ्चन ॥ ५२ ॥
ततस्तत्रत्यभूपालं श्रीषेणं सा व्यजिज्ञपत् । कपिलान्मोचय स्वामिन् ! येन द्राग् व्रतमाददे ॥ ५३ ॥
येन दुष्कर्मणा क्षिप्ता नीचसङ्गतिसङ्कटे । तत्कर्मशत्रुहनने नान्यदौपयिकं व्रतात् ॥ ५४ ॥
भृशमुक्तः स राज्ञाऽपि तां नामुञ्चत् ततो नृपः । तामाह तिष्ठ तावत् त्वं यावत् तं प्रशमं नये ॥ ५५ ॥
इतश्च नृपतिः पुत्रावेकपण्याङ्गनाकृते । शत्रुवद् विनियुध्यन्तौ प्रश्रयादित्यशिक्षयत् ॥ ५६ ॥
सत्स्वपाङ्क्तिकता मानहानिर्नीतिष्वनादरः । मालिन्यमात्मनश्चेति दोषाः पण्याङ्गनागमे ॥ ५७ ॥
कुलीनक्षितिभृत्कन्याभोगौदासीन्यतो रतिः । वेश्यास्वनेकभुक्तासु किं युक्ता नृपजन्मनाम् ? ॥ ५८ ॥
चित्रं तत्रापि यद् भ्रात्रोः कलहस्तत्कृतेऽपि हि । स चन्द्रे श्यामिकाप्रायः कश्चिदुत्पातहेतवे ॥ ५९ ॥
राज्यार्थं यदसाम्यस्य पुत्रयोस्तदपि ध्रुवम् । पितुः क्लेशाय तुच्छैकवेश्याऽर्थे तु किमुच्यते ? ॥ ६० ॥
एतत् पितृवचः श्रुत्वा गवाज्यप्रायमद्भुतम् । इद्धक्रोधानलौ क्ष्मापमाहतुस्तौ निरर्गलौ ॥ ६१ ॥

तात ! वृद्धोऽसि का वेश्या का वा राजाङ्गजा जने ? । प्रीतिरेव हि संसारे निदानं परमादरे ॥ ६२ ॥
अन्धे कुष्ठिनि पङ्गौ वा नृपेऽपि नृपजेऽपि वा । समव्यापारवद् वेश्यासमं पात्रं न विद्यते ॥ ६३ ॥
द्वयोरन्यतरो भ्राता न हि यावद् विपत्स्यते । तावत् कुतः कलिः क्षीणो यद् भाव्यं तात ! पश्य तत् ॥६४॥
इत्यपायप्रवृत्ताङ्गजन्मदुर्वाक्यजन्मना । वैराग्येण शुभध्यानाद् विषभक्षी मृतो नृपः ॥ ६५ ॥
शिखिनन्दिन्यभिनन्दिन्यौ संविग्ने नृपतिप्रिये । सत्यभामाऽपि चकिता तिस्रोऽप्यादुर्विषं तदा ॥ ६६ ॥
जाता देवकुरुस्थाने नृपतिस्ताश्च युग्मिनः । सौधर्मेऽथ ततो गत्वा श्रीषेणात्मा ततश्च्युतः ॥ ६७ ॥
एष जज्ञेऽमिततेजाः श्रीविजयोऽभिनन्दिनी । सत्यभामा सुताराऽभूत् प्रागभ्यासाच्च सङ्गतिः ॥ ६८ ॥
कपिलोऽपि भवं भ्रान्त्वाऽशनिघोषोऽभवत् स च । प्राक्प्रेमातिशयाद् राजन् ! द्राक् सुतारामपाहरत् ॥६९॥
भव्योऽहं किमभव्यो वेति पृष्टोऽमिततेजसा । जिनोऽथ व्याहरद् भव्यस्त्वमितो नवमे भवे ॥ ७० ॥
षोडशस्तीर्थकृद् भावी सैष श्रीविजयश्च ते । भविताऽऽद्यो गणधरस्तच्छ्रुत्वा तुष्यतः स्म ता ॥ ७१ ॥
अथो निजे निजे राज्ये गत्वा भुक्त्वा चिरं सुखम् । गतौ कदाचिदुद्याने चारणार्षि ददर्शतुः ॥ ७२ ॥
चिन्तामण्युपमानेन स्वल्पेनापि नरायुषा । यतितव्यं तथा नित्यः परानन्दो यथोल्लसेत् ॥ ७३ ॥

इति धर्म्यां गिर श्रुत्वा निजमायुरपृच्छताम् । पड्विंशतिदिनान्येवेत्युपयुज्यावदन्मुनि ॥ ७४ ॥
पुत्रयोरथ साम्राज्य न्यस्यादाय च सयमम् । पादपोपगमेनैतौ विपद्य सुसमाहितौ ॥ ७५ ॥
उत्पन्नौ प्राणते कल्पे विंशत्यम्बुनिधिस्थिती । तत्रत्यसुखसर्वस्वमुपभुज्य क्रमाच्च्युतौ ॥ ७६ ॥
जम्बूद्वीपे प्राग्विदेहे विजये रमणीयके । सीताख्याया महानद्या अपाच्यां सुभगापुरि ॥ ७७ ॥
राज्ञ स्तिमितसारस्य भार्ययोरुदरे क्रमात् । वसुन्धर्यनङ्गसुन्दर्यो. सुतावुदपद्यताम् ॥ ७८ ॥
अपराजित इत्याख्या तयोरमिततेजस । अनन्तवीर्य इत्याख्याऽभवच्छ्रीविजयस्य च ॥ ७९ ॥
वलदेव-वासुदेवौ भरतार्धक्षितीश्वरौ । क्रमादभूतां नि शेपक्ष्माभृच्चक्रावतंसकौ ॥ ८० ॥
तत्पिताऽपि परिव्रज्यासुरेषु चमरोऽभवत् । अगादनन्तवीर्योऽपि वद्धायु प्रथमा भुवम् ॥ ८१ ॥
द्विचत्वारिंशत्सहस्राब्दस्थितिस्तीव्रोरुवेदना. । सम्यक् सेहे स सविम्न. क्व मुक्ति' कृतकर्मणः ? ॥ ८२ ॥
तत्पिता चमरेन्द्रस्तं नरकादुद्दिधीर्पया । आचकर्प परं सोऽपि नाक्रष्टुमशकत्तमाम् ॥ ८३ ॥
अथापराजितो दीक्षामुपादाय विरक्तधी. । क्रमादापाच्युतेन्द्रत्व द्वाविंशत्यतरायुपा ॥ ८४ ॥
इतश्चानन्तवीर्योऽपि निर्गत्य नरकोदरात् । खेचरोऽजनि वैताढ्येऽच्युतेन्द्रेणैप वोधित ॥ ८५ ॥
प्रव्रज्याच्युतदेवोऽभून्महर्द्धिर्दिव्यदीधिति. । इन्द्रस्य परमप्रीतिपात्रमुत्कर्पितस्थिति. ॥ ८६ ॥

अच्युतेन्द्रः क्रमादायुरुपभुज्य च्युतस्ततः । विजये मङ्गलावत्यां रत्नसञ्चयपत्तने ॥ ८७ ॥
क्षेमङ्करस्य भूजाने रत्नमालाऽङ्गभूरभूत् । वज्रायुधाभिधः पुत्रः पवित्रगुणसेवधिः ॥ ८८ ॥
अपरस्तु ततस्तस्य पुत्रत्वेनोदपद्यत । सहस्रायुध इत्याख्यः पितृभक्तो महाभुजः ॥ ८९ ॥
वज्रायुधं नृपीकृत्य लात्वा क्षेमङ्करो व्रतम् । तीर्थकृत् केवली भूत्वा भव्यान् भवमतारयत् ॥ ९० ॥
अन्यदा पौषधागारे पौषधव्रतसुस्थिरम् । प्रशशंसाद्यकल्पेन्द्रो वज्रायुधमिति स्फुटम् ॥ ९१ ॥
चलेदपि क्वचिन्मेरुः परं सेन्द्रैः सुरैरपि । धर्माचालयितुं शक्यो न तु वज्रायुधो वली ॥ ९२ ॥
तदश्रद्दधदेकस्तु देवो भुवमवातरत् । पारापतेन रूपेण वज्रायुधमुपागमत् ॥ ९३ ॥
मनुष्यभाषया दीनमुच्चरंस्त्रस्तलोचनः । त्रायस्व शरणायातमित्यालीनः तमञ्जसा ॥ ९४ ॥
वज्रपञ्जरगो मा भैरिति भाषिणि भूपतौ । श्येनोऽथ तमनुप्राप व्यात्ततुण्डः क्षुधातुरः ॥ ९५ ॥
सोऽप्युवाच महासत्त्व ! क्षुत्क्षामं भ्रमता मया । लेभे पारापतः सैष मद्भक्ष्यं मुञ्चत द्रुतम् ॥ ९६ ॥
अन्यथा मृत एवास्मि मत्प्राणग्रहणांहसा । मा लेपय निजात्मानं ततो वज्रायुधोऽभणत् ॥ ९७ ॥
ऐदम्पर्यमिदं क्षत्रधर्मस्य भुवनातिगम् । यः कश्चिच्छरणं प्राप्तः स रक्ष्यो निर्विवेचनम् ॥ ९८ ॥
उचितं न तवाप्येतन्नरवाचो विवेकिनः । हतैरपि परप्राणैर्न युगान्तरजीविता ॥ ९९ ॥

यथा तव प्रिया प्राणास्तथैतस्यापि निश्चितम् । प्रियप्राण ! प्रियप्राण त्वममुं किं जिघांससि ? ॥ १०० ॥
एतन्मासात् क्षणं तृप्तिस्तव स्यादुत्कटक्षुध । अयं तु जीवितं जह्यादथ श्येनोऽवदद् गिरम् ॥ १०१ ॥
क्षुधाऽऽर्तस्य न मे धर्मे कृपाऽऽख्यो व्यवतिष्ठते । प्रपालयसि किं नैनमीप्सिताहारभोज्यसि ॥ १०२ ॥
राजोचे चेत् क्षुधाऽऽर्तोऽसि मासमन्यद् गृहाण तत् । निजव्यापादितप्राणिमासाश्यस्मीति सोऽभ्यधात् ॥१०३॥
यन्मात्र तुलयत्येष मासं पारापत पतत् । तावदादत्स्व मे देहादित्युक्ते राजजन्मना ॥ १०४ ॥
ओमित्याह मुदा श्येनोऽथानाय्य महती तुलाम् । पात्रे पक्षिणमेकत्र लोकसाक्षि न्यवीविशत् ॥ १०५ ॥
उत्कृत्योत्कृत्य मांस स्वाङ्गान्मुमोच यथा यथा । परत्र पात्रेऽसौ पक्षी गुरुर्जज्ञे तथा तथा ॥ १०६ ॥
नृपो वीक्ष्य तदाश्चर्यं हाहारवमुखे जने । अक्षतं मा गृहाणेति स्वयमारूढवांस्तुलाम् ॥ १०७ ॥
कृपा विश्वैकतुल्याना महता काऽप्यलौकिकी ! । तृणयन्ति निजप्राणानपि तेऽन्यहितेच्छया ॥ १०८ ॥
काष्ठाप्रासमिदं सत्त्व दृष्ट्वा वज्रायुधे महत् । संहृत्य देवमाया ता साक्षाद्भूय सुरोऽवदत् ॥ १०९ ॥
श्लाघितोऽसि सुरेन्द्रेणाधिकोऽसि सुपरीक्षित. । विजयस्वेति तं स्तुत्वा प्रहृष्ट स्वरगात् सुर' ॥ ११० ॥
राज्य भुक्त्वा चिरं न्यस्य पौत्रं शतबलं पदे । सहस्रायुधयुक् वज्रायुध. परमतत्त्ववृक् ॥ १११ ॥
पितृक्षेमङ्करस्वामितीर्थकृद्गणभृत्करे । जग्राह संयमं तच्च प्रतिपाल्य यथाविधि ॥ ११२ ॥

ग्रैवेये नवमे देवावुत्पेदानावुभावपि । उत्कृष्टायुः सुखं भुक्त्वा च्युतौ सुकृतपूरितौ ॥ ११३ ॥
विदेहे पुष्कलावत्यां विजये मञ्जुसम्पदि । नगर्यां पुण्डरीकिण्यां भूभृद्घनरथप्रभोः ॥ ११४ ॥
पद्मावत्या महादेव्या मनोरममतेरपि । मेघरथो दृढरथ इति जातौ सुतौ क्रमात् ॥ ११५ ॥
यथा यथा वयोवृद्धिर्बुद्धिवृद्धिर्यथा यथा । परिणेमे तयोर्धर्मः पूर्वाभ्यासात् तथा तथा ॥ ११६ ॥
ज्ञातजीवादितत्त्वौ तौ सुश्राद्धक्रियया श्रितौ । विश्वं दानेन सन्तोष्याभिषिच्य च सुतं पदे ॥ ११७ ॥
पितुस्तीर्थकृतः पार्श्वे सम्प्रापावनगारिताम् । विंशत्यन्यतमैः स्थानैस्तत्र मेघरथो मुनिः ॥ ११८ ॥
उपार्ज्य तीर्थकृन्नामकर्म संलिख्य चायुषि । क्षीणेऽनुत्तरदेवत्वं प्राप सर्वार्थसिद्धिगः ॥ ११९ ॥
त्रयस्त्रिंशत्सागरायुर्भुक्त्वा सन्तोषजं सुखम् । हस्तिनागपुरे राज्ञो विश्वसेनस्य मानिनः ॥ १२० ॥
अचिरादचिरादेव्या उदरे विश्वसुन्दरे । प्रोष्ठपदाद्यसप्तम्यां ततश्च्युत्वाऽवतीर्णवान् ॥ १२१ ॥
चतुर्दशमहास्वप्नोपलम्भसुभगं विभुम् । ज्येष्ठश्यामत्रयोदश्यां तनुजं सुषुवेऽचिरा ॥ १२२ ॥
विहितं दिक्कुमारीभिः सूतिकर्माखिलं मुदा । स्नपितश्च प्रभुर्मेरौ सुरेन्द्रैर्विंशदोदकैः ॥ १२३ ॥
कृत्वा वर्धापनं भूभृद् गर्भस्थेऽस्मिन् जनेऽखिले । शान्तिरासीदिति प्रत्यष्ठिपच्छ्रीशान्तिनामताम् ॥ १२४ ॥
वर्धमानः क्रमात् सर्वकलासु कुशलः सुधीः । तरुणो भूभुजां नैका राजकन्या व्यवाहयत् ॥ १२५ ॥

भेजेऽथ पैतृक राज्यं भाग्यतश्चक्रितामपि । स्वयम्बुद्धोऽपि लोकान्तज्ञापितावसर॰ क्रमात् ॥ १२६ ॥
सवत्सरमहादानं दत्त्वा हित्वा परिग्रहम् । ज्येष्ठकृष्णचतुर्दश्या निष्क्रान्तो नृसहस्रयुक् ॥ १२७ ॥
चतुर्ज्ञानसमग्रस्योद्यतस्य परमेशितु । नवम्या पौपशुद्धायां बभूवोज्वलकेवलम् ॥ १२८ ॥
सुरेन्द्रैर्देशनागारे त्रिप्रकारे कृते प्रभु । व्याख्याय तत्त्वत्रितय भूरिभव्यानबूबुधत् ॥ १२९ ॥
च्युत्वा दृढरथ॰ पुन प्रभोश्चक्रायुधाभिध । भूत्वा स गणधारित्वं प्राथम्यं चाप साधुपु ॥ १३० ॥
ग्राम पत्तन-देशादौ विदत्य भगवानपि । ज्येष्ठकृष्णत्रयोदश्यां सम्मेते प्राप निर्वृतिम् ॥ १३१ ॥
कौमार्ये मण्डलित्वे तदनु नवनिधिप्रोल्लसच्चक्रिताया छाद्मस्थ्यैकाब्दयुक्ते सुरकृतपरिचर्याञ्चिते केवलित्वे ।
यस्याब्दानां सहस्रा करण-करमिता विश्वविश्वैकनेतु प्रत्येकं तीर्थनाथ॰ स भवतु भवतां शान्तिनाथ शिवाय १३२

॥ इति श्रीशान्तिनाथचरित्रम् ॥ ३८ ॥

इक्खागरायवसभो कुंथू नाम नरेसरो । विक्खायकित्ती भगव पत्तो गइमणुत्तरं ॥ ३९ ॥

इक्ष्वाकुराजवृषभ । कुन्थुर्नामा नराणां मर्त्यानां मध्ये ईश्वर इव नरेश्वर॰ । पुनर्विख्यातकीर्त्तिर्भगवान् प्राप्तो गतिमनुत्तराम् । स्पष्टम् । एप च पष्ठश्चक्री सप्तदशश्च जिन इति । तद्वृत्तोद्देशो यथा—

हस्तिनागपुरे सूरभूपालस्य प्रतापिन॰ । श्रीदेव्या भगवान् पुत्र॰ कुन्थुनाथोऽभवज्जिन ॥ १ ॥

प्रवयाः पैतृकं राज्यं प्राप्य संसाध्य चौजसा । पट्खण्डभरतेशत्वं स प्रौढश्चक्रवर्त्यभूत् ॥ २ ॥
समये व्रतमादाय षोडशाब्दीं विहृत्य च । उत्पाद्य केवलज्ञानं भव्यान् भवमतारयत् ॥ ३ ॥
कौमार-राज्य-चक्रित्व-व्रतेषु शरदां क्रमात् । त्रिविंशतिः सहस्राणि सार्धसप्तशतानि च ॥ ४ ॥
प्रत्येकमतिवाह्योच्चैः कर्म निर्मूल्य सर्वतः । सम्मेते सिद्धिमासाद्य शाश्वतानन्दभागभूत् ॥ ५ ॥

यत्रावतीर्णे ह्यतिलाघवेन कुन्थूपमान् श्रीः प्रददर्श शत्रून् ।
वाह्यान्तरङ्गारिगणप्रमाथी स कुन्थुनाथः कुशलं करोतु ॥ ६ ॥

॥ इति कुन्थुचरित्रम् ॥ ३९ ॥

सागरंतं चइत्ताणं भरहं नरवरीसरो । अरो य अरयं पत्तो पत्तो गइमणुत्तरं ॥ ४० ॥

व्याख्या—सागरान्तं समुद्रान्तं भरतं भरतक्षेत्रं नरवराणामीश्वरः । अरनामा च तीर्थकृच्चक्रवर्ती रतस्य रजसो वा अभावोऽरतं अरजो वा तत्प्राप्तः सन् प्राप्तो गतो गतिमनुत्तरां मुक्तिमित्यर्थः । तच्चरित्रसंग्रहवृत्तमिदम्—

अभूद् गजपुरे पुरे जिनवरोऽर इत्याख्यया सुदर्शनकुलार्यमा जगदुदारदेव्यात्मजः ।
चतुर्ष्वपि समैकविंशतिसहस्रमभ्येत्य यो महोदयमशिश्रयद् विदितचक्रिराट् सप्तमः ॥ १ ॥

॥ इति अरजिनचरित्रम् ॥ ४० ॥

चइत्ता भारहं वासं चक्कवट्टी महड्ढिओ । चइत्ता उत्तमे भोगे महापउमो तवं चरे ॥ ४१॥

त्यक्त्वेति भारतं क्षेत्रं चक्रवर्त्तिमहर्द्धिक. । पुन त्यक्त्वा उत्तमान् प्रधानान् भोगान् महापद्मश्चक्रवर्त्तिस्तपश्चरेदकरोत् । सुगमम् । तच्चरित्रं यथा—

हस्तिनागपुरे स्वस्तिशस्त पद्मोत्तरो नृप । पराक्रम्यस्य देव्यस्ति ज्वाला रम्या जिनाज्ञया ॥ १ ॥
सिंहस्वप्नयुतो विष्णुकुमारोऽस्या सुतो वली । परश्चतुर्दशस्वप्नवान् महापद्मसंज्ञक. ॥ २ ॥
उभौ कलाकलापाढ्यौ चक्रिबीजं पुनर्लघु । सज्जिगीष इति प्राज्ययौवराज्यमवापित. ॥ ३ ॥
इतश्चास्ति नृपोऽवन्त्यां श्रीधर्मो नीतिमान् क्षम । नमुचिर्नाम मन्त्र्यस्य मिथ्यादृष्टिर्दुराशय ॥ ४ ॥
अन्यदा सुव्रताचार्ये तत्रायातेऽभिगच्छति । वन्दनार्थं पुरीलोके नमुचिं नृपतिर्जगौ ॥ ५ ॥
असामयकालयात्राया किं याति जनता बहि ? । आगता श्रमणा यान्ति तद्भक्ता इति सोऽवदत् ॥ ६ ॥
समा समेषु रज्यन्ते प्रायश स्थितिरीदृशी । श्रमणेष्वेषु मूर्खेषु ही ! मूर्खो लीयते जन. ॥ ७ ॥
राज्ञोचे किल लोकेषु ख्याता विद्वांस इत्यमी । त्वया मया च तद् गत्वा परीक्ष्यन्तेऽथ तेऽधुना ॥ ८ ॥
दुर्विदग्धोऽनुमेने तद् व्यर्थज्ञानावलेपवान् । तेनान्यैरपि युक् सूरिवन्दकोऽथागमन्नृपः ॥ ९ ॥

सूरिरप्यविशेषेण तेभ्योऽदाद् देशनासुधाम् । विपायिता सुधाऽप्येपाऽतिदुष्टे तत्र मन्त्रिणि ॥ १० ॥
गतद्वेषेऽपि स द्वेषं दधिर्गुणमसासहिः । गोमायुरिव पञ्चास्ये व्यर्थमाटोपमादधे ॥ ११ ॥
जेयः खलः शमेनैवेति नीतिज्ञो महान् गुरुः । मौनेनास्थाद् बुधः प्रत्यग्रहीदेकस्तमन्तिपत् ॥ १२ ॥
तदाक्षेपलवादेव स तथाऽभून्निरुत्तरः । निर्यातः संसदः शीघ्रं यथाऽन्यैः काक्षवीक्षितः ॥ १३ ॥
गताः प्रमुदिताः सर्वे स्वस्थानं भूधवादयः । समुपात्तमहाकर्मा स त्वगाद् गुरुमत्सरः ॥ १४ ॥
वैरमुद्वहमानोऽसौ रात्रौ तत्र तपस्विनाम् । वधार्थमुदसिर्यातोऽस्तम्भि देवतया रयात् ॥ १५ ॥
धर्ममत्सरदौरात्म्यमीदृग् वीक्ष्य नृपादयः । श्लथधर्माः परं भेजुर्धर्मदार्ढ्यं सुविस्मिताः ॥ १६ ॥
अपमानं जनादाप्य निर्गत्य नमुचिस्ततः । युवराजं गजपुरे महापद्ममुपास्थितः ॥ १७ ॥
सुधीः सूक्तज्ञ इत्येनं बहुमंसीन्नृपात्मजः । उपायज्ञं न मुञ्चन्ति मन्त्रिणं हि महीधवाः ॥ १८ ॥
दुर्गेश्वरं सिंहबलं दुर्जयं जेतुमन्यदा । स्वाम्यादेशात् ससैन्योऽसौ गत्वोपायैस्तमग्रहीत् ॥ १९ ॥
महापद्मस्य पुरतस्तं जीवन्तमढौकयत् । गुणज्ञः सोऽपि सत्कृत्य तं प्रसादपरोऽवदत् ॥ २० ॥
त्वया न्यवारि देशस्योपद्रवो दुर्जयादरेः । अतो वृणु वरं किञ्चिदिष्टमस्मि प्रसादवान् ॥ २१ ॥
मार्गयिष्याम्यवसरे तदा दद्याः प्रसद्य तम् । प्रपेदे तत् कुमारोऽपि स्थिरात्माऽऽश्रितवत्सलः ॥ २२ ॥

इतश्च ज्वाल्या देव्या स्वर्ण-मुक्ता मणीमय । स्यन्दन कारयामासे जिनयात्रार्थमद्भुत. ॥ २३ ॥
मिथ्यादृष्टि परा राज्ञी लक्ष्मीत्याख्याऽप्यकारयत् । सपत्नीस्पर्द्धया ब्रह्मरथं ब्राह्मणशिक्षया ॥ २४ ॥
पुरे ब्रह्मरथाङ्कस्य प्राग् भ्रमोऽस्त्विति भूधवम् । लक्ष्मीर्व्यजिज्ञपत् तच्च ज्वालाऽश्रौषीत् सुदुःश्रवम् ॥ २५ ॥
प्रत्यज्ञासीच्च चेज्जैनरथो न भ्रमिता पुरा । जन्मन्यस्मिंस्तदाऽऽहारो नैव ग्राह्यो ध्रुवं मया ॥ २६ ॥
ततोऽनन्यगतिर्भूपो न्यरौत्सीत् तद् रथद्वयम् । तादृग्विमानतां मातुर्दृष्ट्वा पद्मो व्यचिन्तयत् ॥ २७ ॥
न नाम यदि दाक्षिण्यं ममाकार्षीद् धराधव । तदा विष्णुकुमारस्य तत् कृत्यं नाभवत् किमु ? ॥ २८ ॥
जातापमानमालिन्यं तद्धि त्याज्यमिदं पदम् । ध्यात्वेत्यसौ द्वितीयासिर्निश्येको निरगाद् गृहात् ॥ २९ ॥
गच्छन् प्रापाटवीमेका तत्रागात् तापसाश्रमम् । सत्कृतस्तापसैः सर्वैस्तत्र तस्थौ सुखं कियत् ॥ ३० ॥
इतश्च चम्पाधिपतौ क्षितीशे जनमेजये । कालशत्रुपराभूतेऽत्राण सर्वोऽनशज्जन ॥ ३१ ॥
नागवत्यस्य दयिता गृहीत्वा मदनावलीम् । एका स्वपुत्री नश्यन्ती तत्रागात् तापसाश्रमे ॥ ३२ ॥
कुमार-मदनावल्योर्दर्शनादेव चेतसि । तथा रागोऽभवद् व्यक्तिभावं भेजे यथाऽक्षिषु ॥ ३३ ॥
नागवत्यप्यदो ज्ञात्वा रह प्राह निजाङ्गजाम् । नहि स्मरसि किं वत्से ! त्वं तन्नैमित्तिकोदितम् ? ॥ ३४ ॥
चक्रिण पट्टपत्नीत्व प्राप्स्यसेऽतो निजं मन । किं यत्र कुत्र वध्नासि न कौलीनमिदं हि नः ॥ ३५ ॥

अथो कुलपतिः प्रोचे कुमारं शङ्किताशयः । गच्छ कचिदनाचारं मा कन्याप्रणयं कृथाः ॥ ३६ ॥
कुतो भवति हि स्नेह इत्यज्ञानोचितं वचः । भवितव्यतया लग्नं मनः कोऽपासितुं क्षमः ? ॥ ३७ ॥
अस्याः पतित्वमासाद्य वर्षं संसाध्य भारतम् । सर्वत्र प्रथयिष्यामि जैनधर्मप्रभावनाम् ॥ ३८ ॥
उच्चैर्मनोरथानेवं कुर्वाणः कुमरस्ततः । अचलत् क्रमशः प्राप पत्तनं सिन्धुनन्दनम् ॥ ३९ ॥
उद्यानिकायामुद्याने क्रीडत्यत्राबलाजने । केलीकलकले गीततूरनादे प्रसर्पति ॥ ४० ॥
महसेनमहीशानमहेभो मदनोत्कटः । तच्छुत्वोन्मूलितालानो हतसेण्ठः सुदुर्दमः ॥ ४१ ॥
वायुवेगेन तत्रागात् ततो नारीजनोऽखिलः । त्रस्तो नंष्टुमशक्तश्चारोदीदशरणाश्रयः ॥ ४२ ॥
महापद्मोऽपि तद् दृष्ट्वा कृपाकुलमना गजम् । चिकीर्षन्नबलात्राणं प्रत्यधावदहक्कयत् ॥ ४३ ॥
वलितोऽभ्यागमद् वेगात् कुमारं कुञ्जरोऽपि हि । स दत्त्वा करिणो वेध्यमिममक्रीडयच्चिरम् ॥ ४४ ॥
भाग्यवान् पुरुषः कश्चिदस्मदर्थमसौ हहा ! । कदर्थ्यः करिणा पौरीजनः पूदकरोदिति ॥ ४५ ॥
एतदाकर्ण्य तत्रत्यो महसेनः क्षितीश्वरः । समन्त्रि-नागरोऽभ्यागादवादीच सुविस्मितः ॥ ४६ ॥
मा मा कुमार ! ढौकस्व प्रतीभं मुग्धतां त्यज । कृतान्तस्य प्रतिकृतिरसौ हि त्वदगोचरः ॥ ४७ ॥
गजमेनं वशीकर्तुं मन्ये शक्रोऽपि न क्षमः । कदलीकोमलाङ्गस्य कुमार ! तव का कथा ? ॥ ४८ ॥

भटा सहस्रयोद्धारो जगज्जयिपराक्रमा॰ । ममानेके पर नाग नैन निर्जेतुमीश्वरा ॥ ४९ ॥
पथिकोऽसि पतङ्गत्वं मा भजैतत्प्रदीपके । तत् साहसं न हि श्लाघ्यं यद् विपाकैकदारुणम् ॥ ५० ॥
कुमारोऽनदर्दुर्वाशानभिज्ञोऽसि स्थिराशयः । निरीक्षस्व क्षणादेव वशं नेयो मया गज ॥ ५१ ॥
इत्युक्त्वा शास्त्रभणितै करणै करिणं क्षणम् । समोह्य विद्युदुत्क्षेपं कुमारो द्विपमारुहत् ॥ ५२ ॥
अभिकुम्भस्थलं मुष्टिघातैर्नीत्वा वशं गजम् । दत्त्वा हस्तिपकाय द्राक् कुमारोऽस्मादवातरत् ॥ ५३ ॥
अद्वैत साधुवादस्य पौरेभ्य प्राप सर्वत । वीरकोटीरहीरत्वं तस्याख्यन् शिशवोऽपि हि ॥ ५४ ॥
लिङ्गनिर्णीततद्वश सन्तुष्टस्तेन भूपति॰ । गुणश्रेणिचणं कन्याशत स्वीयं व्यवाहयत् ॥ ५५ ॥
तादृग्भोगविलासस्य तस्य तत्रैव तिष्ठत । दिना ययु॰ पर चित्तान्न ययौ मदनावली ॥ ५६ ॥
अन्यदा शयनीयस्थं निशि त काऽपि खेचरी । अपाहार्षीत् प्रगे पृष्टा स्वादुगीरिदमभ्यधात् ॥ ५७ ॥
भाग्यसौभाग्यसम्भोग्यापहारे शृणु कारणम् । अस्ति वैताढ्यशृङ्गार वरं सूरोदयं पुरम् ॥ ५८ ॥
तत्रेन्द्रधनुषो राज्ञ॰ सुभद्रोदरमौक्तिकम् । नन्दिनी जयचन्द्राऽस्ति निखिलस्त्रीगुणास्पदम् ॥ ५९ ॥
अनुरूपवरालाभादभूत् तस्या नरारुचि । तातेनारेभिरे तादृग्वरार्थोपयिकान्यत॰ ॥ ६० ॥
तदाज्ञया मया सर्वे भरतस्थनरेश्वरा॰ । चित्रयित्वा पट्टिकायां सम्यक् तस्यै प्रदर्शिता ॥ ६१ ॥

सर्वत्रारुचिरुत्पेपा त्वद्रूपालोकनक्षणे । प्राप्यावस्थान्तरं किञ्चिद् रहस्ये मामभापत ॥ ६२ ॥
यस्येदक्षा गुणाः सर्वे रूपाद्या भुवनाद्भुताः । न ग्रहीतुमलं मातस्तदन्यो मामकं मनः ॥ ६३ ॥
स चेत् सम्पद्यते शीघ्रं प्राणाशा क्रियते तदा । मर्तव्यमन्यथा नूनमसून् धर्तुमशक्तया ॥ ६४ ॥
अमुं व्यतिकरं सद्यः पित्रोरहमसाधयम् । तावत् प्रेषयतां मां त्वदाह्वानाय समुत्सुकौ ॥ ६५ ॥
अविश्वसन्त्याः कन्यायाः सन्धेयं पुरतः कृता । प्रवेश्योऽग्निर्न चेदानयामि तं त्रिदिनान्तरे ॥ ६६ ॥
धात्र्यस्म्यहं वेगवती त्वामहार्षं तु तत्कृते । रोपितव्यमतो नैव जनेऽस्मिन् प्रियकारिणि ॥ ६७ ॥
इत्युक्त्वा कुमरं नीत्वा क्षणात् सूरोदयं पुरम् । जयचन्द्रा—सुभद्रेन्द्रधनुराद्यानमोदयत् ॥ ६८ ॥
आग्रहैरुत्सवैर्भूपनिर्मितैर्जयचन्द्रिकाम् । महापद्मः पर्यणयत् सुखमस्थाच्च तद्गृहे ॥ ६९ ॥
इतश्च जयचन्द्राया गङ्गाधर—महीधरौ । मत्सरं मातुलसुतौ कुमारे दधतुस्तराम् ॥ ७० ॥
आवाभ्यामननुज्ञातो भर्मीं यः कश्चिदावयोः । वैदेशिकः पर्यणैषीदभिपेण्यः स आवयोः ॥ ७१ ॥
इत्यायातौ मदाद् योद्धुं महापद्मेन तौ खगौ । ग्रस्तैच्छत् तौ महापद्मः श्रितः खचरकोटिभिः ॥ ७२ ॥
एकोऽपि हि महापद्मः सर्वातिगपराक्रमः । तथौजोऽस्फारयत् स्वीयं नष्टौ तौ सभटौ यथा ॥ ७३ ॥
अथ लब्धजयः सर्वविद्याधरनतक्रमः । स्त्रीरत्नवर्जमुत्पन्नसर्वरत्नो महाद्युतिः ॥ ७४ ॥

स्फुरन्नवनिधिर्लब्धानेकविद्योऽथ सोऽन्यदा । गतस्तमाश्रमं स्नेहात् संस्मरन् मदनावलीम् ॥ ७५ ॥
तस्मिन् शतधनु पुत्र. क्षितीशो जनमेजय । चक्रिणा स्फुटभाग्येन तेन तां पर्यणाययत् ॥ ७६ ॥
एतन्मुरयचतु पष्टिसहस्रान्त पुरीयुत । सिद्धभारतषट्खण्डो द्वात्रिंशद्राट्सहस्रयुक् ॥ ७७ ॥
हस्तिनागपुरेऽभ्येत्य पितृपादाववन्दत । तावप्यालिङ्गतां गाढं दोर्भ्यामुज्जीविताविव ॥ ७८ ॥
ऋद्धिभि पितुराधिक्य दधानो विनयान्वित । अद्वितीयोऽभवत् कीर्त्यो महापद्मो महामति. ॥ ७९ ॥
इतश्च सुव्रतस्वामिशिष्य श्रीसुव्रतो गुरु । शिश्राय नगरोद्यानं ज्ञान-ध्यान-व्रतोद्यत. ॥ ८० ॥
नन्तु पद्मोत्तरो राजा सम्मदी सपरिच्छद । गतो नत्वाऽथ शुश्राव भवनिर्वेदिनीं कथाम् ॥ ८१ ॥
प्रतिबुद्ध. पुरं गत्वा विष्णुं प्रोवाच साञ्जसम् । प्रवया व्रतमादास्ये राज्यमादत्स्व पैतृकम् ॥ ८२ ॥
वञ्चितोऽहमियत्कालं तुच्छसौख्यलवाशया । यदस्था परमानन्दहेतुयोगपराङ्मुख ॥ ८३ ॥
प्राह विष्णुकुमारोऽपि तात ! त्वत्तोऽप्यहं भवात् । भृशमेव विरक्तोऽस्मि तन्ममाग्रजेऽस्तु तत् ॥ ८४ ॥
इत्युदीर्य महापद्मो दोर्भ्यामाकृष्य विष्टरे । अभ्यषेचि निवेश्याशु ताभ्यां पार्थिवसम्पदि ॥ ८५ ॥
राजा विष्णुकुमारश्चोपसुव्रतगुरु व्रतम् । जगृहाते महापद्मश्चक्रयभूदुग्रशासन. ॥ ८६ ॥
तौ स्यन्दनावियत्काल नृपादेशात् तथा स्थितौ । पुरेऽथाभ्रामयच्चक्री प्रथमं रथमार्हतम् ॥ ८७ ॥

जिनप्रवचनौन्नत्यमकार्षीत् किञ्चिदद्भुतम् । राज्ञि जैनेऽभवज्जैनधर्मवान् प्रायशो जनः ॥ ८८ ॥
कोटिशो जिनचैत्यान्यकारयद् भरतेऽखिले । जनान् शक्त्युपदेशाद्यैस्तत्पूजायामवर्तयत् ॥ ८९ ॥
निष्कलङ्कव्रतधरो भेजे पद्मोत्तरः शिवम् । लब्धीर्विष्णुकुमारस्तु विचित्रास्तपसाऽर्जयत् ॥ ९० ॥
मेरुवत् तुङ्गदेहः स्यात् पक्षीव गगने व्रजेत् । कामरूपी भवेन्नानारूपैः पूरयते महीम् ॥ ९१ ॥
इत्यनन्ततपो-वीर्ययुक्तोऽपि क्षितिभृद्दरीम् । प्रविश्य प्रायशो ध्यानलीनोऽस्थात् स निरन्तरम् ॥ ९२ ॥
इतस्ते सुव्रताचार्या हस्तिनागपुरे पुनः । उद्याने समवासार्षुरज्ञासीन्नमुचिश्च तत् ॥ ९३ ॥
पूर्ववैरं स्मरन् व्यज्ञपयच्छ्रीचक्रवर्तिनम् । कोशीकृतवरपदे साम्राज्यं देहि मे निजम् ॥ ९४ ॥
वैरिनिर्यातनं मित्रपालनं पोष्यपोषणम् । स्वैरं धनव्ययं चान्यः कः कर्तुं भूपतेरलम् ? ॥ ९५ ॥
अस्ति कश्चिन्महायागो महाराजोचितः प्रभो ! । वेदप्रोक्तेन विधिना तच्चिकीर्षां प्रपूरय ॥ ९६ ॥
स्वप्रतिज्ञैकनिष्णातो लीलया प्रतिपद्य तत् । प्रविश्यान्तःपुरं चक्री भोगाद्वैतमसाधयत् ॥ ९७ ॥
अध्यतिष्ठत् ततो राज्यं नमुचिर्न क्वचिच्छुचिः । नृपमान्योऽपि हि खलो विश्वकष्टाय किं नृपः ? ॥ ९८ ॥
निर्गत्य नगराद् यागनिमित्तं यागपाटकम् । प्रविश्यादाय तद्दीक्षां गत्वा राजासनेऽविशत् ॥ ९९ ॥
अन्यत्र श्वेतभिक्षुभ्यः सर्वाः प्रकृतयस्तदा । उपायनकरा नेमुरपि पाखण्डलिङ्गिनः ॥ १०० ॥

तदेव च्छिन्नमुद्राव्य प्रकाश्य च कृपाऽरुण । तानेव सुव्रताचार्यान् भट्टराजूहवन्निजे ॥ १०१ ॥
प्रालपच्च यदा य स्याद् याऽदशस्ताद्दशो नृप । मान्य एष स सर्वेषा लिङ्गिनां तु विशेषतः ॥ १०२ ॥
पार्थिवात् क परो नाथो निराधाना हि लिङ्गिनाम् ? । तपोवनान्यपि क्ष्मापै रक्षितानि भवन्ति हि ॥१०३॥
ममापि चिरकरा नृप स्तब्धा अय च निन्दका । मदीयराज्ये न स्थेय सर्वथाऽतो निरङ्कुशै ॥ १०४ ॥
य न्वित न तु मे वध्यो नाथ मे जैनहत्यया । बभाषेऽथैष गुरुणा नमुचिर्मधुरस्वरम् ॥ १०५ ॥
न क्रूर इति नायाता यय नास्मासु मत्सर । समभावा हि मुनयस्तिष्ठन्ति निजकर्मसु ॥ १०६ ॥
भूप शान्तैरशान्तोऽसौ वचनै प्रत्यभाषत । दत्ता सप्त दिना यात तदूर्ध्व च स्थितो वध ॥ १०७ ॥
श्रुत्वेति साधव प्रत्यायाता निजतपोवनम् । काऽत्र प्रतिक्रिया कार्यत्यवदन् गुरवोऽपि तान् ॥ १०८ ॥
मुनिनैकेन तत्रोचेऽधुना तिष्ठति मन्दरे । षष्ट्यब्दशतसंसिद्धतपा विष्णुमुनीश्वर ॥ १०९ ॥
महापद्मानुज इति तद्गिरैव प्रशाम्यति । चारणश्रमण कोऽपि तदाह्वानाय गच्छतु ॥ ११० ॥
क कोऽसि चारण इति व्यक्तापेकोऽब्रवीन्मुनि । शक्तोऽहं गन्तुमागन्तुमीश्वरो नास्मि मेरुत ॥ १११ ॥
बभाषे गुरुरानेता विष्णुरित्यथ सोऽव्रजत् । क्षणात् तदन्तिकं वर्षारात्रेऽपि प्राणमच्च तम् ॥ ११२ ॥
कश्चिदाकस्मिकोऽस्त्यर्थ इति पृष्टो न्यवेदयत् । शक्रनादितमर्थं तमन्यासाध्य स विष्णवे ॥ ११३ ॥

ततः करेण तं लात्वा नभसोत्पत्य स क्षणात्। आचार्यान् विष्णुरुद्याने निर्विलम्बमुपस्थितः ॥ ११४ ॥
वन्दित्वा तदनुज्ञातः सैकसाधुरगात् सभाम्। नमुचेस्तं विनाऽन्यैः सोऽखिलैः सभ्यैरवन्द्यत ॥ ११५ ॥
उपविश्यासने धर्ममाख्याय भणितं ततः। निस्सङ्गसाधुविद्वेषो महानरककारणम् ॥ ११६ ॥
अयं ह्यनुचितः पन्था भूरिक्लेशनिबन्धनम्। सन्तोषिणः सर्वहिता यत् ताप्यन्ते तपोधनाः ॥ ११७ ॥
मुनयोऽमी जगन्नम्या नम्यन्ते पुरुषोत्तमैः। विनयः सर्वशास्त्रोक्तो भवेन्निर्विषयोऽन्यथा ॥ ११८ ॥
तुच्छक्षणिकसाम्राज्यलवान्धा अधमा नराः। मुनिप्रणामं काङ्क्षन्तः पात्यन्ते विधिना ह्यधः ॥ ११९ ॥
कदाशयममुं मुञ्च सुखं तिष्ठन्तु साधवः। किं मत्सरभरग्रस्तः श्वभ्रहेतु विचेष्टसे ? ॥ १२० ॥
किं न नृपेऽभ्यनुज्ञाते तेषां प्रावृडवस्थितौ ?। मुनयो हि न वर्षासु विचरन्ति दयापराः ॥ १२१ ॥
कुकाष्ठादविशिष्टेन प्रोचे नमुचिनेत्यथ। किमत्र पौनरुक्त्येन पञ्च तिष्ठन्तु वासरान् ॥ १२२ ॥
ग्रामे वने पुरे शैले स्थाता तत्परतोऽत्र यः। मद्देशे चौरवद् वध्यो भावी स धवलाम्बरः ॥ १२३ ॥
मान्योऽसि भृशमस्माकमाख्याहि श्वेतवाससाम्। साम्राज्यं वर्तते मेऽत्र यान्तु भो जीवितार्थिनः ! ॥ १२४ ॥
क्रमत्रयमितं स्थानं मया मान्याय तेऽर्पितम्। तद्बहिर्यो मुनिर्दृष्टः शीर्षच्छेद्यः स मेऽस्त्यरिः ॥ १२५ ॥
नायं सामोचितः पापो मूलच्छेद्यस्तु दुस्सहः। इत्यसौ दारुणं कोपं मुनिर्दधदवर्धत ॥ १२६ ॥

स्फुटयन् वैक्रियं रूप प्रदेशानथ पुद्गलान् । तिरयन्नूर्ध्वयंश्चापि सोऽभवल्लक्षयोजन' ॥ १२७ ॥
तदा पट्सुरशैलोऽभूत् तिर्यग्लोकोऽथ पञ्च ते । अकम्पन्त महीकम्पकम्पमाना कृताद्भुतम् ॥ १२८ ॥
कुल्मापा इव पात्रस्था उत्पतन्ति स्म भूधरा । तत्पाददुर्द्धरोर्ध्वाधोऽभवत् सर्वंसहा स्थिता ॥ १२९ ॥
तत्फूत्कारमहावातोद्धता क्षोणिभृतोऽचलन् । क्रमस्तम्भौ स चिक्षेप प्राच्यापाच्यसमुद्रयो ॥ १३० ॥
स पृथु ज्योतिपा चक्र खचारादुदसारयत् । कृत स्थूलं तृतीयाह्नि नमुचे शिरसि न्यधात् ॥ १३१ ॥
विष्टरात् पातयित्वैनमक्षिपद् धरणीतले । अहो ! अत्युग्रपापस्य हस्तप्राप्यमिदं फलम् ॥ १३२ ॥
भीतैश्चनयादिभि पादे गृहीतेऽप्यनुनीतये । करीव कीटिकां लग्ना न विवेद स किञ्चन ॥ १३३ ॥
जगत्क्षोभादवधिना ज्ञात्वा तत् सुरगायनान् । प्राहिणोद् वासवस्तेऽपि तत्कर्णस्था इदं जगु ॥ १३४ ॥
स्वान्यसन्तापकशुद्धधर्मेन्धनविभावसु । पन्था श्वभ्रगते क्रोधो न न्याय्योऽसौ तपस्विनाम् ॥ १३५ ॥
विश्वातिशायिवीर्यस्य कस्ते नमुचिकीटके ? । महारम्भोऽयमेतावान् त्रिजगच्चूरणक्षम ॥ १३६ ॥
नखच्छेद्ये तृणे वज्रपात सोऽयं त्वया कृत' । कुरुष्वोपशम विष्णो ! कृते कार्ये च कि क्रुधा ? ॥ १३७ ॥
प्रक्षिप्तो नमुचि श्वभ्रे आक्रान्तोर्वी त्रिभि क्रमै । चाटितं त्रिजगच्चक्रं क्रुधाऽथो कि करिष्यसि ? ॥ १३८ ॥
चिरादेतानि गेयानि श्रुत्वा कृत्वा जगत्कृपाम् । विष्णुर्निववृते क्रोधादुच्छ्रयाच्च स्ववर्ष्मण. ॥ १३९ ॥

स्वभावस्थो महापद्ममितराश्च यथोचितम् । समुपालभ्य शान्तात्मा बाह्योद्यानमशिश्रियत् ॥ १४० ॥
तदालोच्य प्रतिक्रम्य स मुनिर्व्यवहारतः । विजहार यतः सूत्रे तदालोच्यं न निश्चयात् ॥ १४१ ॥
क्रमात् केवलमासाद्य सिद्धिसम्बन्धभागभूत् । महापद्मोऽपि षट्खण्डमहीं स्वैरमपालयत् ॥ १४२ ॥
त्रिंशद्वर्षसहस्रायुरथाशीतिकरोच्छ्रयः । सुतनिक्षिप्तसाम्राज्यः पर्यन्ते व्रतमग्रहीत् ॥ १४३ ॥
अधीतबहुसूत्रार्थः सुदुष्करतपोरतः । ध्यानधौतो महापद्मः सिद्धोऽभूत् प्राप्तकेवलः ॥ १४४ ॥
वृत्तं विष्णुकुमारस्य प्रसङ्गादभ्यधाय्यदः । श्रीशान्तिनाथशिष्यस्तु विष्णुर्ज्ञेयः परोऽपि हि ॥ १४५ ॥

॥ इति महापद्मचरित्रम् ॥ ४१ ॥

एगछत्तं पसाहित्ता महिं माणनिसूरणो । हरिसेणो मणुस्सिंदो पत्तो गइमणुत्तरं ॥ ४२॥

व्याख्या—एकच्छत्रां महीं प्रसाध्य 'माणनिसूरणो'त्ति दृप्तारातिअहङ्कारविनाशको हरिषेणाख्यो मनुष्येन्द्रः प्राप्तो गतिमनुत्तरामिति । तच्चरित्रसङ्ग्रहवृत्तं यथा—

काम्पील्ये क्षितिभृन्महाहरिसुतसत्पष्टिहस्तोच्छ्रयो मेराकुक्षिसरोऽम्बुजं दशसहस्राब्दायुरुग्रप्रभः ।
चक्री श्रीहरिषेण इत्यभिधया योऽभून्नवाग्रः क्षितेर्भोगं सोऽपि विमुच्य सुव्रतधरो लेभे परां निर्वृतिम् ॥ १ ॥

॥ इति हरिषेणः ॥ ४२ ॥

तथा—

अन्निओ रायसहस्सेहि सुपरिच्चाई दम चरे । जयणामो जिणक्खायं पत्तो गइमणुत्तरं ॥ ४३ ॥

व्याख्या–अन्वितो युक्तो राजसहस्रै सुष्ठु शोभनप्रकारेण राज्यादि परित्यजतीति सुपरित्यागी जयनामैकादशश्चक्री जिनाख्यातं दम चरेत् । ततश्च प्राप्तो गतिमनुत्तरामिति । तच्चरित्रलेशो यथा—

अभूद् राजगृहे चक्री समुद्रविजयाङ्गज. । एकादशो वली वप्राकुक्षिरत्न जयाभिध' ॥ १ ॥
साम्राज्यमुपभुज्याष्टाचत्वारिंशत्करोच्छ्रित । कामभोगविरक्तोऽसावित्यभावयदेकदा ॥ २ ॥
सुचिरमपि उषित्वा बान्धवैर्विप्रयोग सुचिरमपि च रन्त्वा नास्ति भोगेषु तृप्ति' ।
सुचिरमपि सुपुष्ट याति नाश शरीरं सुचिरमपि विचिन्त्यो धर्म एकः सहाय. ॥ ३ ॥
चक्रिणोऽपि हि ये भोगास्तेऽपि पर्यन्तनश्वरा । तदेकं शाश्वतं सिद्धिसौख्यं साध्य विचक्षणैः ॥ ४ ॥
आत्मा हि क्षणिकैर्योगै सुख–दु'खमयैर्भवे । भवेत् सुविपरीतात्मा मोह–मद्यवशवद ॥ ५ ॥
यथैव हि महाभोगा वृथैव हि तथा तथा । स्वप्नेभ्य सकलेभ्योऽपि मालास्वप्नो हि निष्फलः ॥ ६ ॥
मालास्वप्न सुखभ्रान्तः प्रबोधजनितं सुखम् । यदुदासे न तच्छाय्यमबालवयसोऽपि मे ॥ ७ ॥
इति सञ्चिन्त्य संविग्न सुत विन्यस्य राज्यधू' । निष्क्रम्याब्दसहस्रायुरभून्मोक्षाश्रयो जय' ॥ ८ ॥

॥ इति जयचरित्रम् ॥ ४३ ॥

दसन्नरज्जं मुइयं चइत्ताण मुणी चरे । दसन्नभद्दो निक्खंतो सक्खं सक्केण चोइओ ॥ ४४ ॥

व्याख्या–दशार्णदेशस्य राज्यं मुदितं मुदयवन्तं त्यक्त्वा साक्षात् शक्रेण चोदितोऽधिकविभूतिदर्शनेन धर्मं प्रति प्रेरितो दशार्णभद्रो राजा निष्क्रान्तः सन् मुनिस्तपस्वी चरेदचारीदप्रतिबद्धविहारेणेत्यर्थः । तच्चरित्रं यथा—

वराटविषये संनिवेशे धान्यपुराभिधे । महत्तरसुतोऽस्त्येकः प्रकृत्या सरलाशयः ॥ १ ॥
दयिताऽस्य सुदुःशीला तलारक्षसुतं रहः । भुङ्क्ते स्वपतिपारोक्ष्ये राक्षसी हि मृगेक्षणाः ॥ २ ॥
नटपेटकमध्यस्थोऽन्यदा स्त्रीवेषवान् नटः । अनृत्यत् तरुणः कोऽपि सा तत्राजनि रागिणी ॥ ३ ॥
चतुरा च्छन्नमागत्यावादीन्नटमहत्तरम् । चेदनेनैष वेषेण भुङ्क्ते मां निर्भरं रहः ॥ ४ ॥
सुवर्णाष्टशती देया मयैतस्मै तदा ध्रुवम् । इत्यङ्गीकार्य तत् ज्ञापयित्वाऽध्वानं गृहं गता ॥ ५ ॥
पायसीं तत्कृतेऽराध्यत् तावत् सोऽप्यागमन्नटः । क्रमौ प्रक्षाल्य तां भोक्तुमुपाविक्षत् क्षणेन सः ॥ ६ ॥
तं कटाक्षयमाणा सा हुं भुङ्क्ष्वेति वादिनी । तस्य सर्पिः–सितामिश्रां पायसीं पर्यवेषयत् ॥ ७ ॥
यावन्नाद्याप्यसौ भुङ्क्ते तावद् द्वारि स दण्डिकः । आगादकाण्डे तां रन्तुं ततो बालाऽवदन्नटम् ॥ ८ ॥
प्रभीः प्रविश निःशङ्कमुत्तिष्ठ तिलकोष्ठकम् । परतः प्रेषयाम्येनं यावत् सोऽपि तथाऽकरोत् ॥ ९ ॥
तलारक्षोऽविशत् क्षिप्रं क्षैरेयीं वीक्ष्य भाजने । पद्माक्षि ! प्रागिमां भोक्ष्ये ततस्त्वामिति तामवक् ॥ १० ॥

क्षुधाऽऽर्तोऽस्म्यधुना याहि दक्ष ! नायं क्षण. स्थिते' । इत्युक्तोऽपि बलाद् भोक्तु पायसीमासनेऽविशत् ॥११॥
स करोति करं स्थाले यावत् तावदद.पति । शिश्राय निलयद्वार तत सोवाच दण्डिकम् ॥ १२ ॥
त्वर त्वर विनष्टोऽसि तिलापवरक श्रय । स्थेय द्वारेऽस्त्यहिर्दूरे भीत सोऽपि तथा व्यधात् ॥ १३ ॥
आयातोऽस्या पति प्रोचे किमेतदथ साऽलपत् । समुत्पेदेऽभिलापोऽस्यां भोक्ष्येऽहमिति पायसीम् ॥ १४ ॥
मदर्थमीदृशीमेना नाकार्षी कर्हिचित् तत । प्रिये ! तदेतामास्वाद्य जिह्वा मेऽस्तु फलेग्रहिः ॥ १५ ॥
पत्येत्युक्ताऽथ सा प्राहास्नातोऽनर्चितदैवत । अद्याष्टम्यां कथं भोक्ता श्रिये नाचारलङ्घनम् ॥ १६ ॥
पतिव्रतापति स्नात एव नित्यं सति प्रिये ! । स्नाताया त्वय्यहं स्नातो नास्मि किं ? मा भिद वद ॥ १७ ॥
इत्याख्याय बलाद् भोक्तुं तस्या प्रववृते पति । क्षीर-खण्डाज्ययोगो हि ग्रासो मोक्तुं न शक्यते ॥ १८ ॥
इत क्षुधातुर इति प्रमृद्य तिलपर्पटीम् । नट. फूदकरोत् सर्प इति तद् वेद दण्डिक' ॥ १९ ॥
जीवत सकल भावि मा दशन्मामिहोरग । इति भीतस्तदोत्तालस्तलारक्षो विनिर्ययौ ॥ २० ॥
अयं ह्यवसरोऽस्तीति तत्पृष्ठे निर्गतो नट । पु-स्त्रीमिथुनमैक्षिष्ट गृहान्नष्टं तु तत्पति. ॥ २१ ॥
किमेतदित्यनाचारव्यञ्जकं चरितं गृहे । इति पृष्टा सनिर्वेद सोपालम्भ जगाद सा ॥ २२ ॥
मया निषिद्ध एवासी स्नानाचारातिलङ्घने । हा ! वृत्तातिक्रमाद् रुष्टौ गतौ गौरी-महेश्वरौ ॥ २३ ॥

प्राग् न चेतयते मूढो न वा दीर्घं विचारयेत्। लाम्पट्येन कियत् कार्यं विनाशितमिदं त्वया ? ॥ २४ ॥
महत्तरस्तु तच्छ्रुत्वा सरलोऽनुशयार्दितः। देवतामिव मन्वानस्तां पप्रच्छ कृताञ्जलिः ॥ २५ ॥
कश्चित् पुनरुपायोऽस्ति सन्तुष्टौ येन तौ गृहम्। प्रत्यावृत्य प्रविशतः साऽथ हृष्टेत्युवाच तम् ॥ २६ ॥
सर्वर्द्ध्याऽर्चय तौ कान्त ! विभवैर्न्यायसञ्चितैः। इमं हि परमोपायं तत्र वेदविदो विदुः ॥ २७ ॥
अथार्जनाय वित्तस्य महत्तरसुतोऽचलत्। स्वैरिणी पूर्णकामाऽभूत् तत्परोक्षे तदङ्गना ॥ २८ ॥
दशार्णविषयं गत्वेक्षुवाटान् निरमापयत्। क्रमान्नीत्यैव सौवर्णान् षष्टिं माषानुपार्जयत् ॥ २९ ॥
स्वल्पो लाभ इति स्वान्ते न तुष्टस्तदपि प्रियाम्। स्मरन् निवृत्तो देशाय विशश्राम वने क्वचित् ॥ ३० ॥
इतो दशार्णभद्रोऽश्वापहृतस्तत्र भूपतिः। श्रान्तो मध्यन्दिनेऽभ्यागादेक एव तृषातुरः ॥ ३१ ॥
उपाचरत् स तं प्रीत्या हयोत्पर्यणनादिभिः। आनीय शिशिरं नीरमपाययदवीजयत् ॥ ३२ ॥
अथास्तीर्य निजं वस्त्रं व्यश्रामयदवार्तयत्। अरञ्जयन्महीनाथमार्जवाहितसेवया ॥ ३३ ॥
प्राप्ते परिजने राज्ञोपकारीत्ययमादरात्। सत्कृत्याभाषितः कोऽसि कुतो वा किंचिकीरिति ? ॥ ३४ ॥
यथास्थितमसौ सर्वं नृपायाज्ञापयत् तदा। ऋद्धिं ययाचे पूजाऽर्थमुर्वीशोऽथेत्यचिन्तयत् ॥ ३५ ॥
अत्यन्तर्जुर्वराकोऽयमङ्गनैकवशंवदः। तद्विप्रतारितश्चैवं परिभ्रमति मेदिनीम् ॥ ३६ ॥

नयाम्येनं पुर तावत् तत कर्ता यथोचितम् । इतीश सह नीत्वैन दशार्णपुरमभ्यगात् ॥ ३७ ॥
तस्मै सम्पादयामास सर्वं भोज्याम्नरादिकम् । स्वदेवार्चोद्यतो धर्मपुरुषोऽयमितीशिता ॥ ३८ ॥
अत्रान्तरे समवसृत दशार्णगिरिमूर्धनि । वीर विज्ञपयामासोद्यानपालो महीभृते ॥ ३९ ॥
अस्मै दत्त्वेप्सित दानं वीरं नत्वा च भावत' । प्रवर्धमानसद्भाववैभवोऽचिन्तयन्नृप' ॥ ४० ॥
तादृग्विवेकचातुर्यत्यक्तोऽप्येप महत्तर । यद्येव क्लिश्यति स्वेष्टदेवताऽर्चनसम्पदे ॥ ४१ ॥
तदस्माक विवेकश्रीमुख्यसंयोगशालिनाम् । विधातुं युज्यते पूजा विशेपात् त्रिजगद्गुरो' ॥ ४२ ॥
श्लाघ्य तदेव साम्राज्यं यज्जगद्गुरुचन्दने । उपयोगि भवेच्छेपं दुर्गत्येकविपत्फलम् ॥ ४३ ॥
तत् कल्ये स्फुटसर्वर्द्ध्या वन्दिष्येऽह जिनं तथा । यथा न वन्दित. कैरप्ययमर्हन् पुरा नृपैः ॥ ४४ ॥
भास्वत्यथोदिते राजा विहिताहर्मुखक्रिय । विलिप्तालङ्कृत स्नात्वोदारनेपथ्यवन्धुरः ॥ ४५ ॥
कृतालङ्कारया युक्त सेनया चतुरङ्गया । रम्भाऽऽकारलसत्सर्वावरोधपरिवारित' ॥ ४६ ॥
स्वजात्यवाहनारूढै सामन्त–श्रेष्ठि–पण्डितैः । नागरै सचिवैर्वीरैर्वृतश्चन्द्र इव ग्रहै' ॥ ४७ ॥
सर्वातोद्यमहानादसमवायैर्मनोहरै. । कर्णपेयामृतै. सर्वलोकाकाशं प्रपूरयन् ॥ ४८ ॥
उच्चस्वरं सुगम्भीरं पठद्भिर्मागधै. पुर' । नृत्यद्विलासिनीवर्गै. कृतलोकेन्द्रियोत्सव ॥ ४९ ॥

ददद् दानं गजारूढः सुत्रामेवाक्षिगोचरः । स्फीतयन्नतुलामृद्धिं जिनं नन्तुमगान्मुदा ॥ ५० ॥
राज्ञा महत्तरेणापि ववन्दे भगवान् जिनः । भावोन्मीलितचित्ताभ्यां स्तुतश्च परमेश्वरः ॥ ५१ ॥ (षड्भिः कुलकम्)
दृढप्रतिज्ञो दशार्णभद्रोऽसौ पुरुषोत्तमः । मत्कृतादधिकर्द्ध्यर्हद्वन्दनात् प्रतिभोत्स्यते ॥ ५२ ॥
शक्र इत्यवधेर्ज्ञात्वाऽऽहत्योज्ज्वलतरानणून् । दिव्यशक्त्यैरावतेऽष्टौ व्यधत्त धवलान् रदान् ॥ ५३ ॥
तत्र प्रत्येकमष्टाष्टौ दीर्घिकाः पल्वलाम्भसः । तासु प्रत्येकमष्टाब्जीं पद्मे पद्मेऽष्टपत्रिकाम् ॥ ५४ ॥
पत्रे पत्रे च द्वात्रिंशद्बद्धनाटकरासकाः । मध्येविष्टरमासीनः सर्वत्र प्रेक्षको हरिः ॥ ५५ ॥
तत्रोपवीणयामासुः सुराः सर्वर्द्धिभासुराः । अर्हद्गुणांस्तथा विश्वविश्वा गर्वं यथाऽमुचत् ॥ ५६ ॥
ऐरावतस्थ एवेन्द्रस्त्रिः प्रादक्षिणयज्जिनम् । गजाग्रपादनमनाद् ववन्दे च जिनेश्वरम् ॥ ५७ ॥
तादृक् पौरन्दरं वीक्ष्यानुपमानर्द्धिवन्दनम् । नृपो गलितगर्वोऽन्तः शान्तात्मेति व्यचिन्तयत् ॥ ५८ ॥
अहो ! तुच्छस्वभावोऽहं यन्मृत्खण्डैकसाध्यया । तुच्छश्रियाऽवलिप्तोऽस्मि शक्र—चक्र्यादिहीनया ॥ ५९ ॥
माद्यन्त्यदृष्टभद्रौघाः स्तोकेनापि हि वालिशाः । मूषको व्रीहिमास्वाद्य नृत्यत्युच्चैर्मुखो मुदा ॥ ६० ॥
शुद्धधर्ममकार्षीत् प्राग्जन्मन्येष ततोऽधुना । हरिः प्रापेदृशीं लक्ष्मीं किं न कुर्वे तदस्म्यपि ? ॥ ६१ ॥

समाज्ञावयचोऽप्यन्यं नरोऽभ्येति नरं मुदा । स हि पुण्याधिक पुण्यं न सोऽपि विदधातु किम् ? ॥ ६२ ॥
इत्यादि भावयंस्त्यक्तमोहनिद्रो महीपति । आददे सयम वीरान्निर्विण्ण॰ स महत्तर ॥ ६३ ॥
ततो ननाम तं शक्र प्रशशंस च वीप्सया । जितोऽस्म्यमुत्राशक्तोऽसि धीरात्मन् ! दुर्धरे व्रते ॥ ६४ ॥
जय सत्यप्रतिज्ञोऽसि कृतदुष्करवन्दन । स्तुत्वेति स्वर्ययौ शक्र परोऽप्यर्थमसाधयत् ॥ ६५ ॥

॥ इति दशार्णभद्र ॥ ४४ ॥

तथा—

नमी नमेइ अप्पाणं सक्ख सक्केण चोइओ । चइऊण गेह वइदेही सामण्ण पज्जुवट्ठिओ ॥४५॥
करकंडू कलिंगेसु पंचालेसु य दुम्मुहो । नमी राया विदेहेसु गंधारेसु य नग्गई ॥ ४६ ॥
एए नरिंदवसभा निक्खता जिणसासणे । पुत्ते रज्जे ठवेऊण सामन्ने पज्जुवट्ठिया ॥ ४७ ॥

सर्वा गाथा॰ सुगमा । एतच्चरित्राणि प्राक् कथितानि नवमेऽध्ययने ततो ज्ञेयानि । नवर सक्ख सक्केणेति साक्षात् प्रत्यक्ष शक्रेण इन्द्रेण चोदित प्रेरित ॥ ४५-४६-४७ ॥

सोवीररायवसभो चिच्चा रज्जं मुणी चरे । उदायणो पव्वइओ पत्तो गइमणुत्तर ॥ ४८ ॥

अर्थ॰ पूर्ववन्नवरं सौवीरेषु सिन्धु-सौवीरदेशेषु राजवृषभः सौवीरराजवृषभः । तच्चरित्रं यथा—

पुरे वीतभयाभिख्ये सिन्धु–सौवीरनीवृति । आसीदुदायनो राजा राजद्युतिनिकेतनम् ॥ १ ॥
प्रभावत्यस्य महिषी श्रीवीराज्ञाप्रभाविका । अभीचिरिति तत्पुत्रो ज्येष्ठोऽभूद् यौवराज्यभाक् ॥ २ ॥
क्षितीशः सिन्धु–सौवीरमुख्यषोडशनीवृताम् । सत्रिषष्टिशतस्फीतनगराणां सुसम्पदाम् ॥ ३ ॥
दशानां बद्धमौलीनां महीसेनादिभूभृताम् । अन्येषामपि वीरेभ्य–सामन्तामात्यसंसदाम् ॥ ४ ॥
पौरोवृत्त्यमाधिपत्यमाज्ञैश्वर्यं च पालयन् । शशासोदायनः पृथ्वीं मघवेव त्रिविष्टपम् ॥ ५ ॥
( त्रिभिर्विशेषकम् )

इतः कुमारनन्द्यस्ति चम्पायां स्वर्णकृत् पुरि । स्त्रीलोलोऽसौ चतुर्वर्गे कामं काममानयत् ॥ ६ ॥
यत्र यत्राद्भुतां कन्यां वीक्षते वा शृणोति वा । स्वर्णपञ्चशतीं दत्त्वा तां तां गृद्धो व्यवाहयत् ॥ ७ ॥
अपिण्डयत् पञ्चशतीमेष सद्धेपयोषिताम् । अथेर्ष्यालुरविश्वासी द्वारि तिष्ठन् जुगोप ताः ॥ ८ ॥
गोपिता अपि तिष्ठन्ति न नार्यो हि निरर्गलाः । अगोपिता अपि न्याय्ये सत्यस्तिष्ठन्ति वर्त्मनि ॥ ९ ॥
स्वैरं भुङ्क्ते स ता लुब्धोऽन्यप्रवेशमसासहिः । तथापि न तुतोषासौ काष्ठैरिव महादवः ॥ १० ॥
अन्यदा पञ्चशैलाख्यद्वीपेशामर्त्यजाययोः । हासा–प्रहासयोर्विद्युन्माल्यकस्माच्च्युतः पतिः ॥ ११ ॥
ततस्ते दध्यतुः कोऽपि व्युद्ग्राह्यः पुरुषोऽधुना । अस्मद्रूपातुरो मृत्वा भवेद् योऽस्मदसुप्रियः ॥ १२ ॥

इन्द्रेण सह यान्तीभ्यां द्वीपे नन्दीश्वरे तदा । तादृक् कुमारनन्धाभ्यां स्वसाध्यो ददृशे स्मरी ॥ १३ ॥
निरीक्ष्यैते दिव्यरूपाद्भुतलावण्यभासुरे । स्वर्णकृन्मूर्च्छित प्राह के युवां विश्वमोहनम् ? ॥ १४ ॥
आवा हासा–प्रहासाऽऽख्ये देव्याविलाप्य तद्गिरम् । ययाचे चाटुकृद् भोग ढौकयित्वा धनोच्चयम् ॥ १५ ॥
अस्ति यद्यावयो॰ कार्यं पञ्चशैलं तदाऽऽगजेः । इत्युक्त्वा मोहयित्वा तं क्षणादुत्पत्य ते गते ॥ १६ ॥
अत्यातुरात्मा पटहमदापयदयं पुरे । कुमारनन्दिनं पञ्चशैल नयति यो नर॰ ॥ १७ ॥
दत्ते कोटिधन सोऽस्मै तं वृद्धः कोऽप्यवारयत् । अस्मि नेतेत्यसौ लात्वा पुत्रेभ्यो धनमार्पयत् ॥ १८ ॥
स्वभावगत्वरै प्राणैश्चेदर्थोऽमुष्य सिध्यति । कुटुम्बस्य धनार्थैश्च वार्द्धक्यं फलित तदा ॥ १९ ॥
पूर्णपथ्यदन पोत कारयित्वा जरन्नथ । कुमारनन्दिना सार्धमारुह्याब्धौ प्रतस्थिवान् ॥ २० ॥
दूर गत स्वर्णकारं स प्राहाङ्गुलिकाऽग्रतः । किञ्चित् पश्यसि कृष्णाभमयमस्ति महान् वट ॥ २१ ॥
अब्धिकूलाद्रिपादस्थोऽधस्तद् यास्यति वाहनम् । गृह्णीयास्तत्प्ररोह त्वं दृढीभूय स्वधर्मवत् ॥ २२ ॥
पञ्चशैलात् समेष्यन्ति भारुण्डास्तत्र पक्षिण॰ । त्रिपादास्तद्विमध्यांह्रिमाददीथा॰ स्थिराशय॰ ॥ २३ ॥
त्वा ते नेष्यन्ति तं द्वीपमस्तु तत्र तवेप्सितम् । वटाधो भङ्क्ष्यते पोतो जलावर्तेऽतिगह्वरे ॥ २४ ॥
इत्यालापसमकालं प्राप्ते तत्रैव वाहने । स तत्परतया सर्वं तत् कृत्वा प्राप तत्पदम् ॥ २५ ॥

हासा–प्रहासयोस्तत्र वीक्षामास स वैभवम् । उक्तश्चाभ्यां न नौ भोग्यस्त्वमौदारिकवर्ष्मणा ॥ २६ ॥
पुनर्याहि निजं स्थानं किञ्चिदग्न्यादिसाधनम् । कुरु येन भवेः पञ्चशैलद्वीपाधिपत्यभाक् ॥ २७ ॥
सर्वं तत् प्रतिपेदेऽसौ किं न कुर्वन्ति कामिनः ? । ताभ्यामानीय मुक्तोऽसौ चम्पोद्याने ततो द्रुतम् ॥२८॥
पप्रच्छ मिलितो लोकस्तत्र किं चित्रमीक्षितम् ? । स तु हासा–प्रहासेति त्यक्त्वाऽन्यन्नाह किञ्चन ॥ २९ ॥
तावतीष्वपि तत्स्त्रीषु रुदन्तीषु पिशाचकी । तन्मना उपचक्राम कारीषानलसाधनम् ॥ ३० ॥
नागिलाख्योऽस्ति तन्मित्रं श्रावकः परमार्हतः । कृपाप्रीतिपरोऽभ्येत्य मित्रोचितमिदं जगौ ॥ ३१ ॥
अपि पञ्चशतस्त्रीकः स्त्रीद्वयार्थे विषीदसि । किमेतदतिकातर्यमनार्योचितमाचरेः ? ॥ ३२ ॥
लब्ध्वा नृजन्म दुष्प्रापं महाऽऽनन्दकरं मुधा । मा हारय तुच्छभोगभ्रान्तश्चिन्तामणिनिभम् ॥ ३३ ॥
असि यद्यपि भोगार्थी तथापि सुकृतं कुरु । विशिष्टसुकृताद् भोगयोगो मोक्षोऽपि सिध्यति ॥ ३४ ॥
धनार्थिनां धनं दत्ते कामदः कामकामिनाम् । स्वर्गापवर्गसंसिद्धिहेतुर्धर्मो जिनोदितः ॥ ३५ ॥
कार्यादतो निवर्तस्व लोकद्वयविरुद्धतः । सखाऽसि तेन प्रोक्तोऽसि भज सन्तोषमाशये ॥ ३६ ॥
इत्युक्त्यनुशिष्टोऽपि मत्तो मृत्वा तथाऽर्तितः । इङ्गिनीमरणेनासौ पञ्चशैलाधिपोऽभवत् ॥ ३७ ॥
नागिलस्त्वथ तद्वृत्तं वीक्ष्योन्मग्नविरागतः । परिव्रज्याच्युते कल्पेऽजायत त्रिदशोत्तमः ॥ ३८ ॥

तं तत्रावधिनाऽपश्यदन्यदा ससुरोत्कर' । श्रीनन्दीश्वरयात्रायै चचाल त्रिदिवेश्वर. ॥ ३९ ॥
स्थित्वा पटहकोऽकस्माद् विद्युन्मालिगलेऽपतत् । उत्तारितोऽप्याभियोग्यात् तद्गलं नैव मुञ्चति ॥ ४० ॥
निर्विण्णो वादयन्नास्ते तावता नागिलामर. । पुरोऽभ्येत्य जगादेनं तत्कृपाऽल्पीकृतद्युति. ॥ ४१ ॥
मां भो ! प्रत्यभिजानासि प्राहासौ को न वेद व ? । ततो मूढमिम ज्ञात्वा प्राच्यरूपी सुरोऽभणत् ॥४२॥
कारितोऽपि मयाऽकार्षीयत् कार्यमधमोचितम् । इदानीं तत्फल भुङ्क्ष्व किं मुधा परिताम्यसि ? ॥ ४३ ॥
संविग्नोऽसौ तत प्रोचेऽधुनाऽऽख्याहि ममोचितम् । तदा मया न मूढेन मेने मित्र ! क्षमस्व तत् ॥ ४४ ॥
सुरोऽप्याख्यद् वर्धमानस्वामिनः प्रतिमां मुदा । स्वयं कृत्वा तदर्चायां प्रवर्तय बहून् जनान् ॥ ४५ ॥
एवं सम्यक्त्वबीजाप्तिरवन्ध्या ते भविष्यति । एतदेवाविरतानां मुख्यं पथ्यं श्रुतोदितम् ॥ ४६ ॥
उक्तं च–"जो कारवेइ पडिमं जिणाण जियराग-दोस-मोहाणं। सो पावइ अन्नभवे सुहजणणं धम्मवररयणं ॥ १ ॥
दारिद्दं दोहग्ग कुजाइ–कुसरीर–कुगइ–कुमईओ । अवमाण–रोय–सोया न होंति जिणबिंबकारीणं" ॥२ ॥
ततोऽसौ हिमवच्छीर्षाद् गृहीत्वा दारु चान्दनम् । निर्वर्त्य वीरप्रतिमामक्षिपत् काष्ठसम्पुटे ॥ ४७ ॥

---

१ य· कारयति प्रतिमा जिनाना जितराग–द्वेष–मोहानाम् । स प्राप्नोत्यन्यभवे शुभजनन धर्मवररत्नम् ॥ १॥
दारिद्र्य दौर्भाग्य कुजाति–कुशरीर-कुगति–कुमतय । अपमान–रोग–शोका न भवन्ति जिनबिम्बकारिणाम् ॥ २ ॥

षण्मासोत्पातपतितपोतस्योद्भ्रान्तचेतसः । सांयात्रिकस्योत्पातं तं निवर्त्यासावुवाच खे ॥ ४८ ॥
गृहाण सम्पुटं देवाधिदेवप्रतिमाऽऽश्रयम् । अयं विशिष्टतन्नाम्नाऽऽहत्योद्घाट्यः शुभाशयैः ॥ ४९ ॥
निर्विघ्नं प्राप्स्यसे वीतभयं वीतभयं पुरम् । इत्युक्त्वा सम्पुटं दत्त्वाऽऽत्मना देवस्तिरोदधे ॥ ५० ॥
तीर्णोदधिर्वणिग् वीतभयं प्राप्तोऽथ भूपतेः । सम्पुटं पुरतो मुक्त्वोवाच व्याहृतमामरम् ॥ ५१ ॥
मिमेल प्रकृतिः सर्वा नृपतिस्तापसाश्रवः । दध्यौ ब्रह्माच्युतेशानां नाम्नाऽयं विघटिष्यते ॥ ५२ ॥
सृष्टि–पालन–संहारकर्तारोऽमी जगन्मताः । एभ्यो देवाधिदेवोऽन्यस्तापसैर्न निगद्यते ॥ ५३ ॥
इति ध्यात्वा नृपस्तत्तन्नाम–श्यामादिवर्णनैः । परशुं वाहयामास सुतीक्ष्णमधिकारिभिः ॥ ५४ ॥
स तु तद्घातमात्रेण धाराभङ्गमवाप्नुवन् । मिथ्यावादाद् रुष्ट इव विससर्जानलान् कणान् ॥ ५५ ॥
अरे ! रागोरगग्रस्ता देवदेवा भवन्मुखैः । ख्याता इति रुषा तैरज्वालि कौठारिकाननम् ॥ ५६ ॥
सामर्थ्यपतितो व्यर्थीभूतः परशुरुत्पतन् । अस्फोटयच्छिरो मिथ्यादृशां कुग्रहशालिनाम् ॥ ५७ ॥
यो यस्याभिमतो देवः स तन्नाम्ना परश्वधम् । अवाहयत् परं नाप वैलक्ष्यादपरं नरः ॥ ५८ ॥
अथास्मिन्ननुपरते चित्रे व्यतिकरे तदा । आगाद् राज्ञो महादेवी तत्त्वविज्ञा प्रभावती ॥ ५९ ॥
तया सम्पुटमभ्यर्च्य भणितं सुपवित्रया । जिनो देवाधिदेवोऽर्हन् ददातु निजदर्शनम् ॥ ६० ॥

अथ व्यापारितेऽपीपत् कुठारे व्यभजत्तराम् । सम्पुटं प्रादुरासीच्च मूर्त्तिं श्रीचरमार्हत. ॥ ६१ ॥
अम्लानमाल्यसर्वाङ्गप्रतिपूर्णाऽथ चान्दनी । दृष्टा प्रतिकृतिर्जैनी दृग्मेर्मेलयं व्यधाच्च्णाम् ॥ ६२ ॥
अन्त पुरे जिनगृहे ता सस्थाप्य महोत्सवै । त्रिसन्ध्यमर्चयत्येव नित्यं स्नाता प्रभावती ॥ ६३ ॥
हस्तकाभिनयोपेत सा नृत्यत्यर्हतः पुर' । तत्रोपवीणयामास कलकण्ठो नृपः स्वयम् ॥ ६४ ॥
अन्यदाऽतिरस प्रासेऽभिनये क्षितिप शिर । अप्रेक्ष्य श्रीप्रभावत्या विपण्णो व्यग्रमानसः ॥ ६५ ॥
वीणामपातयत् पाणे क्रुद्धा देवी ततोऽलपत् । मया दुरभिनीतं किं क्षिप्ता येन विपश्चिका ? ॥ ६६ ॥
आख्यत् क्षितिपति. कान्ते! मा कुप्योऽनपराधिनि। भ्रान्तोऽस्मि तव शीर्षेऽहं च्युतवीणोऽस्मि तच्छुचा॥६७॥
देव्यूचे किं शुचा स्वामिन्! निष्कलङ्को मया दधे । का भीर्मृत्यो पवित्रश्चेद् धर्म. सुचिरमार्हतः ॥ ६८ ॥
दृढप्रेमाऽसि चेन्नाथ! वैधर्म्यं तत् परित्यज । वैधर्म्याद्दिष्टयोः शिष्टैर्वियोगोऽमुत्र निश्चितः ॥ ६९ ॥
इति प्रियागिरा किञ्चिज्ज्ञाततत्त्वोऽपि तापसीम् । भक्तिं त्यक्तुं न शेकेऽसौ दृष्टिरागो हि दुरत्यजः ॥ ७० ॥
अन्यदाऽर्चाक्षणे चेट्युपानयद् धौतपोतिकाम् । वीक्ष्य तां महिषी रक्तां रोषरक्तेक्षणा क्षणात् ॥ ७१ ॥
अरेऽनवसरज्ञाऽसि कोऽयं रक्ताम्बरक्षण. ? । इत्युक्त्वा मुकुरेणैनां जघानाऽजनि च साऽप्यसून् ॥ ७२ ॥
स्वाभाविकांशुकं दृष्ट्वा मृता चेता व्यचिन्तयत् । राज्ञी धिग् मां भग्ननिजव्रता निष्फलजीविताम् ॥ ७३ ॥

आसन्नमृत्युरेतर्हि स्वार्थं शुद्धिदमात्मनः । साधयामीत्यनशनमयाचत धरेश्वरम् ॥ ७४ ॥
राजाऽऽह स्नेहमुज्झित्वा किमुक्ता रूक्षगीरियम् ? । त्वद्वियोगासहिष्णोर्मे ह्यदः प्राणहरं वचः ॥ ७५ ॥
सत्त्ववानसि शूरोऽस्मि सर्वत्र रणकेलिषु । परं कातर एवास्मि त्वद्वियोगाब्धिलङ्घने ॥ ७६ ॥
अयमासन्न एवैष्यन् वियोगः केन वार्यते ? । प्रसीद साधयाम्यर्थं दुष्प्रापोऽन्त्यजनुःक्षणः ॥ ७७ ॥
इति स्थिराशयां देवीं वदन्तीमाह भूपतिः । अस्तु तेऽभिमतं किन्तु प्रबोध्योऽहं यथा तथा ॥ ७८ ॥
अथाङ्गीकृत्य तद्वाचं प्रपद्यानशनं सुधीः । मृत्या प्रभावती कल्पे प्रथमेऽभूत् सुरोत्तमः ॥ ७९ ॥
देवदत्ताऽभिधा कुब्जा चेटी तां मूर्त्तिमर्हतः । शुश्रूषते क्ष्माऽधीशे जिनधर्मप्रमादिनि ॥ ८० ॥
देवस्तु प्रत्यहं राज्ञः प्रबोधोपायमादधे । स तु तापसदृग्मूढो बुबोध न कथञ्चन ॥ ८१ ॥
अथ प्रभावतीदेवोऽन्यदा तापसरूपभृत् । अढौकयत् सुधास्वादुफलानि नृपतेः पुरः ॥ ८२ ॥
आस्वाद्य तानि भूजानिः कुत्रैतानीत्युवाच तम् । आश्रमे नगरादूरवर्तिनीत्यभणद् व्रती ॥ ८३ ॥
रसज्ञारसवश्योऽसौ समं तेनाश्रमं गतः । तापसैर्भीषणाकारैर्हदं हन्तुं प्रचक्रमे ॥ ८४ ॥
विश्वस्तैभिरहं पश्यन् नीत एको निजाश्रमम् । प्रक्रान्तो वैरिभिरिव हन्तुं भक्तोऽपि पापिभिः ॥ ८५ ॥
इति नश्यन् नृपो दूरं वने तत्र तरोस्तले । दान्त-शान्तान् मुनीन् दृष्ट्वा शरणं तानुपागमत् ॥ ८६ ॥

मा भीरिति समाश्वास्य ते सज्जाः साधवोऽभवन् । तापसेषु निवृत्तेषु तमाहुर्मधुरस्वरम् ॥ ८७ ॥
धर्म एव भयार्तानां त्राणायेह परत्र च । परीक्ष्येव धर्मार्थी देवं धर्मं गुरूनपि ॥ ८८ ॥
वीतरागस्तत्र देवः शुद्धो धर्मो दयामयः । गुरुर्ब्रह्मधरस्त्यक्तसर्वसङ्गो जगद्धितः ॥ ८९ ॥
इति रत्नत्रयस्थैर्यसुधाधौतमनाः स्थितः । कुर्वन् पुण्यानि लभते सुखं स्वर्गापवर्गयोः ॥ ९० ॥
तत् तापसेषु दौरात्म्यं माहात्म्यं चैषु साधुषु । वीक्ष्य क्षितीशः प्रत्यक्षं प्रबुद्धो जैनतां दधौ ॥ ९१ ॥
दर्शयित्वा गुरोऽपि स तामाधेय प्रतिश्रुतिम् । नृपं धर्मे दृढीकृत्य प्रीतः प्राप सुरालयम् ॥ ९२ ॥
आस्थानीस्थ समैक्षिष्ट नृपतिस्त्यक्तदुर्मतिः । श्राद्धीभूतोऽथ कुरुते सत्क्रियाः श्रावकोचिताः ॥ ९३ ॥
इतश्च श्राद्धो गान्धारो जिनजन्मादिभूमिकाः । नत्वा वैताढ्यमूलेऽगान्नन्तुं श्रीशाश्वतार्हतः ॥ ९४ ॥
तत्र तस्याष्टमात् तुष्टा देवता शैलमूर्धनि । तं निनाय ववन्देऽसौ नित्यार्हत्प्रतिमा मुदा ॥ ९५ ॥
भूयोऽप्यानीय वैताढ्यादधोऽमुञ्चदिमं सुरी । शतमष्टोत्तरं तुष्टा तस्मै सा गुटिका ददौ ॥ ९६ ॥
यच्चिन्तयेनामास्ये त्वं क्षेप्ता सा लघु सेत्स्यति । इत्याख्याय तिरोभूता सुरी सोऽपि ततोऽचलत् ॥ ९७ ॥
क्रमात् तां चान्दनीं जीवत्स्वामिमूर्तिं नमस्यितुम् । आगाद् वीतभयं वीर वन्दित्वा मुमुदेतमाम् ॥ ९८ ॥
उत्पन्नरुक् तत्र देवदत्तया परिचारितः । सज्जीभूतः कृतज्ञस्तददत्तास्मै गुटीशतम् ॥ ९९ ॥

कक्षीचक्रे स्वयं दीक्षामथ कुब्जाऽऽहरद् गुटीम् । मम ध्मातजातरूपरूपताऽऽशु भवत्विति ॥ १०० ॥
तत्प्रभावादसौ तादृग् रूपसम्पदभूत् क्षणात् । सुवर्णगुलिकेत्याख्यां लेभे रम्भानिभा जनात् ॥ १०१
अथ भोगार्थिनी दध्यौ मत्पितोदायनो नृपः । अन्ये त्वस्य नृपाः प्रेष्यास्तत् प्रद्योतोऽस्तु मे पतिः ॥१०२॥
अनया वाञ्छया प्राश गुटीमेकां विचक्षणा । तद्देवताऽनुभावेन तद्रक्तोऽभूत् स भूपतिः ॥ १०३ ॥
स दूतीं व्यसृजत् तस्यै साऽजूहवदमुं तया । गजेऽनलगिरौ सोऽप्यारुह्यागान्निशि वेगवान् ॥ १०४ ॥
तयाऽभिरुचितायास्मै प्रोचेऽर्चामार्हतीं यदि । सार्धं नयसि तदहमागच्छाम्यन्यथा व्रज ॥ १०५ ॥
एतत्तुल्यां परामर्चामानीयेमां ततो नयेः । इत्याख्याय तयोषित्वा रात्रिं प्रातस्ततोऽगमत् ॥ १०६ ॥
चान्दनीमपरामर्चां कारयित्वा स तादृशीम् । प्रतिष्ठाप्य तथैवागात् तत्र तां न्यस्य तत्पदे ॥ १०७ ॥
सुवर्णगुलिकां जीवत्स्वामिनोऽर्चां च चौरवत् । प्रद्योतः समुपादायावन्तीं प्रापारुणोदये ॥ १०८ ॥
अथानलगिरिर्मूत्र–पुरीषाद्यं यदत्यजत् । त्रस्तास्तद्गन्धतो वीतभयेभाः खलु जज्ञिरे ॥ १०९ ॥
प्रद्योतागमनं तादृक्प्रबन्धादवधारयन् । शुश्राव स्वर्णगुलिकाऽपहारं धरणीश्वरः ॥ ११० ॥
अस्त्यर्हत्प्रतिमा तावद् गता चेटी प्रयातु सा । इति स्वस्थाशयो मध्यन्दिने स्नातोऽरजोऽम्बरः ॥ १११ ॥
अर्चामर्चयितुं यावत् प्रासस्तावद् व्यलोकयत् । म्लानानि चारुपुष्पाणि शुष्कं चान्दनलेपनम् ॥ ११२ ॥

विषण्णोऽसौ ततो दध्यो नेयमर्चा सुरार्पिता । किन्तु तस्याः प्रतिच्छन्दो धिक् प्रद्योत कुतस्करम् ॥११३॥
सोऽथास्मै व्यसृजद् दूतं सोऽपि गत्वा न्यवेदयत् । चेट्या न नृपतेः कार्यं प्रद्योतैषाऽस्तु ते प्रिया ॥ ११४ ॥
परं चौरवदानीताऽर्चा जीवत्स्वामिनोऽस्ति या । नृपायार्पय तां नो चेद् दास्यसे शिरसा सह ॥ ११५ ॥
सुवं गृहीतां महते सन्तोषी स नराधिपः । तामर्हत परं नार्चां हृता तत्पूजनोद्यतः ॥ ११६ ॥
मालवान् शाधि मा व्यर्थमुदायननृपासिना । छिन्नकण्ठः क्षणं नृत्यन् कौतुकाय भविष्यसि ॥ ११७ ॥
प्रद्योतः प्राह रूक्षाक्षं वीक्षमाणश्चरं नरम् । भक्तोऽसि स्वामिनो यावद् कोऽसीति प्रगल्भसे ॥ ११८ ॥
गृहीता नार्पणायैषा दूत ! साहसिना मया । कोऽप्यस्ति मातृजनितो हरत्वेनां स मद्धात् ॥ ११९ ॥
धार्मिकम्मन्य स स्वामी तामर्चामर्चयत्यलम् । या तन्नियमनिर्वाहकृते मुक्ता मया तदा ॥ १२० ॥
उदासे सिन्धु-सौवीरास्तस्याहमकुतोभय । पालयत्वेष तान् जीवन्नदाता प्रतिमां पुनः ॥ १२१ ॥
वेपमानतनुर्दाता प्रतिमामागते नृपे । इति चारयाय दूतं साग् व्यावृत्यागात् स्वपत्तनम् ॥ १२२ ॥
अथोदायनभूपालश्चचाल पृतनावृत । मौलिबद्धदशक्ष्मापैः सस्वसैन्यैरुपस्कृत ॥ १२३ ॥
प्रयाणैरनवच्छिन्नैर्भानुशोषितविष्टपे । ग्रीष्मकाले पथाऽऽयात स विवेश मरुस्थलम् ॥ १२४ ॥
तत्रातिशयसामर्थ्यात् तृषा नीरसनीवृति । भृशमभ्यभवत् सैन्यं छलमाप्येव दुर्जन ॥ १२५ ॥

कटके मर्त्तुमारब्धे निष्प्रतीकारया तृपा । नृपः प्रभावतीदेवं लब्धागमनमस्मरत् ॥ १२६ ॥
आगत्यावेत्य तद्वृत्तं स विचक्रे त्रिपुष्करम् । आदि-मध्यावसानेषु मरूणामुल्लदज्जलम् ॥ १२७ ॥
अथ तज्जीवन-स्नान-पानसज्जवलो नृपः । गतोऽवन्तीमभिमुखायातं प्रद्योतमब्रवीत् ॥ १२८ ॥
किं वृथा मारितैर्वीरैरङ्गयुद्धं तदावयोः । अस्तु द्विप-रथाश्वादिसदृग्वाहनसंस्थयोः ॥ १२९ ॥
रणो रथस्थयोरस्तु प्रतिश्रुत्येति सोपधिः । प्रद्योतोऽनलशैलेभमारुह्यागाद् रणाजिरम् ॥ १३० ॥
वाग्भ्रष्टोऽसौ जगद्भ्रष्टो भावीति द्रागुदायनः । इभस्योत्क्षिप्तमुत्क्षिप्तं बाणैश्चरणमभ्यधीत् ॥ १३१ ॥
एवं चापतदुग्रेभः प्रद्योतश्चोत्तरंस्ततः । बद्धो भाले पतिर्दास्या इत्यस्याङ्कः कृतोऽयसा ॥ १३२ ॥
मध्येऽवन्ति प्रविश्याथाभ्यर्च्यार्चां क्ष्माभृदर्हतः । यावदुत्पाटयामास तावन्नभसि वागभूत् ॥ १३३ ॥
मा कुरु व्यर्थमायासं नैषाऽर्चाऽलङ्करिष्यति । त्वत्पुरीमित्यसौ श्रुत्वा वैलक्ष्ययुगभूद् भृशम् ॥ १३४ ॥
यदर्थमयमारम्भस्तस्यार्थस्येति वैशसम् । सम्पन्नमिति नो विघ्नस्तत्र किं भावि वर्तते ? ॥ १३५ ॥
ध्यात्वेत्युदायनः स्वस्मै विषयाय न्यवर्तत । मालवानात्मसात् कृत्वा सह नीत्वा तदीश्वरम् ॥ १३६ ॥
विचाले प्रावृषा रुद्धः स्कन्धावारं न्यवीविशत् । वप्रान् दशापि राजानः कृत्वाऽस्थुः परितो नृपम् ॥१३७॥
ततो दशपुरं जज्ञे यत्र भुङ्क्ते नरेश्वरः । तत् प्रद्योतोऽपि यद् भोज्ये वैरिणोऽपि न वञ्चनम् ॥ १३८ ॥

गृहीतपौषधे पर्युषणापर्वणि भूधवे । प्रद्योतमवदत् सूपकारोऽद्याश्नासि किं वद ? ॥ १३९ ॥
किमद्य पृच्छयते नून मारयिष्यति मां विषात् । नित्य सह नृपेणैव भोक्तु. प्रश्नः किमन्यथा ? ॥ १४० ॥
प्रद्योतमिति साशङ्क पुन प्रोवाच पाककृत् । अद्य पर्युषणा राजोपोषितोऽस्तीति पृच्छयते ॥ १४१ ॥
सोऽप्याह कैतवात् पर्वावजग्मे न मयाऽद्य हा ! । साधु ज्ञापितवानेतदहमप्यस्म्युपोषित. ॥ १४२ ॥
ममापि पितरौ श्राद्धौ मोहाज्जात प्रमाद्यहम् । अप्रत्याख्यानिना ह्यस्मिन् कथं स्थेय सुपर्वणि ॥ १४३ ॥
इति प्रद्योतवचनं सोऽपि राज्ञे न्यवेदयत् । सोऽपि सुश्रावको दध्यौ कैतवीति विदन्नपि ॥ १४४ ॥
न शुध्यति प्रतिक्रान्तिर्बद्धेऽस्मिन् मम वार्षिकी । अवस्थितकषायाणां यदेषा नहि तात्त्विकी ॥ १४५ ॥
प्रद्योतमथ सत्कृत्य क्षामयित्वाऽस्य मूर्धनि । तदक्षरापनोदाय हेमपट्टमबन्धयत् ॥ १४६ ॥
पुनर्मालवसाम्राज्यं प्रद्योताय प्रदाय स. । स्वयं वीतभये राज्यमन्वशात्श्रीउदायनः ॥ १४७ ॥
जिनार्चां कुरुते पात्रे दत्ते दानमनेकशः । कारयत्यर्हदावासान् स संविग्न· परार्हतः ॥ १४८ ॥
अन्यदा पौषधागारे स्थित पालितपौषधः । पाक्षिके पूर्वरात्रेऽसौ दध्यौ व्रतविशन्मनाः ॥ १४९ ॥
धन्यास्ते वसुधोद्देशा येष्वर्हज्ज्ञातनन्दनः । सद्वाक्सुधाह्रदो ज्ञानभानुर्विहरति प्रभुः ॥ १५० ॥
यदि प्रसद्य स स्वामी विश्वकारुण्यवारिधिः । इहायाति तदा दीक्षाऽलङ्कारमहमाददे ॥ १५१ ॥

अथ श्रीवर्धमानोऽपि सर्वज्ञः समवासरत्। मृगोद्याने पुरे तत्र सुपर्वपरिषद्वृतः ॥ १५२ ॥
उदायनोऽपि निर्वेदजननीं जिनदेशनाम्। सतत्रोऽप्यशृणोद् गत्वा प्राञ्जलिश्च व्यजिज्ञपत् ॥ १५३ ॥
प्रभो! जनाब्जप्रत्यूष! स्राक् कृत्वा राज्यसुस्थताम्। उपस्यामि मुदाऽऽदाता भवपोतं द्रुतं व्रतम् ॥ १५४ ॥
स्वाम्याह मा विलम्बस्व गृहं यातस्ततो नृपः। मन्त्रिणा मन्त्रमकरोदिति धर्म्यं महामनाः ॥ १५५ ॥
अभीचिरात्मजो राज्ये नीत्वा यदि निवेश्यते। पात्यतेऽसौ तदा श्वभ्रे मया पित्राऽपि दुस्तरे ॥ १५६ ॥
अन्यस्यापि गृहस्थस्य शुद्धिरारम्भिणः कुतः ?। स्वान्यपापनिमग्नस्य राज्ञस्तु नरको ध्रुवः ॥ १५७ ॥
भवितास्मि व्रती केशी राजाऽस्तु भगिनीसुतः। मन्त्रयित्वेति सद्मे तत्पदेऽभिषिषेच सः ॥ १५८ ॥
स्वयं वीरकरे स्फीत्या निस्सङ्गोऽभून्महायतिः। विकृष्टतपसस्तस्य काले कोऽपि गदोऽभवत् ॥ १५९ ॥
गोरसस्तत्प्रतीकार इत्येप दधि गोकुले। पारणादावुपादत्ते ततो न ववृधेऽस्य रुक् ॥ १६० ॥
क्रमाद् वव्राज राजर्षिर्विहरन् वीतभीपुरम्। केशी नृपस्ततोऽभाणि दुष्टामात्येन केनचित् ॥ १६१ ॥
परीषहपराभूतः प्रत्यादातुं महीशताम्। अयमागान्नृपोऽवादीदादत्तामस्य सा यतः ॥ १६२ ॥
अमात्योऽप्यवदन्नेयं नीतिरित्येवमादिना। व्युद्ग्राह्य क्षितिभृच्चित्तं दुष्टश्छिद्राण्यमार्गयत् ॥ १६३ ॥
दधि यस्या गृहे साधुर्लाति तां पशुपालिकाम्। प्रलोभ्य दध्नि स विषमक्षेपयदधार्मिकः ॥ १६४ ॥

त्रिभक्तदेवता पात्रात् तद् दधि द्रागलोठयत् । व्यग्रायां चान्यदा तस्यां लात्वा तद् बुभुजे मुनिः ॥ १६५ ॥
उपयुक्तस्ततो ध्यानी स राजर्षिरनाकुल. । त्रिंशद् दिनान्यनशनी निष्कर्मा प्राप निर्वृतिम् ॥ १६६ ॥
ऋषिघातमहापापं केनापि नहि वारितम् । इति कोपारुणा देवी नगरं तत् सनागरम् ॥ १६७ ॥
पूरयित्वा पांशुपूरैरुत्तुङ्गं स्थलमातनोत् । पापानुमतिसम्बन्धादनर्थो हि न संशय. ॥ १६८ ॥
न मां न्यवीविशद् राज्ये मत्पितेत्यभ्यसूयया । पुराऽप्यभीचिश्चम्पायां भेजे कोणिकभूभुजम् ॥ १६९ ॥
स तत्र तत्प्रसादेनाभुङ्क्त भोगान् यथेप्सितम् । सम्यक्त्वाणुव्रताद्यं च सुश्राद्धत्वमधारयत् ॥ १७० ॥
किन्तूदायनभूपाले पितर्यत्यक्तमत्सर. । संलिख्योपोषितो मासमनालोचिततत्पद. ॥ १७१ ॥
मृत्वाऽसुरकुमारोऽभूत् पल्यायुः स ततश्च्युत. । नृजन्माप्य विदेहेषु कर्म निष्ठाप्य सेत्स्यति ॥ १७२ ॥

॥ इति उदायनचरित्रम् ॥ ४८ ॥

तहेव कासीराया सेओ–सच्च–परक्कमो । काम–भोगे परिच्चज्ज पहणे कम्ममहावण ॥ ४९ ॥

व्याख्या–तथैव तेनैव प्रकारेण काशिराज. काशिमण्डलाधिपतिर्नन्दनाभिधान सप्तमबलदेव इत्यर्थ. । श्रेयसि प्रशस्ये सत्ये संयमे पराक्रमो यस्येति श्रेय.–सत्य–पराक्रम. काम–भोगान् परित्यज्य 'पहणे' त्ति प्रहतवान् कर्ममहावनमिति । तद् यथोचितं चरितम्–

काश्यामग्निशिखो राजा जयन्त्यस्य प्रियाङ्गना । तद्भवः सप्तमो रामः पुत्रोऽभून्नन्दनाभिधः ॥ १ ॥
दत्तः शेषवतीकुक्षिहंसस्तस्यानुजो हरिः । पितर्युपरते दोष्मान् भरतार्धमसाधयत् ॥ २ ॥
नन्दनानुगतो राज्यश्रियं स्फीतमपालयत् । षट्पञ्चाशत्सहस्राब्दायुर्धूमायामगान्मृतः ॥ ३ ॥
नन्दनोऽथ समादाय श्रामण्यं समताऽश्चितः । ध्यानैकतानः सम्प्राप केवलज्ञानमुज्ज्वलम् ॥ ४ ॥
पञ्चषष्टिसहस्राब्दीमनुपाल्यायुरद्भुतम् । सिद्धिं षड्विंशतिधनुःप्रमिताङ्गः प्रपेदिवान् ॥ ५ ॥

॥ इति नन्दनचरित्रम् ॥ ४९ ॥

तहेव विजयओ राया आणट्ठाकित्ति पव्वए । रज्जं तु गुणसमिद्धं पयहित्तु महाजसो ॥ ५० ॥

व्याख्या–तथैव विजयो द्वितीयबलदेवः 'आणट्ठाकित्ति' त्ति आ समन्तात् नष्टा अकीर्तिर्यस्येत्यानष्टाकीर्तिः प्राव्राजीत् । तुशब्दस्याप्यर्थस्य व्यवहितसम्बन्धात् राज्यं गुणसमृद्धमपि प्रहाय महायशाः । तद् यथा—

द्वारावत्यां ब्रह्मराज–सुभद्रातनुजो हली । द्विपृष्ठवासुदेवस्याग्रजोऽभूद् विजयाख्यया ॥ १ ॥
सोऽपि द्वासप्ततिसमालक्षायुषि च केशवे । मृते संवेगनिर्मग्नः प्रपेदे विशदं व्रतम् ॥ २ ॥
स पञ्चसप्ततिशरल्लक्षायुरथ चोच्छ्रितः । धनूंषि सप्ततिः प्राप्य केवलं शिश्रिये शिवम् ॥ ३ ॥

॥ इति विजयो द्वितीयो बलदेवः ॥ ५० ॥

तहेवुग्ग तवं किच्चा अव्वक्खित्तेण चेयसा । महाबलो रायरिसी आदाय सिरसा सिरिं ॥ ५१ ॥

व्याख्या—तथैवोग्रं तप कृत्वा अव्याक्षिप्तेन चेतसा । महाबलो राजर्षिरादाय गृहीत्वा शिरसा मस्तकेन 'अ-त्यादरख्यापकमेतत्' श्रियं भावश्रियं सयमरूपा तृतीयभवे परिनिर्वृत इति । तच्चरितं यथा—

पुरे गजपुरे राजा पौरभाग्यमिव स्फुटम् । बली बलोऽस्ति भूपाल॰ प्रजावत् पालयन् प्रजा॰ ॥ १ ॥
प्रभावत्यस्य दयिता न कान्ता यत्पराऽद्भुता । महाबलस्तयो पुत्र सिहस्वप्नपुरस्कृतः ॥ २ ॥
तज्जन्मनि पिता तस्याकारयद् गुप्तिशोधनम् । मानवृद्धिं विश्वचित्रप्रदान् सानन्दमुत्सवान् ॥ ३ ॥
धात्रीपरिग्रहीतोऽसौ ववृधेऽम्बुनि पद्मवत् । कलाश्चाकलयत् सर्वा रुच्यं प्राप च यौवनम् ॥ ४ ॥
अनन्यतुल्यरूपाणा नृप॰ सद्गुणसम्पदाम् । तेनाष्टराजकन्याना पाणिग्रहमकारयत् ॥ ५ ॥
वासवेश्माष्टकभ्राजि स्वर्विमाननिभं महत् । प्रादादस्मै नृप॰ सौधं प्रीतिदान च तद् यथा ॥ ६ ॥
हिरण्य–स्वर्णयोरष्टौ कोटी स कुण्डलाष्टकम् । मौलिसौवर्णकस्थालाष्टक सन्नाटकाष्टकम् ॥ ७ ॥
दशवेश्मसहस्राढ्यग्रामकर्मकराष्टके । पर्याप्तमन्यदप्यस्य भूपो भोगेऽन्वमन्यत ॥ ८ ॥
राज्य तव तवैवैष कोशोऽसङ्ख्यधनो महान् । उपभुङ्क्ष्व श्रिय स्वैरमिति स्निग्धगुरोर्गिरः ॥ ९ ॥
ताभिः प्रियाभिस्तत्सौधे तथाविधसुखाम्बुधौ । निर्मग्नोऽसौ न बुबुधे गतं कालं महाबलः ॥ १० ॥

अन्यदा जगदीशस्य विमलस्यार्हतो गणी । पुरेऽत्र समवासार्षीद् धर्मघोषो मुमुक्षुयुक् ॥ ११ ॥
तत्र पर्षदि पूर्णायां सतत्रः श्रीमहाबलः । भृत्याज्ञापितवृत्तान्तः प्रीत्या गत्वाऽनमद् गुरून् ॥ १२ ॥
भवक्लेशातिबाहुल्यं सिद्धिसौख्यातिशायिताम् । बन्ध–मुक्तिनिदानत्वमाश्रवैतन्निरोधयोः ॥ १३ ॥
महाऽऽरम्भादितः श्वभ्रं कषायेभ्यो बत क्षयम् । महाव्रतात्मकं शुद्धं धर्मं चोपादिशद् गुरुः ॥ १४ ॥
महाबलोऽप्यवस्थाप्य गुरून् संविग्नमानसः । व्रतेच्छुर्गृहमागत्य पितरौ प्राह साञ्जसम् ॥ १५ ॥
धर्मघोषानगारस्य देशनासुरशाखिनः । मुखाद् धर्मः श्रुतः शुद्धो रुचितश्च सुपथ्यवत् ॥ १६ ॥
धन्यः सुलब्धजन्माऽसि कृतार्थोऽसि कुलोद्वह ! । श्रुतो यद् धर्म इत्युक्ते पितृभ्यामिति सोऽवदत् ॥ १७ ॥
जन्म–मृत्यु–जराभीतो भवोद्विग्नो महासुखाम् । प्रव्रज्यामभ्युपादाता तातौ ! युष्मदनुज्ञया ॥ १८ ॥
अथ प्रभावती कर्णविषमाकर्ण्य तद्वचः । पपात मूर्च्छया क्लिन्नगात्रा भुवि सवेपथुः ॥ १९ ॥
सवायुवारिधाराभिः कथञ्चिल्लब्धचेतना । रुदन्ती विहिताक्रन्दं सशोकमिदमब्रवीत् ॥ २० ॥
इष्टः कान्तो रत्नभूतः एक एव त्वमात्मजः । जीवितव्यादप्यभीष्टः कुलबीजं सुदुर्लभः ॥ २१ ॥
क्षणमात्रं वियोगस्ते पित्रोः प्राणहरो ध्रुवम् । यावदस्मज्जीवितव्यं तन्नन्दन ! गृहे वस ॥ २२ ॥
ततः पक्ववया जातसन्तानः प्रव्रजिष्यसि । महाबलोऽपि श्रुत्वेदं पितरावाह धीरधीः ॥ २३ ॥

तथैतद् यद् भवत्प्रोक्त पर मानुष्यको भव. । जरा–मृत्यु–व्यसन–रुक्–शोक–सन्तापसङ्कुलः ॥ २४ ॥
अध्रुव स्वप्नसङ्काशो नाशधर्मेन्द्रजालवत् । असौ पूर्वमयं पश्चान्मृति लब्धेति वेद क. ? ॥ २५ ॥
अहीनायुरत स्वस्थ' स्वीकरोमि लघु व्रतम् । अथ माताऽपि तं दोर्भ्यामादायाङ्कस्थमित्यवक् ॥ २६ ॥
विशिष्टरूप–सौभाग्य–विवेक–ज्ञानसेवधे' । सुखोचितं तव वपु सुकुमारं सुलक्षणम् ॥ २७ ॥
युवाऽस्यनुभवपथं नय भोगान् गत वय. । क्वेदं भूयोऽथ वार्धक्ये प्रव्रजेरथ सोऽवदत् ॥ २८ ॥
दु.खकोश इद देह विविधव्याधिमन्दिरम् । सिरापिनद्धमांसास्थि त्वग्मात्रे किञ्चदद्भुतम् ॥ २९ ॥
अशुचिमयमशुचिजनितमशुचिकरं देहमशुचिसंस्रम् । सततं जराकटाक्षितमबलं च मृदामभाण्डमिव ॥३०॥
तुच्छे रागोऽत्र क' काये तारुण्येऽपि च चञ्चले । क्षणेऽस्मिन् दुर्लभे स्वार्थं साधयाम्यथ सा जगौ ॥ ३१ ॥
विश्वविश्वोपमातीता एता. कान्तास्तवाद्भुता. । कुलीना. सत्कला दक्षाश्चारुशीलार्जवक्षमा. ॥ ३२ ॥
विनीता स्वादुभाषिण्य' सद्भावस्नेहबन्धुरा' । भुङ्क्ष्वाभिर्विषयान् स्वैरं दिवीन्द्रस्यापि दुर्लभान् ॥ ३३ ॥
उत्कृष्टतपसोऽप्याहुरेतदेवातुल फलम् । अथाक्षोभ्यमना वाचमाददेऽसौ महाबल. ॥ ३४ ॥
बहुविघ्ना अमी भोगाः शुक्र–रक्ताद्यशौचजा. । स्वल्पका स्वल्पकालीनाः क्लेशसाध्या जडप्रिया' ॥ ३५ ॥
विपाककटव सिद्धिसुखानन्दविबन्धकाः । मूलं दुर्गतिदु.खानां तातो ! नामी तपःफलम् ॥ ३६ ॥

पताकायां तु को रागः को रागो ननु विद्युति ? । सन्ध्यायां ननु को रागः को रागो ननु योषिति ? ॥३७॥
अथ ताचाहतुर्द्रव्यं वंशागतमथार्जितम् । विपुलं स्वर्ण–रत्नादि धान्यादि द्विपदादि च ॥ ३८ ॥
समृद्धिमेतां सफलीकुरुष्व भुवने ह्यसौ । दुष्प्रापाऽस्यै हि खिद्यन्ते जनास्तां त्यज मा मुधा ॥ ३९ ॥
सोऽथाह मेघनिर्घोषमर्थजातमिदं चलम् । अग्नि–चौर–नृप–प्रेत–दायादाधीनवैशसम् ॥ ४० ॥
सन्तोषसुखमूलाग्नि लोभोन्मादविवर्धनम् । मृत्यावावश्यकत्यागं स्ववशैस्त्याज्यमुत्तमैः ॥ ४१ ॥
जनकावथ चारित्रोद्वेजिनीभिरवोचतुः । गीर्भिर्यथा व्रतं वत्स ! कष्टपाल्यं भवादृशाम् ॥ ४२ ॥
चर्वणीया यवा लौहा दोर्भ्यां लङ्घ्यो महोदधिः । पातव्याऽग्निशिखा दीप्ता यत् त्वमादित्ससे व्रतम् ॥४३॥
प्रतिस्रोतसि गङ्गायाः कथं वत्स ! गमिष्यसि ? । कथं वा खड्गधारायां कथं दीक्षां चरिष्यसि ? ॥ ४४ ॥
ब्रह्म पाल्यं सदा नाधाकर्मभोज्यं तपोधनैः । सर्वे परीषहाः सह्या भूशय्या केशलुञ्चनम् ॥ ४५ ॥
अस्नानं सततं भिक्षालब्धं वीतरसाशनम् । मृगचर्येत्यदः सर्वं सुखिनो दुष्करं तपः ॥ ४६ ॥
त्वां च कष्टगतं भिक्षाचरं नष्टप्रतिक्रियम् । पश्यन्तौ वत्स ! जीवावः कथमावां गृहस्थितौ ? ॥ ४७ ॥
अथो महाबलोऽवादीदिहलोकैकचेतसाम् । अदीर्घदर्शिनां क्लीव–कातराणां जडात्मनाम् ॥ ४८ ॥
महाव्रतात्मको भारो दुर्वाह्यः क्षुद्रदेहिनाम् । लीलोत्पाट्यः सुधीराणां ज्ञातमोक्ष–भवाध्वनाम् ॥ ४९ ॥

मृत्युभीतो हि कृपण कोटिं दद्यान्नरेशितु । भवभीतस्तथा ज्ञानी किं न कुर्यात् सुदुष्करम् ? ॥ ५० ॥
पित्रोरङ्कगतमपि क्रियमाणप्रतिक्रियम् । अपि बाल नयत्यन्तमवशं मृत्युकेशरी ॥ ५१ ॥
प्राप्ये ह्युपनतेऽकस्माज्जीवानां कर्मण फले । नेक्षि कस्यापि सामर्थ्यं सुहृदो रटतोऽपि हि ॥ ५२ ॥
समुदायकृतं कर्म समुदायेन भुज्यते । चेद् युवामपि गृह्णीथो व्रतं तदतिसुन्दरम् ॥ ५३ ॥
एव दृढाशय ज्ञात्वा पितरौ तं महाबलम् । अकामावप्यनुज्ञातवन्तौ तद्व्रतहेतवे ॥ ५४ ॥
अथ क्षितीश्वर कौटुम्बिकै पुरमशोभयत् । केतनैर्नाटकैर्गीत-वादित्रैर्दान-तोरणैः ॥ ५५ ॥
सिंहासने निवेश्याभिप्रार्च्य प्रीत्या महाबलम् । सुवर्णकलशानीतैरभ्यषिञ्चज्जलोत्करैः ॥ ५६ ॥
सत्कृत्य समलङ्कृत्य प्राञ्जली चरणोन्मुखम् । पितरावाहतु पुत्र ! प्रियं कुर्वः किमस्तु ते ? ॥ ५७ ॥
वेषो मे प्रिय इत्युक्ते नृपति कुत्रिकापणात् । आनाययल्लक्षमूल्यरजोहरण-पात्रके ॥ ५८ ॥
आहूयच दिवाकीर्त्ति तन्मूल्येनैव पावनम् । अकर्तयत् स तत्केशांश्चतुरङ्गुलवर्जितान् ॥ ५९ ॥
तांश्च मुक्ताफलस्थूलाश्रुमुखी सू: प्रभावती । हंसपक्ष्मपटेनोच्चै: प्रतीच्छ्योच्छीर्षकेऽमुचत् ॥ ६० ॥
महाबलोऽथ गोशीर्षचन्दनागुरुलेपवान् । रुरोह शिविका प्रीत्या सहस्रजनवाहिनीम् ॥ ६१ ॥
छत्र-चामरविभ्राजी नैकलोकपुरस्कृत । ददद् दानं दधद् ध्यानं प्रव्रज्याऽऽह्लादहेतुकम् ॥ ६२ ॥

यतश्चैवमतो निगमयन्नाह—

कहं धीरो अहेऊहिं अत्ताणं परियावसे ? । सव्वसंगविणिम्मुक्के सिद्धे हवइ नीरए ॥ ५४ ॥ त्ति बेमि ॥

व्याख्या—कथं धीरोऽहेतुभिः पूर्वोक्तैरात्मानं पर्यावासयेत् ? कथमात्मानमहेत्वावासितं कुर्यादित्यर्थः । किं पुन-
रात्मनोऽहेतुवासनाया अकरणे फलमित्याह—सर्वे सङ्गा द्रव्यतो द्रविणादयो भावतस्तु मिथ्यारूपत्वादेत एव क्रि-
यादिवादास्तैर्विनिर्मुक्तः सर्वसङ्गविनिर्मुक्तः सन् सिद्धो भवति नीरजाः कर्ममलहर्त्ता तदनेन अहेतुपरिहारस्य सम्यग्ज्ञान-
हेतुत्वेन सिद्धिः फलमिति ब्रवीमीति पूर्ववत् ॥ ५४ ॥ ग्रं० ११३२–२२ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां
सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायामष्टादशमध्ययनं समाप्तम् ॥ १८ ॥

## अथ एकोनविंशं मृगापुत्रीयाख्यमध्ययनम्।

इहानन्तराध्ययने भोगर्धित्याग उक्तस्ततश्च श्रामण्य तच्चाप्रतिकर्मतया श्लाघ्यं स्यादिति तत्प्ररूपकमेकोनविंशमध्ययनमारभ्यते।

सुग्गीवे नयरे रम्मे काणणुज्जाणसोहिए। राया वलभद्द त्ति मिया तस्सग्गमाहिसी ॥ १ ॥

व्याख्या—सुग्रीवाख्ये नगरे रम्ये मनोहरे काननैर्वृहद्वृक्षाश्रयैर्वनैरुद्यानैरारामै क्रीडावनैः शोभिते तत्र राजा वलभद्र इति नामेति मृगा तस्य राज्ञोऽग्रमहिषी पट्टराज्ञी ॥ १ ॥

तेसिं पुत्ते वलसिरी मियापुत्ते त्ति विस्सुए। अम्मा-पिऊण दइए जुवराया दमीसरे ॥ २ ॥

व्याख्या—तयो राज-राज्ञ्यो पुत्रो वालको वलश्रीरिति मातृपितृदत्तनामा लोके च मृगापुत्र इति विश्रुत॰ ख्यातो मातृनाम्ना कृत्वा अम्नापित्रोर्दयितो वल्लभो विनीतत्वात् युवराज। पुनर्दमिन उपशमिनस्तेपामीश्वर इवेश्वरः सहजोपशमभावत॰ स्वामी भाविकालापेक्षं चैतत् ॥ २ ॥

नंदणे सो उ पासाए कीलए सह इत्थिहि। देवो दोगुंदुगो चेव निच्चं मुइअमाणसो ॥ ३ ॥

व्याख्या—नन्दने लक्षणोपेततया समृद्धिजनके स मृगापुत्र॰ पुनः प्रासादे क्रीडति विलसति सह स्त्रीभि॰। दोगु-

न्दकदेव इव ' चः पूरणे ' दोगुन्दकाश्च त्रायस्त्रिंशाः; तथाचाऽऽहुः—" दोगुंन्दुगा य देवा निचं भोगपरायणा । तायत्तिस त्ति वुच्चंति " इति नित्यं मुदितमानसो हृष्टचित्तः ॥ ३ ॥

मणि-रयण-कुट्टिमतले पासायालोयणे ठिओ । आलोएइ नगरस्स चउक्क-तिय-चच्चरे ॥ ४ ॥

व्याख्या—स चैवं क्रीडन् कदाचिन्मणयश्चन्द्रकान्ताद्याः, रत्नानि गोमेयकादीनि तैरुपलक्षितं कुट्टिमतलं यस्मिन् एवंविधे प्रासादालोकने सौधगवाक्षे स्थितः आलोकते कुतूहलतः पश्यति नगरस्य सुग्रीवनाम्नश्चतुष्क-त्रिक-चत्वराणि प्रतीतानि ॥ ४ ॥

अह तत्थ अइच्छंतं पासई समणसंजयं । तव-नियम-संजमधरं सीलड्ढं गुणआगरं ॥ ५ ॥

व्याख्या—अथानन्तरं तत्रेति तेषु चतुष्कादिषु ' अइच्छंतं 'ति अतिक्रामन्तं गच्छन्तं पश्यति श्रमणं संयतं तपश्च प्रतीतं नियमश्च द्रव्याद्यभिग्रहात्मकः संयमश्च सप्तदशधा तान् धारयतीति तपो-नियम-संयमधरस्तमत एव शीलाढ्यं गुणानां ज्ञानादीनामाकरस्तम् ॥ ५ ॥

तं देहइ मियापुत्ते दिट्ठीए अणिमिसाए उ । कहिं मन्नेरिसं रूवं दिट्ठपुवं मए पुरा ॥ ६ ॥

१ दोगुन्दकाश्च देवा नित्यं भोगपरायणाः । त्रायस्त्रिंशा इत्युच्यन्ते ।

व्याख्या—तं श्रमण सयतं 'देहइ'त्ति पश्यति मृगापुत्रो युवराजो दृष्ट्वा 'तुरेवार्थे' अनिमिषयैव क मन्ये जाने ईदृश रूपमाकारो दृष्टपूर्वं पूर्वमप्यवलोकित मया पुरा पूर्वजन्मनि ॥ ६ ॥

साहुस्स दरिसणे तस्स अज्झवसाणमि सोहणे । मोह गयस्स सतस्स जाईसरणं समुप्पन्नं ॥ ७ ॥

व्याख्या—साधोर्दर्शने तस मृगापुत्रस्याध्यवसानेऽन्त:करणपरिणामे शोभने क्षायौपशमिकभाववर्तिनि मोह क्वेद मया दृष्टमिति चिन्तासङ्घट्टजमूर्च्छारूप गतस्य सतो जातिस्मरणमुत्पन्नम् ।

"देवलोए चुओ सतो माणुस भवमागओ । सन्निनाणसमुप्पन्ने जाई सरइ पुराणिय" ॥ १ ॥ ७ ॥

जाईसरणे समुप्पन्ने मियापुत्ते महड्ढिए । सरइ पोराणिय जाइ सामण्ण च पुरा कयं ॥ ८ ॥

व्याख्या—सुगमं नवर 'सरइ' त्ति स्मरति पौराणिकीं जातिं जन्म श्रामण्यं च पुरा कृतं जन्मान्तरानुष्ठितमिति ॥८॥

अथोत्पन्नजातिस्मरणोऽसौ यत् कृतवास्तदाह—

विसएहिं अरज्जतो रज्जतो सजममि य । अम्मा-पियर उवागम्म इम वयणमब्बवी ॥ ९ ॥

व्याख्या—सुब्व्यत्ययाद् विषयेषु शब्दादिष्वरज्यन्नभिष्वङ्गमकुर्वन् रज्यन् रागं कुर्वन् क ? संयमे चाम्बा-पितरावुपागत्येद वक्ष्यमाणं वचनमब्रवीदिति ॥ ९ ॥

---

१ देवलोकाच्युतः सन् मानुष भवमागतः । सञ्ज्ञिज्ञानसमुत्पन्नो जातिं स्मरति पौराणिकीम् ॥ १ ॥

तदेवाह—

सुयाणि मे पंच महव्वयाणि नरएसु दुक्खं च तिरिक्खजोणिसु ।
निविन्नकामो मि महन्नवाओ अणुजाणह पव्वइस्सामि अम्मो ! ॥ १० ॥

व्याख्या—श्रुतान्याकर्णितानि 'अन्यजन्मनीत्याशयः' । मे मया पञ्च महाव्रतानि हिंसाविरत्यादीनि । तथा नरकेषु दुःखं च तिर्यग्योनिषु च दुःखं 'उपलक्षणत्वाद् देव-मनुष्यभवयोर्दुःखं' 'श्रुतमिति योज्यम्' । ततश्च निर्विण्णकामो निवृत्ताभिलाषोऽस्मि अहं कुतः ? महार्णव इव महार्णवः संसारस्तस्माद्तोऽनुजानीतानुमन्यध्वं 'मामिति शेषः' प्रव्रजिष्यामि 'अम्मो' त्ति हे अम्ब ! 'पूज्यतरत्वान्मातुरामन्त्रणम्' ॥ १० ॥

प्रव्रज्याहेतुवैराग्यमाह—

अम्म ! ताय ! मए भोगा भुत्ता विसफलोवमा । पच्छा कडुयविवागा अणुबंधदुहावहा ॥ ११ ॥

व्याख्या—हे अम्ब ! हे तात ! मया भोगा भुक्ता विषफलोपमाः । यत एते पश्चात् कटुकविपाका अनिष्टपरिपाका आपातमधुरा इति भावः । अनुबन्धदुःखावहा अनवच्छिन्नदुःखदायिनः, यथा हि विषफलमास्वाद्यमानमादौ मधुरं विपाके च कटुकं सातत्येन दुःखदायि चैवमेतेऽपीत्याशयः ॥ ११ ॥

इमं सरीर अणिच्च असुई असुइसंभवं । असासयावासमिणं दुक्ख-केसाण भायणं ॥ १२ ॥

व्याख्या—इदं प्रत्यक्षगतं शरीर देहोऽनित्यमशुचि स्वाभाविकशौचरहितमशुचिसम्भवमशुचिरूपशुक्र-शोणितोत्पन्नम् । तथा अशाश्वत कथञ्चिदवस्थितत्वेऽप्यनित्य आवास· 'प्रक्रमाज्जीवावस्थानं' यस्मिन्नित्यशाश्वतावासं पुनरिदमित्यभिधानमत्यसारत्वसूचक दु.खहेतूनां क्लेशानां ज्वरादिरोगाणां भाजनम् ॥ १२ ॥

यत एवमत.—

असासए सरीरंमि रइ नोवलभामहे । पच्छा पुरा व चइयव्वे फेणवुब्बुयसन्निभे ॥ १३ ॥

व्याख्या—अशाश्वते विध्वंसनशीलिनि शरीरे देहे रतिं चित्तस्वास्थ्यं नोपलभे न प्राप्नोमि। पश्चाद् भुक्तभोगावस्थायां वार्धक्यादौ पुराऽभुक्तभोगितायां वा बाल्यादौ त्यक्तव्येऽवश्यत्याज्ये फेनबुद्बुदसन्निभे क्षणदृष्टनष्टतया ॥ १३ ॥

संसारनिर्वेदस्य हेतुमाह—

माणुसत्ते असारंमि वाही-रोगाण आलए । जरा-मरणघत्थंमि खणं पि न रमामहं ॥ १४ ॥

व्याख्या—मानुषत्वे असारे व्याधय. कुष्ठाद्या रोगा ज्वरादयः तेषामालये गृहे जरा-मरणग्रस्ते क्षणमपि न रमे नाभिरतिं लभेयमहमिति ॥ १४ ॥

मनुष्यभवस्य निर्वेदहेतुत्वमभिधाय चातुर्गतिकसंसारस्य तदाह—

जम्मं दुक्खं जरा दुक्खं रोगाणि मरणाणि य । अहो ! दुक्खो हु संसारो जत्थ कीसंति जंतुणो ॥ १५ ॥

व्याख्या—अहो ! इति जीवसम्बोधनम् । 'दुक्खो हु' त्ति दुःखहेतुरेव संसारो जन्मादिनिबन्धनत्वात् तस्य । येऽत्र चातुर्गतिके संसारे क्लिश्यन्ति बाधामनुभवन्ति 'जन्मादिदुःखैरेवेति गम्यम्' जन्तवः प्राणिनः शेषं स्पष्टम् । नवरं जरा वृद्धावासः । रोगा आतङ्काः । मरणं मृतिः ॥ १५ ॥

तथा—

खेत्तं वत्थुं हिरण्णं च पुत्त-दारं च बंधवा । चइत्ता णं इमं देहं गंतव्वमवसस्स मे ॥ १६ ॥

व्याख्या—क्षेत्रं, वास्तु गृहं, हिरण्यं रुप्यमघटितसुवर्णं च, पुत्रं, दारा स्त्रियः, बान्धवा भ्रात्रादयः, एतत् सर्वं त्यक्त्वा गन्तव्यमवशेन मया । एतेनेष्टवियोगोऽशरणत्वं च संसारान्निर्वेदहेतुरुक्तः ॥ १६ ॥

तथा—

जहा किंपागफलाणं परिणामो न सुंदरो । एवं भुत्ताण भोगाणं परिणामो न सुंदरो ॥ १७ ॥

व्याख्या—यथा किम्पाको वृक्षविशेषस्तस्य फलान्यतीव स्वादिष्टानि मृत्युकराणि च स्युः । ततो यथा किम्पाकफलानां परिणामः परिपाको न सुन्दरो न भव्यः । एवमिति तथा भुक्तानां भोगानां परिणाम इति ॥ १७ ॥

अद्धाणं जो महंत तु अपाहिज्जो पवज्जई । गच्छंतो से दुही होइ छुहा–तण्हाइपीडिओ ॥ १८ ॥

व्याख्या—अध्वानं मार्गं यः पुमान् महान्तमपाथेयोऽशम्बल' प्रपद्यतेऽङ्गीकुरुते गच्छन् यथा स दुःखी भवति क्षुधा–तृष्णाऽऽदिपीडितः सन् ॥ १८ ॥

एव धम्म अकाऊण जो गच्छइ पर भवं । गच्छते से दुही होइ वाही–रोगेहि पीडिओ ॥ १९ ॥

व्याख्या-एवमिति यथा पान्थोऽशम्बलस्तथा पाथेयोपमं धर्ममकृत्वा यो गच्छति परं भवं । गच्छन् स दु खी भवति व्याधि–रोगै' पीडित ॥ १९ ॥

अद्धाणं जो महतं तु सपाहिज्जो पवज्जई । गच्छते से सुही होइ छुहा–तण्हाविवज्जिओ ॥ २० ॥

एव धम्म पि काऊणं जो गच्छइ पर भव । गच्छते से सुही होइ अप्पकम्मे अवेयणे ॥ २१ ॥

व्याख्या-इद गाथाद्वयं प्राग्गाथाद्वयव्यतिरेकेण व्याख्येयम् । नवर ' सपाहिज्जो ' सपाथेय इति अल्पकर्मा अवेदन. सन् ॥ २०–२१ ॥

धर्मकारणाभिप्रायं द्रढयति—

जहा गेहे पलित्तंमि तस्स गेहस्स जो पहू । सारभंडाणि नीणेइ असारं अवउज्झई ॥ २२ ॥

व्याख्या–यथा गेहे प्रदीप्ते प्रज्वलिते सति तस्य गृहस्य यः प्रभुः स्वामी स सारभाण्डानि महामूल्य–वस्त्रादीनि 'नीणेइ' त्ति निष्काशयति। असारं जरद्वस्त्रादि 'अवउज्झइ' त्ति अपोहते त्यजति ॥ २२ ॥

तथा—

एवं लोए पलित्तंमि जराए मरणेण य। अप्पाणे तारइस्सामि तुब्भेहिं अणुमन्निओ ॥ २३ ॥

व्याख्या–एवं लोके प्रदीप्ते व्याकुलीकृते जरया मरणेन च। आत्मानं सारभाण्डतुल्यं तारयिष्यामि प्रदीप्तलोकपारं नेष्यामि 'धर्मकरणेनेति प्रक्रमः'। असारं काम–भोगादि त्यक्ष्यामीति भावः। युष्माभिरनुमतोऽभ्यनुज्ञातः ॥ २३ ॥

एवं च तेनोक्ते माता–पितरौ यथाऽऽहतुस्तथाऽऽह—

तं बिंति अम्मा–पियरो सामन्नं पुत्त ! दुच्चरं। गुणाणं तु सहस्साइं धारेयव्वाइं भिक्खुणो ॥ २४ ॥

व्याख्या—तं बलश्रियं मृगापुत्रापरनामकं युवराजं 'बिंति' त्ति ब्रूतोऽभिधत्तोऽम्बा–पितरौ श्रामण्यं चारित्रं हे पुत्र ! दुश्चरम्। यतस्तत्र गुणानां श्रामण्योपकारकशीलाङ्गरूपाणां सहस्राणि 'तुरेवार्थे' धारयितव्यान्येवात्मनि स्थाप्यानि भिक्षोरिति सुब्व्यत्ययाद् भिक्षुणा सता ॥ २४ ॥

तथा—

समया सव्वभूएसु सत्तु–मित्तेसु वा जगे । पाणाइवायविरई जावज्जीवाए दुक्करं ॥ २५ ॥

व्याख्या–समता राग–द्वेषाकरणेन तुल्यता सर्वभूतेषु समस्तजन्तुषु शत्रु–मित्रेषु वा जगति लोकेषु त्रिषु । अनेन सामायिकमुक्तम् । प्राणातिपातविरतिः प्रथमव्रतरूपा यावज्जीवं दुष्करं दुरनुचरं 'एतदिति शेषः' ॥ २५ ॥

तथा—

निच्चकालप्पमत्तेणं मुसावायविवज्जण । भासियव्वं हियं सच्चं निच्चाउत्तेण दुक्करं ॥ २६ ॥

व्याख्या–नित्यकालाप्रमत्तेनेत्यप्रमत्तग्रहणम्, निद्रादिप्रमादतो हि मृषाऽपि भाषेतेति नित्यायुक्तेन सदोपयुक्तेनानुपयुक्तस्यान्यथाऽपि भाषणसम्भवादेतच्च दुष्करं शेषं स्पष्टम् । यच्चान्वय–व्यतिरेकाभ्यामेकस्याप्यर्थस्याभिधानं तत् स्पष्टार्थमदुष्टमेवैवं सर्वत्र भावनीयम् ॥ २६ ॥

तथा—

दंतसोहणमाइस्स अदत्तस्स विवज्जणं । अणवज्जेसणिज्जस्स गिण्हणा अवि दुक्करं ॥ २७ ॥

व्याख्या–'मकारोऽलाक्षणिकोऽपिर्गम्यः' ततो दन्तशोधनादेरप्यतितुच्छस्यास्तामन्यस्यादत्तस्य विवर्जनम् । तथाऽनवद्यस्यैषणीयस्य 'दत्तस्यापीति गम्यम्' । 'गिण्हण' त्ति ग्रहणमिति तृतीयव्रतं दुष्करमिति ॥ २७ ॥

विरई अबंभचेरस्स काम-भोगरसन्नुणा । उग्गं महव्वयं बंभं धारेयव्वं सुदुक्करं ॥ २८ ॥

व्याख्या–विरतिर्निवृत्तिरब्रह्मचर्यस्य । काम-भोगाश्च रसाश्च काम-भोग-रसास्तज्ज्ञेन । तदज्ञस्य हि तदनवगमात् तद्विषयाभिलाष एव न भवेत् । तथा च सुकरत्वमपि स्यादित्याशयेनैतद्विशेषणम् । ततश्च उग्रं महाव्रतं ब्रह्मचर्यरूपं धारयितव्यं सुदुष्करमिति ॥ २८ ॥

तथा—

धण-धन्न-पेसवग्गेसु परिग्गहाविवज्जणं । सव्वारंभपरिच्चाओ निम्ममत्तं सुदुक्करं ॥ २९ ॥

व्याख्या—धन-धान्य-प्रेष्यवर्गेषु परिग्रहः सत्सु स्वीकारस्तद्विवर्जनम् । सर्वे ये आरम्भा द्रव्योत्पादनव्यापारास्तत्परित्यागः । 'चस्य गम्यत्वाद्' निर्ममत्वं च सर्वत्र ममेति बुद्धिपरिहार इत्येतदपि दुष्करम् ॥ २९ ॥

चउव्विहे वि आहारे राईभोयणवज्जणं । सन्निहीसंचओ चेव वज्जेयव्वो सुदुक्करं ॥ ३० ॥

व्याख्या–चतुर्विधस्याप्याहारे रात्रिभोजनवर्जनम् । सन्निधिर्घृतादेरुचितकालातिक्रमेण स्थापनं स चासौ सञ्चयश्च संनिधिसञ्चयश्चैव वर्जयितव्य एतत् सुदुष्करमिति ॥ ३० ॥

एतेन रात्रिभोजनषष्ठ-पञ्चमहाव्रतदुष्करतोक्ताऽथ परीषहादिदुष्करतामाह—

छुहा तण्हा य सीउण्ह दंस-मसगवेयणा । अक्कोसा दुक्खसिज्जा य तणफासा जल्लमेव य ॥ ३१ ॥
ताडणा तज्जणा चेव वह-बंध-परीसहा । दुक्ख भिक्खायरिया जायणा य अलाभ य ॥ ३२ ॥

व्याख्या-क्षुधा, तृषा, शीतोष्णे, दंश-मशकयोर्वेदना तद्भक्षणोत्था दुःखानुभवरूपा पीडा, आक्रोशा असभ्यवचनानि, दुःखशय्या विषमोन्नतत्वादिना दुःखहेतुर्वसतिः, तृणानां स्पर्शस्तृणस्पर्शः, जल्लो देहमल 'एव निश्चयेन, च' पूरणे' ताडना करादिभिराहननम्, तर्जना अङ्गुलिभ्रमण-भ्रूविक्षेपादिरूपा, वधः शूल-लकुटादि-प्रहारः, बन्धो मयूरादिबन्धनम्, भिक्षाचर्या भिक्षाऽटनं, याच्ञा प्रार्थना, अलाभश्च । एते परीषहाः 'चशब्दोऽ-त्रानुक्तशेषपरीषहसङ्ग्रहार्थः' । दुःखशब्दश्चेह क्षुद्दुःखमित्यादि प्रत्येकं योज्यः ॥ ३१-३२ ॥

कावोया जा इमा वित्ती केसलोओ य दारुणो । दुक्खं बंभवयं घोरं धारेउं अमहप्पणो ॥ ३३ ॥

व्याख्या-कापोताः पक्षिविशेषास्तेषामिव कापोती येयं वृत्तिर्निर्वहणोपायः । ते हि नित्यं शङ्किताः कण-कीटा-दिग्रहणे प्रवर्तन्ते, एवं भिक्षुरप्येषणादोषशङ्कयैव भिक्षाऽऽदौ प्रवर्तते । केशलोचश्च दारुणः 'उपलक्षणं चैतत् समस्तोत्तरगुणानाम्' । अयं च ब्रह्मव्रतं घोरं रौद्रं धारयितुं पालयितुममहात्मना दुःखमिति दुष्करमेव । पुनर्ब्रह्मव्रतस्य दुष्करताभिधानमतिदुर्धरत्वख्यापनार्थम् ॥ ३३ ॥

उपसंहारमाह—

सुहोईओ तुमं पुत्ता ! सुकुमालो सुमज्जिओ । न हु सी पभू तुमं पुत्ता ! सामण्णमणुपालिउं ॥ ३४ ॥

व्याख्या—सुखस्योचितो योग्यः सुखोचितस्त्वं पुत्र ! सुकुमारोऽकठिनदेहः 'सुमज्जिओ' त्ति सुमज्जितः सुष्ठु स्नापितः 'सर्वनेपथ्योपलक्षणमिदम्' । 'न हु सि' त्ति नैवासि भवसि प्रभुः समर्थस्त्वं पुत्र ! श्रामण्यं प्रागुक्तगुणरूपं अनुपालयितुमिति ॥ ३४ ॥

एतदेव समर्थयति—

जावज्जीवमविस्सामो गुणाणं तु महब्भरो । गुरुओ लोहभारु व जो पुत्ता ! होई दुव्वहो ॥ ३५ ॥

व्याख्या—यावज्जीवमविश्रामो यत्रोद्धृते न विश्रम्यते । गुणानां यतिसम्बन्धिनां तु पुनर्महाभरो महासमूहो गुरुको लोहभार इव यः पुत्र ! भवति दुर्वहः 'स सोढव्य इति शेषः' ॥ ३५ ॥

आगासे गंगसोउ व्व पडिसोउ व्व दुत्तरो । बाहाहिं सागरो चेव तरियव्वो गुणोदही ॥ ३६ ॥

व्याख्या—आकाशे गङ्गास्रोतोवत् 'दुस्तर इति योज्यते' लोकरूढ्या चैतदुक्तम् । तथा प्रतिस्रोतोवद् यथा प्रतीपजलप्रवाहो दुस्तरो दुःखेन तीर्यते इति । तथा बाहुभ्यां सागरवद् दुस्तरो यः स तरितव्यः परपारगमनायावगा-

द्रयितव्य । कोऽसौ ? गुणा ज्ञानादयस्ते उदधिरिव गुणोदधि स दुस्तर काय-वाग्-मनोनियन्त्रणेनैव तदुत्तरणात्, तस्य च दुष्करत्वात् ॥ ३६ ॥

वालुयाकवले चेव निरस्साए उ संजमे । असिधारागमणं चेव दुक्करं चरिउं तवे ॥ ३७ ॥

व्याख्या–वालुकाकवल इव निरास्वाद सयमो विपयगृद्धानां वैरस्यहेतुत्वात् । असिधारागमनमिव तपोऽपि चरितुं दुष्करम् ॥ ३७ ॥

अहीवेगतदिट्ठीए चरित्ते पुत्त ! दुच्चरे । जवा लोहमया चेव चावेयव्वा सुदुक्कर ॥ ३८ ॥

व्याख्या–अहिरिवैकान्ता चासौ दृष्टिश्चैकान्तदृष्टिस्तयाऽनन्याक्षिप्तयाऽहिपक्षे दृशाऽन्यत्र तु बुद्ध्योपलक्षितमेकान्तदृष्टिक चारित्रं पुत्र ! दुश्चरं विपयेभ्यो मनसो दुर्निवारत्वादिति भाव• । एवकारस्योपमार्थत्वात् । यवा लोहमया इव चर्वयितव्या लोहमययवचर्वणवत् सुदुष्करं चारित्रमिति ॥ ३८ ॥

जहा अग्गिसिहा दित्ता पाउ होइ सुदुक्करं । तह दुक्कर करेउं जे तारुण्णे समणत्तणं ॥ ३९ ॥

व्याख्या–यथाऽग्निशिखाऽग्निज्वाला दीप्ताऽत्युज्वला पातुं भवति सुदुष्करं 'नृभिरिति गम्यम्' । 'सर्वधात्वर्थत्वात् करोते• सुदुःशका आर्षत्वादनुस्वारो लिङ्गव्यत्ययश्च' । तथा तारुण्ये श्रामण्यं कर्तुं दुष्करमिति ॥ ३९ ॥

जहा दुक्खं भरेउं जे होइ वायस्स कोत्थलो। तहा दुक्खं करेउं जे कीवेणं समणत्तणं ॥ ४० ॥

व्याख्या—यथा दुःखं भर्तुं 'जे पादपूरणे' भवति 'वायस्स' त्ति विभक्तिव्यत्ययाद् वातेन 'कोत्थलो' वस्त्र-कम्बलादिमयः, चर्ममयो हि सुखेन भ्रियते इति। तथा क्लीबेन कातरेण पुरुषेण श्रामण्यं कर्तुं दुष्करमिति ॥ ४० ॥

जहा तुलाए तोलेउं दुक्करं मंदरो गिरि। तहा निहुय निस्संकं दुक्करं समणत्तणं ॥ ४१ ॥

व्याख्या—यथा मन्दरो मेरुगिरिस्तुलया तोलयितुं दुष्करः। तथा निभृतं निश्चलं निःशङ्कं शङ्कादिदोषरहितं दुष्करं श्रमणत्वमिति ॥ ४१ ॥

जहा भुयाहिं तरिउं दुक्करं रयणायरो। तहा अणुवसंतेणं दुक्करं दमसायरो ॥ ४२ ॥

व्याख्या—यथा भुजाभ्यां बाहुभ्यां तरीतुं रत्नाकरः समुद्रो दुष्करस्तथाऽनुपशान्तेनोत्कटकषायेण दमसागर इति पूर्वं सर्वगुणोदधेर्दुस्तरत्वमुक्तमिह तूपशमसागरस्येति न पौनरुक्त्यम् ॥ ४२ ॥

भुंज माणुस्सए भोए पंचलक्खणए तुमं। भुत्तभोगी तओ जाया ! पच्छा धम्मं चरिस्ससि ॥ ४३ ॥

व्याख्या—यतश्चैवं तारुण्ये दुष्करा प्रव्रज्याऽतो भुङ्क्ष्व मानुष्यकान् भोगान् पञ्चलक्षणकान् शब्दादिपञ्चस्वरूपान्। ततो भोगभुक्तेरनन्तरं हे जात ! पुत्र ! पश्चादिति वार्धके धर्मं चारित्रं 'चरिस्ससि' त्ति चरेः इति ॥ ४३ ॥

अत्रेत्थ मातृ-पितृवचनमाकर्ण्य यथा मृगापुत्र उक्तवांस्तथाऽऽह—

सो बिंतम्मा-पियरो एवमेय जहा फुड । इह लोए निप्पिवासस्स नत्थि किंचि वि दुक्करं ॥ ४४ ॥

व्याख्या-स मृगापुत्र 'बिंति' त्ति वचनव्यत्ययाद् ब्रूतेऽम्बापितरौ एवमिति यथोक्त भवद्भ्यां तथैतत् प्रव्रज्या-दुष्करत्वम् । यथा स्फुटमवितथं तथापीह लोके निष्पिपासस्य नि स्पृहस्य नास्ति किञ्चिद् दुष्करमिति दुरनुष्ठेयं व्रतादि, भोगादिसस्पृहतायामेवास्य दुष्करत्वादिति भाव' ॥ ४४ ॥

निःस्पृहताहेतुमाह—

सारीर-माणसा चेव वेयणाओ अणतसो । मए सोढाओ भीमाओ असइ दुक्ख-भयाणि य ॥ ४५ ॥

व्याख्या-शारीरा मानसश्च वेदना अनन्तशो मया सोढा भीमा रौद्रा' । असकृन्निरन्तर दु खोत्पादकानि भयानि राजविड्वरादीनि दु ख-भयानि 'सोढानीति योज्यम्' ॥ ४५ ॥

तथा—

जरा-मरणकंतारे चाउरते भयागरे । मए सोढाणि भीमाणि जम्माणि मरणाणि य ॥ ४६ ॥

व्याख्या-जरा-मरणाभ्यामतिगहनतया कान्तारमिव जरा-मरणकान्तारं तस्मिंश्चत्वारो देवादिभवा, अन्ता अव-

यवा यस्यासौ चतुरन्तः संसारस्तस्मिन् भयाकरे भयानके तत्र मया सोढानि भीमानि नानादुःखजनकत्वेन रौद्राणि जन्मानि मरणानि च ॥ ४६ ॥

जहा इहं अगणी उण्हो इत्तोऽणंतगुणो तहिं । नरएसु वेयणा उण्हा अस्साया वेइया मए ॥ ४७ ॥

व्याख्या–यथेह मनुष्यलोकेऽग्निरुष्णोऽनुभूयते । अत इत्यनुभूयमानादनन्तगुणः । 'तहिं' ति तेषु येष्वहमुत्पन्न इति भावः । तत्र च बादराग्नेरभावात् पृथ्व्या एव तादृशः स्पर्श इति गम्यम् । अतश्चोष्णानुभवात्मकत्वेनासाता दुःखरूपाऽत्रत्याग्नेरनन्तगुणा नरकेपूष्णा वेदना वेदिता मयेति ॥ ४७ ॥

जहा इमं इहं सीयं इत्तोऽणंतगुणं तहिं । नरएसु वेयणा सीया अस्साया वेइया मए ॥ ४८ ॥

व्याख्या–यथैतदिह शीतं माघादौ शेषं प्राग्वत् ॥ ४८ ॥

कंदंतो कंदुकुंभीसु उड्ढपाओ अहोसिरो । हुयासणे जलंतंमि पक्कपुव्वो अणंतसो ॥ ४९ ॥

व्याख्या–क्रन्दन् कन्दुकुम्भीषु पाकभाजनविशेषरूपासु लोहमयीपूर्ध्वपादोऽधःशिरा देवमायाकृते हुताशनेऽग्नौ ज्वलत्यनन्तशोऽहं पक्वपूर्वः ॥ ४९ ॥

महादवग्गिसंकासे मरुम्मि वइरवालुए । कलंब–वालुयाए य दड्ढपुव्वो अणंतसो ॥ ५० ॥

व्याख्या—यद्यपीहत्याग्नेरनन्तगुण एव तत्रोष्ण पृथिव्यनुभावस्तथापीहान्यस्याभावान्महादवाग्निसङ्काशे इत्युक्तम्। मराविति 'तात्स्थ्यात् तद्व्यपदेशसम्भवात्'मरुवालुकासदृशे। तथा वज्रवत् कर्कशा वालुका यत्र नरकप्रदेशे तस्मिन्। तथा कदम्बवालुका नदीपुलिनवालुका तदुपमाने एवंविधे महादवाग्न्यादिसदृशे प्रदेशेऽनन्तशोऽहं दग्धपूर्व ॥ ५० ॥

रसतो कंदुकुंभीसु उड्ढ बद्धो अबंधवो। करवत्तकरकयाईहिं छिन्नपुव्वो अणंतसो ॥ ५१ ॥

व्याख्या—पूर्वं कन्दुकुम्भीषु पूर्वोक्तासु रसन् आरटन्। तत ऊर्ध्वमुपरि वृक्षशाखादौ बद्धो माऽयमितोऽनङ्क्षीदिति अबान्धवोऽशरणोऽहं करपत्र-क्रकचादिभिरनन्तश छिन्नपूर्व ॥ ५१ ॥

अइतिक्खकंटकाइन्ने तुंगे सिंबलिपायवे। खवियं पासबद्धेण कड्ढोकड्ढाहिं दुक्करं ॥ ५२ ॥

व्याख्या—अतितीक्ष्णकण्टकाकीर्णे तुङ्गे शाल्मलीपादपे पाशबद्धेन मया क्षपित निर्जीर्णं 'पापमिति गम्यते' 'कड्ढोकड्ढाहिं' ति इतस्तत कर्षणापकर्षणै परमाधार्मिककृतैर्दुष्करमिति दु:सहम् ॥ ५२ ॥

महाजंतेसु उच्छू वा आरसंतो सुभेरवं। पीलिओ मि सकम्मेहिं पावकम्मो अणंतसो ॥ ५३ ॥

व्याख्या—महायन्त्रेषु 'उच्छू व' त्ति 'वा इवार्थे' इक्षुरिवारसन्नाक्रन्दन् सुभैरवं भयानकं पीलितोऽस्मि स्वकर्मभिर्हिंसादिरूपै पापकर्माऽहमनन्तशः ॥ ५३ ॥

कूवंतो कोलसुणएहिं सामेहिं सवलेहि य । पाडिओ फालिओ छिन्नो विप्फुरंतो अणेगसो ॥ ५४ ॥

व्याख्या—कूजनातुरशब्दं कुर्वन् 'कोलसुणएहिं' ति सूकरश्वरूपधारिभिः श्यामैः शबलैः परमाधार्मिकैः पातितो भुवि, पाटितो जीर्णवस्त्रवत् । छिन्नो वृक्षवदुभयदंष्ट्राभिर्विस्फुरन् इतस्ततश्चलन्ननेकशः ॥ ५४ ॥

असीहिं अयसिवण्णाहिं भल्लीहिं पट्टिसेहि य । छिन्नो भिन्नो विभिन्नो य ओइन्नो पावकम्मुणा ॥५५॥

व्याख्या—असिभिः खड्गैरतसीपुष्पवर्णैर्भल्लीभिः पट्टिशैश्च प्रहरणविशेषैश्छिन्नो द्विधाकृत ऊर्ध्वं, भिन्नस्तिर्यक्, विभिन्नः श्लक्ष्णखण्डीकृतोऽवतीर्णो 'नरके इति गम्यते' पापकर्मणा हेतुभूतेन ॥ ५५ ॥

अवसो लोहरहे जुत्तो जलंते समिलाजुए । चोइओ तोत्तजुत्तेहिं रोज्झो वा जह पाडिओ ॥ ५६ ॥

व्याख्या—अवशः परवशो लोहरथे लोहमयशकटे 'जुत्तो' त्ति युजेरन्तर्भूतेनार्थत्वाद् योजितः परमाधार्मिकैर्ज्वलति दीप्यमाने, कदाचिद् दाहभीत्या ततो नश्येदपीत्याह-समिलोपलक्षितं युगं यस्मिन् स तथा तस्मिन् 'चोइओ' त्ति नोदितः प्रेरितस्तोत्रयोक्त्रैः प्राजनकबन्धनविशेषैः 'मर्माहननादिनेति गम्यम्' । 'वाशब्दः समुच्चये, यथेत्यौपम्ये' ततो 'रोज्झः' पशुविशेष इव पातितो वा 'लकुटादिपिट्टनेनेति गम्यते' ॥ ५६ ॥

हुयासणे जलंतंमि चियासु महिसो विव । दड्ढो पक्को अवसो पावकम्मेहिं पाविओ ॥ ५७ ॥

व्याख्या–हुताशने ज्वलति सति क ? इत्याह–चितासु परमाधार्मिकनिर्मितासु महिष इव दग्धो भस्मसात् कृतः, 'पक्को' भटित्रीकृत., 'पावितो' त्ति पापमस्यास्तीति पापिकः ॥ ५७ ॥

बला सडासतुडेहि लोहतुडेहिं पक्खिहि । विलुत्तो विलवंतो ह ढंकगिद्धेहिऽणंतसो ॥ ५८ ॥

व्याख्या–बलात् हठात् सन्दंशा प्रतीतास्तदाकृतीनि तुण्डानि मुखानि येषां ते तथा तैर्लोहवन्निष्ठुरतया तुण्डानि येषां ते तै. पक्षिभिर्ढङ्क–गृद्धैरिति योग. । विलपन् विलुप्तो विविधं छिन्न. । एते च वैक्रिया एव तत्र तिरश्चामभावात् ॥ ५८ ॥

तस्य चैवं कदर्थ्यमानस्य तृषोत्पत्तौ का वार्तेत्याह—

तण्हाकिलंतो धावंतो पत्तो वेतरणिं नइं । जलं पाहिंति चिंतंतो खुरधाराहि विवाईओ ॥ ५९ ॥

व्याख्या–तृष्णया क्लान्तो ग्लानिं गतो धावन् प्राप्तो वैतरणीं नदीं जलं पास्यामीति चिन्तयन् क्षुरधाराभिरिव क्षुरधाराभि' 'जलोर्मिभिरिति शेष'' विपादित इत्यर्थः ॥ ५९ ॥

उण्हाभितत्तो संपत्तो असिपत्तं महावणं । असिपत्तेहि पडंतेहि छिन्नपुव्वो अणंतसो ॥ ६० ॥

व्याख्या–उष्णेन वज्रवालुकादिसम्बन्धितापेनाभितप्तः सम्प्राप्तोऽसय खङ्गास्तद्वद् भेदकतया पत्राणि यस्मिंस्तद-सिपत्रं महावनं तत्र तादृशैरसिपत्रैः पतद्भिश्छिन्नपूर्वोऽनन्तशः ॥ ६० ॥

मूग्गरेहिं मुसंढीहिं सूलेहिं मुसलेहि य । गयासं भग्गगत्तेहिं पत्तं दुक्खं अणंतसो ॥ ६१ ॥

व्याख्या–मुद्गरादिभिरायुधविशेषैः । गता नष्टा आशा रक्षाविषया यत्र तद् गताशं यथा स्यादेवं 'भग्गगत्तेहिं'
ति भग्नगात्रेण मया प्राप्तं दुःखमनन्तश इति ॥ ६१ ॥

खुरेहिं तिक्खधाराहिं छुरियाहिं कप्पणीहि य । कप्पिओ फालिओ छिन्नो उक्कित्तो य अणेगसो॥६२॥

व्याख्या–क्षुरादिभिः कल्पितो वस्त्रवत्, पाटित ऊर्ध्वं द्विधाकृतः, छिन्नस्तिर्यक् खंडितः, उत्कृत्तस्त्वग्व्यपनयनेन ६२

पासेहिं कूडजालेहिं मिओ वा अवसो अहं । वाहिओ बद्ध–रुद्धो य विवसो चेव विवाईओ ॥ ६३ ॥

व्याख्या–पाशैः कूटजालैः प्रतीतैर्बन्धनविशेषैर्मृग इवावशः परवशोऽहं वाहितो विप्रलब्धः, बद्धो बन्धनेन, रुद्धो
बहिःप्रचारनिषेधेन, विशेषेण वशः परमाधार्मिकाणामिति विवश एवाहं विपादितो विनाशितः ॥ ६३ ॥

गलेहिं मगरजालेहिं मच्छो वा अवसो अहं । उल्लिओ फालिओ गहिओ मारिओ य अणंतसो ॥ ६४ ॥

व्याख्या–गलैर्बडिशैर्मकरैर्मकररूपैः परमाधार्मिकैर्जालैस्तत्कृतैस्तयोर्द्वन्द्वः । ततो यथासङ्ख्यं मत्स्य इवावशोऽहं
परवशोऽहं 'उल्लिओ'त्ति उल्लिखितः, पाटितः, गृहीतश्च, मारितश्च सर्वैरपि ॥ ६४ ॥

विदंसएहिं जालेहिं लेप्पाहिं सउणो विव । गहिओ लग्गो य बद्धो य मारिओ य अणंतसो ॥ ६५॥

व्याख्या–विशेषेण दशन्तीति विदशका' श्येनादयस्तैर्जालैस्ताद्दग्बन्धनैः 'लेपार्हि'ति लेपैर्वज्रलेपादिभिः श्लेपद्रव्यै. 'सउणो विव'त्ति शकुन इव पक्षीव यथाक्रम गृहीत , लग्नश्च, श्लिष्टश्च, मारितश्च सर्वैरपि ॥ ६५ ॥

कुहाड–फरसुमाईहिं वड्ढइहिं दुमो विव । कुट्टिओ फालिओ छिन्नो तच्छिओ य अणतसो ॥ ६६ ॥

व्याख्या–कुठार-पर्श्वादिभि कृत्वा वर्धकिभिर्द्रुम इव कुट्टित. सूक्ष्मखण्डीकृत. । पाटित , छिन्नश्च प्राग्वत् । तक्षितश्च त्वगपनयनत ॥ ६६ ॥

चवेड–मुट्ठिमाईहिं कुमारेहिं अय पिव । ताडिओ कुट्टिओ भिन्नो चुन्निओ य अणतसो ॥ ६७ ॥

व्याख्या–चपेटा-मुष्ट्यादिभि कुमारैरयस्कारै 'अयं पिव'त्ति 'पिव मिव विव वा इवार्थे' इत्युक्तत्वात् अय इव 'घनादिभिरिति गम्यम्' । ताडित आहत , कुट्टितश्चिपिटीकृत', भिन्नश्छिन्नश्चूर्णित. श्लक्ष्णखण्डीकृत. 'प्रक्रमात् परमाधार्मिकै ' अनन्तश ॥ ६७ ॥

तत्ताइ तव–लोहाइ तउयाइ सीसगाणि य । पाइओ कलकलताइं आरसंतो सुभेरवं ॥ ६८ ॥

व्याख्या–तप्तानि ताम्रादीनि वैक्रियाणि पृथिव्यनुभावभूतानि वा 'कलकलंताइं'ति अतिक्वाथतः कलकलशब्दं कुर्वन्ति । आरसन् आरटन् सुभैरव महाभयकारी अह पायित. 'परमाधार्मिकैरिति प्रक्रम.' ॥ ६८ ॥

तुहं पियाइं मांसाइं खंडाइं सोल्लगाणि य । खाविओ मि समंसाइं अग्गिवन्नाइं णेगसो ॥ ६९ ॥

व्याख्या–तव प्रियाणि मांसानि खण्डानि खण्डरूपाणि 'सोल्लगाणि' त्ति शूले दत्त्वा भटित्रीकृतानि 'स्मारयित्वेति शेषः' खादितोऽस्मि स्वमांसानि मच्छरीरादेवोत्कृत्योत्कृत्य ढौकितान्यग्निवर्णान्यतितप्ततयाऽग्निच्छायानि परमाधार्मिकैर्विकृत्यानेकश अनेकवारानिति ॥ ६९ ॥

तुहं पिया सुरा सीहु मेरओ य महूणि य । पाइओ मि जलंतीउ वसाउ रुहिराणि य ॥ ७० ॥

व्याख्या–तव प्रियाणि सुराऽऽदीनि मद्यविशेषरूपाणि 'स्मारयित्वेति गम्यम्' पायितोऽस्मि 'जलंतीउ' त्ति ज्वलन्तीरत्युष्णतया वशा रुधिराणि च ज्वलन्तीति लिङ्गव्यत्ययेन योजनीयमिति ॥ ७० ॥

नरकवक्तव्योपसंहारमाह—

निच्चभीएण तत्थेण दुहिएण वहिएण य । परमा दुहसंबद्धा वेयणा वेइया मए ॥ ७१ ॥

व्याख्या–नित्यभीतेन त्रस्तेनोद्विग्नेन दुःखितेन व्यथितेन च कम्पमानसर्वाङ्गोपाङ्गतया चलितेन । परमा प्रकृष्टा दुःखसम्बद्धा वेदना वेदिताऽनुभूता मयेति ॥ ७१ ॥

तिव्वचंडप्पगाढाओ घोराओ अइदुस्सहा । महब्भयाओ भीमाओ नरएसुं वेइया मए ॥ ७२ ॥

व्याख्या–तीव्रा अनुभावतोऽत एव चण्डा उत्कटा, प्रगाढा गुरुस्थितिकास्तत एव घोरा रौद्रा अतिदुःसहा अत्यन्तदुरध्यवसाया अत एव महाभया भीमा श्रूयमाणा अपि भयप्रदा नरकेषु वेदिता अनुभूता 'वेदना इति प्रक्रमः' ॥ ७२ ॥

कथ तासां तीव्रादिरूपत्वमित्याह—

जारिसा माणुसे लोए ताया ! दीसंति वेयणा । इत्तो अणंतगुणिया नरएसु दुक्खवेयणा ॥ ७३ ॥

व्याख्या–यादृश्यो मानुषे लोके हे तात ! दृश्यन्ते वेदनास्ताभ्योऽनन्तगुणिता नरकेषु दुःखवेदना ॥ ७३ ॥

अथ सर्वगतिवेदनाऽनुभवमाह—

सव्वभवेसु असाया वेयणा वेइया मए । निमिसंतरमित्तं पि जं साया नत्थि वेयणा ॥ ७४ ॥

व्याख्या–सर्वभवेष्वसाता वेदना दुःखवेदना वेदिता मया निमेषोऽक्षिमीलनं तस्यान्तरं व्यवधानं यावता कालेनासौ भूत्वा पुनर्भवति तावत्कालमपि । यद् यस्मात् साता सुखरूपा नास्ति वेदना वैषयिकसुखस्यापीर्ष्याद्यनेकदुःखानुविद्धत्वाद् विपाकदारुणत्वाच्च । अयमाशयो योऽहं निमेषमात्रमपि सुखं न लब्धवान्, स तत्त्वतः कथं सुखोचितः सुकुमालो वेति ? कथं वा तस्य दुष्करा प्रव्रज्या ? अतोऽसौ मया प्राह्यैवेति ॥ ७४ ॥

ततः पितरौ यथाऽऽहतुस्तथाऽऽह—

तं बिंतम्मा–पियरो छंदेणं पुत्त ! पव्वया । नवरं पुण सामन्ने दुक्खं निप्पडिकम्मया ॥ ७५ ॥

व्याख्या–तं मृगापुत्रं ब्रूतोऽम्बा-पितरौ छन्दसा स्वकीयाभिप्रायेण हे पुत्र ! प्रव्रज दीक्षितो भव । नवरं पुनः श्रामण्ये दुःखं दुःखहेतुर्निष्प्रतिकर्मता रोगादौ चिकित्साऽकरणरूपेति ॥ ७५ ॥

पुनः पुत्रवचनं ससम्बन्धं प्राह—

सो बिंतम्मा–पियरो एवमेयं जहा फुडं । पडिकम्मं को कुणई अरण्णे मिय–पक्खिणं ? ॥ ७६ ॥

व्याख्या–स मृगापुत्रोऽम्बा–पितरौ ब्रूते । यथैवमेतन्निष्प्रतिकर्मताया यद् दुःखरूपत्वमुक्तं युवाभ्यां तत् स्फुटं प्रगटमवितथं परं परिभाव्यतामिदम् । परिकर्म रोगचिकित्सारूपं कः करोति ? न कश्चिदित्यर्थः । क्व ? अरण्ये केषां ? मृग–पक्षिणामथ चैतेऽपि जीवन्ति विचरन्ति च । ततः किमस्या दुःखरूपत्वमिति भावः ॥ ७६ ॥

यतश्चैवमतः—

एगभूओ अरण्णे वा जहा उ चरई मिगो । एवं धम्मं चरिस्सामि संजमेण तवेण य ॥ ७७ ॥

व्याख्या–एकभूत एकत्वं प्रासोऽरण्ये 'वा पूरणे' 'जहा उ' त्ति यथैव मृगश्चरति । एवमित्येकभूतः संयमेन तपसा हेतुभूतेन धर्मं चरिष्यामि ॥ ७७ ॥

जया मियस्स आयको महरन्नमि जायई । अच्छत रुक्खमूलमि को ण ताहे विगच्छई ॥ ७८ ॥

व्याख्या–यदा मृगस्यातङ्क आशुघाती रोगो महाऽरण्ये जायते । 'अच्छत' ति तिष्ठन्तं वृक्षमूले क एत तदाऽऽतङ्कोत्पत्तिकाले चिकित्सत्यौपधादिना नीरोग कुरुते ? न कश्चिदित्यर्थ । महाऽरण्य इत्यत्र महाग्रहण लघुन्यरण्ये कदाचित् कश्चित् कृपातस्तिरश्चश्चिकित्सेदपीत्यत्र दृष्टान्त.—

सन्माकन्दवसन्तश्रीश्रीवसन्तपुरेऽभवत् । चिकित्साकर्मनिष्णातो धनञ्जयभिषग्वरः ॥ १ ॥
युग्मिनौ तस्य जनाते सीता–पाताऽभिधौ सुतौ । पाल्यमानौ क्रमात् पञ्चवर्षीयासौ वभूवतु. ॥ २ ॥
पितर्युपरते दैवान्निर्विद्यौ चिन्तयाऽञ्चितौ । मातुर्वचनत. काश्यां गतौ तौ मातुलान्तिके ॥ ३ ॥
वाग्भट–सुश्रुत–चरकप्रमुखग्रन्थानधीत्य तत्पार्श्वे । कृतकृत्यौ तं पृष्ट्वा प्रस्थितवन्तौ निजं गेह ॥ ४ ॥
मार्गमतिक्रममाणौ क्रमश प्राप्तावरण्यक तौ तु । चक्षुर्विकलं सिंहं दृष्ट्वाऽन्योऽन्यं च वार्तयत ॥ ५ ॥
कनीयानूचिवान् ज्येष्ठ भ्रातरेतस्य चक्षुषी । उद्घाट्ये विद्याप्रामाण्यादुपकार कृतो भवेत् ॥ ६ ॥
परोपकार पुण्याय यतो हि श्रूयते श्रुतौ । ज्यायानाहोपकारोऽपि कृत पात्रे शुभप्रद ॥ ७ ॥
पय सर्पमुखे क्षिप्तं विप स्यान्मृत्युदं यथा । उपकारः कृतोऽपात्रे स्यात् तथाऽनर्थदायक. ॥ ८ ॥

पुनः कनिष्ठ आचष्ट भ्रातरौदार्यधीभृताम् । पात्रापात्रविचारो हि नौचितीमञ्चति स्फुटम् ॥ ९ ॥
उक्तं हि– "अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ १० ॥
सीताकस्तु महावृक्षं चटित्वा लघु तस्थिवान् । पाताको भेषजेनाश्वानञ्ज हर्यक्षचक्षुषी ॥ ११ ॥
सज्जाक्षो हरिरुत्तस्थौ क्षुत्–पिपासाऽर्दितो भृशम् । पाताकं पातयित्वोर्व्यां फालेनात्तुं प्रवृत्तवान् ॥ १२ ॥
स लघुर्निर्विचारत्वात् सञ्जातो दुःखभाजनम् । वृद्धस्तु दीर्घदर्शित्वात् सौख्येनास्थाद् गृहं गतः ॥ १३ ॥
एवममहत्यरण्ये तिर्यग्रोगप्रतिक्रियाकर्ता । सम्भाव्यतेऽपि कश्चिन्न पुनर्विजने महाऽरण्ये ॥ १४ ॥

॥ इति कथा ॥ ७८ ॥

को वा से ओसहं देइ को वा से पुच्छई सुहं ? । को से भत्तं च पाणं च आहरित्तु पणामए ? ॥ ७९ ॥

व्याख्या–चिकित्सके चासति को वा 'से' तस्य मृगादेरौषधं ददातीत्यादिरुत्तरोत्तराप्राप्तिर्दर्शनीया 'आहरित्तु' त्ति आहृत्य 'पणामए'त्ति प्रणामयेदर्पयेत् 'अर्पः'पणाम' इत्यादेशः प्राकृते' ॥ ७९ ॥

कथं तस्य निर्वाह इत्याह—

जया य से सुही होइ तया गच्छइ गोयरं । भत्त–पाणस्स अट्ठाए वल्लराणि सराणि य ॥ ८० ॥

व्याख्या–यदा च स मृग सुखी भवति 'स्वत एव रोगाभावादिति गम्यम्' । तदा गोरिव परिचितेतरभूभागे चरणं भ्रमणं गोचरस्तं भक्तं च तृणादि पानं च पानीय तस्यार्थाय निमित्तं वल्लराणि गहनानि सरांसि सरोवराणि च गच्छति ॥ ८० ॥

खाइत्ता पाणिय पाउ वल्लरेहि सरेहि य । मिगचारियं चरित्ता णं गच्छई मिगचारियं ॥ ८१ ॥

व्याख्या–खादित्वा 'निजभक्ष्यमिति गम्यते' । पानीयं च पीत्वा 'सुव्यत्ययात्' वल्लरेषु सरस्सु च । तथा मृगाणा चर्या इतश्चेतश्चोत्प्लवनात्मकं चरणं मृगचर्या ता चरित्वाऽऽसेव्य गच्छति । मृगाणां चर्या चेष्टा स्वातन्त्र्योपवेशनादिका यस्या सा तथा मृगाश्रयभूताम् ॥ ८१ ॥

दृष्टान्तमभिधायोपसंहारमाह—

एवं समुट्ठिए भिक्खू एवमेव अणेगगो । मिगचारियं चरित्ता णं उड्ढं पक्कमई दिसं ॥ ८२ ॥

व्याख्या–एवमिति मृगवत् समुत्थित संयमानुष्ठानं प्रत्युद्यत । तथाविधातङ्कोत्पत्तावपि न चिकित्साऽभिमुख इति भाव. । भिक्षु' एवमेव मृगवदेवानेकगो यथा ह्यसौ नैकस्मिन् वृक्षे आस्ते, किन्तु कदाचित् क्वचिदेवमेषोऽपि भिक्षुरनियतस्थानस्थितयाऽनेकग । स चैनं मृगचर्यां चरित्वा मृगवदातङ्काभावेन भक्त–पानगोचर गत्वा तदुपष्ट-

स्मतो विशिष्टज्ञानावाप्त्याऽपगताशेषकर्मांश ऊर्ध्वं प्रक्रामति प्रकर्षेण गच्छति दिशं । मृगः पुष्ट उच्छलति, भिक्षुस्तु सर्वोपरिस्थानस्थो भवति निर्वृतिं मोक्षं यातीत्यर्थः ॥ ८२ ॥

मृगचर्यामेव स्पष्टयति—

जहा मिए एगे अणेगचारी अणेगवासे धुवगोयरे य ।
एवं मुणी गोयरियं पविट्ठो नो हीलए नो वि य खिंसएज्जा ॥ ८३ ॥

व्याख्या–यथा मृग एकोऽद्वितीयोऽनेकचारी नैकत्र भक्त–पानार्थं चरतीत्येवंशीलोऽनेकवासो विविधाश्रयवासी ध्रुवगोचरश्च सदा गोचरलब्धमेवाहारयतीत्येवं मृगवदेकत्वादिविशेषणविशिष्टो मुनिर्गोचर्यां भिक्षाऽटनं प्रविष्टो न हीलयेदवजानीयात् 'कदशनादीति गम्यते' नापि च खिंसयेदाहाराप्राप्तौ स्वं परं वा निन्देत् । अत्र च मृगस्योपशमप्राधान्यादुपमानत्वमिति ॥ ८३ ॥

अथ यत् पुत्रवचनं यच्च तत्र पितृवचनम्, ततश्च यत् पुत्रः कृतवांस्तदाह—

मिगचारियं चरिस्सामि एवं पुत्ता! जहासुहं । अम्मापिईहिऽणुन्नाओ जहाइ उवहिं तओ ॥ ८४ ॥

व्याख्या–मृगस्य चर्यां चेष्टां निष्प्रतिकर्मतारूपां चरिष्यामीति बलश्रिया युवराजेनोक्ते पितृभ्यामभाणि । एवं

हे पुत्र ! यथा भवतोऽभिरुचित तथा यथासुखं 'तेऽस्त्विति शेषः' एवं चानुज्ञातो जहाति त्यजत्युपधिं द्रव्यत आभरणादि, भावतश्छद्मादि, यदनेनात्मा नरके उपधीयत इति । ततश्च प्रव्रजित इत्युक्तं स्यादिति ॥ ८४ ॥

उक्तमेवार्थं सविस्तरमाह—

मिगचारिय चरिस्सामि सव्वदुक्खविमुक्खणि । तुब्भेहि अंब ! ऽणुन्नाओ गच्छ पुत्त ! जहासुह ॥ ८५ ॥

व्याख्या—'तुब्भेहिं' ति युवाभ्यां हे अम्ब ! 'उपलक्षणात् हे पितश्च' अनुज्ञात सन् । तावाहतुर्हे पुत्र ! गच्छ 'मृगचर्ययेति प्रक्रम.' । पुत्र ! यथासुख सुखानतिक्रमेण । शेप स्पष्टम् ॥ ८५ ॥

एव सो अम्मा–पियरो अणुमाणित्ता ण वहुविह । ममत्त छिंदई ताहे महानागु व कचुअ ॥ ८६ ॥

व्याख्या—एवं अमुना प्रकारेण सोऽम्बापितरौ अनुमान्यानुज्ञाप्य ममत्वं प्रतिवन्धं छिनत्ति महानाग इव कञ्चुकं यथाऽसावतिजरठतया चिरप्ररूढमपि कञ्चुकमपनयत्येवमसावपि ममत्वं मायादीश्चेति ॥ ८६ ॥

तथा—

इड्ढी वित्त च मित्ते य पुत्त–दार च नायओ । रेणुय व पडे लग्गं निद्धुणित्ता ण निग्गओ ॥ ८७ ॥

व्याख्या—ऋद्धिमश्वादिसम्पदं वित्त द्रव्यं ज्ञातीन् सोदरादीन् रेणुमिव पटलग्नं 'निद्धुणित्त' त्ति निर्धूय त्यक्त्वा निर्गतो निष्क्रान्त 'गृहादिति गम्यम्' प्रव्रजित इत्यर्थ ॥ ८७ ॥

ततोऽसौ कीदृग् जात इत्याह—

पंचमहव्वयजुत्तो पंचसमिओ तिगुत्तिगुत्तो य । सब्भिंतर—बाहिरए तवोकम्मंमि उज्जओ ॥ ८८ ॥

निम्ममो निरहंकारो निस्संगो चत्तगारवो । समो य सव्वभूएसु तसेसु थावरेसु य ॥ ८९ ॥

अनयोर्व्याख्या—पञ्चमहाव्रतसहितः । पंचसमितिभिः समितः । त्रिगुप्तिभिर्गुप्तः । सहाभ्यन्तरैः प्रायश्चित्तादिभिर्बाह्यैरनशनादिभिर्भेदैर्वर्तते इति तत् तथा तस्मिन् तपःकर्मण्युद्यतः ॥ निर्गता ममता अस्यासौ निर्ममः । नितरां गतोऽहंकारो यस्मात् स निरहंकारः । निःसङ्गः सङ्गहेतुधनादित्यागात् । त्यक्तगारवत्रिकः । समश्च न रागद्वेषवान् सर्वभूतेषु त्रसेषु स्थावरेषु च निर्ममत्वादेरेवेति गाथाद्वयार्थः ॥ ८८–८९ ॥

तथा—

लाभालाभे सुखे दुक्खे जीविए मरणे तहा । समो निंदा—पसंसासु तहा माणावमाणओ ॥ ९० ॥

व्याख्या—समो न लाभादौ चित्तोत्कर्षवान् । नाप्यलाभादौ दैन्यवान् । जीविते च मरणे च समो नैकत्राप्याकाङ्क्षावान् । तथा निंदा—प्रशंसयोः समः । मानापमानयोः समः । शेषं व्यक्तम् ॥ ९० ॥

गारवेसु कसाएसुं दंड—सल्ल—भएसु य । नियत्तो हास—सोगाओ अनियाणो अबंधणो ॥ ९१ ॥

॥ ३६८ ॥

व्याख्या—गौरवेभ्यः त्रिभ्यः, कषायेभ्यः चतुर्भ्यः, दण्डा मनोदण्डादय त्रयः, शल्यानि मायाऽऽदीनि त्रीणि, भयानि चेहलोकभयादीनि सप्त, तेभ्यो निवृत्तः। 'प्राकृतत्वात् पञ्चम्यर्थे सप्तमी'। तथा हास्य-शोकान्निवृत्तोऽनिदानो भोगप्रार्थनारहितोऽबन्धनो राग-द्वेषात्मकबन्धनविकलः ॥ ९१ ॥

अत एवाह—

अणिस्सिओ इह लोए परलोए अणिस्सिओ। वासी-चंदणकप्पो य असणे अणसणे तहा ॥ ९२ ॥

व्याख्या—अनिश्रितो निश्रारहितः नेहलोकार्थं परलोकार्थं वाऽनुष्ठानवान्। यदाह— "नो इहलोगट्ठयाए तवमहिट्ठिज्जा, नो परलोगट्ठयाए तवमहिट्ठिज्जा"[1] इत्यागमात्। वासी-चन्दनकल्प इत्यनेन समताविशेषमाह—वासी-चन्दनव्यापारकयोः कल्पस्तुल्यः। को भावः? यदि कोऽपि वास्या वंसोल्या तक्ष्णोति, अन्यश्च चन्दनेनाऽऽलिम्पति, तथापि राग-द्वेषाभावतो द्वयोरपि तुल्य इति। तथा अशने आहारे विशिष्टे मनोहरे 'नञ कुत्साऽर्थत्वात्' अनशने कदाहारे च तथा कल्पस्तुल्य इत्यर्थः ॥ ९२ ॥

अपसत्थेहि दारेहि सव्वओ पिहियासवो। अज्झप्पज्झाणजोगेहिं पसत्थदमसासणो ॥ ९३ ॥

---

१ नो इहलोकार्थं तपोऽधितिष्ठेत्, नो परलोकार्थं तपोऽधितिष्ठेत्।

व्याख्या–अप्रशस्तेभ्यः प्रशंसाऽनास्पदेभ्यो द्वारेभ्यः कर्मोपार्जनोपायेभ्यो हिंसादिभ्यः सर्वतः सर्वेभ्यो 'निवृत्त इति गम्यते' । अत एव पिहिताश्रवो निरुद्धकर्मप्रवेशः । कैः पुनरयमेवंविधः ? आत्मन्यधि अध्यात्मं तत्र ध्यानयोगा शुभध्यानव्यापारा अध्यात्म–ध्यानयोगास्तैः प्रशस्तो दम उपशमः शासनं च सर्वज्ञागमात्मकं यस्य स तथा ॥ ९३ ॥

अथ तत्फलोपदर्शनायाह—

एवं नाणेण चरणेण दंसणेण तवेण य । भावणाहिं विसुद्धाहिं सम्मं भावित्तु अप्पयं ॥ ९४ ॥
बहुयाणि उ वासाणि सामन्नमणुपालिया । मासिएण उ भत्तेण सिद्धिं पत्तो अणुत्तरं ॥ ९५ ॥

अनयोर्व्याख्या–ज्ञान-दर्शन-चारित्र-तपोभिः भावनाभिर्महाव्रतसम्बन्धिनीभिर्वक्ष्यमाणाभिरनित्यत्वादिभिर्वा शुद्धाभिर्निदानादिदोपरहिताभिः सम्यग् भावयित्वा तन्मयतां नीत्वा 'अप्पयं' ति आत्मानम् ॥ मासिकेन भक्तेन मासोपवासेनेत्यर्थः । सिद्धिं निष्ठितार्थतामनुत्तरां सकलकर्मांशक्षयलक्षणां प्राप्तः । शेषं सुगममिति गाथाद्वयार्थः ॥ ९४–९५ ॥

अध्ययनोपसंहारमाह—

एवं करंति संपन्ना पंडिआ पवियक्खणा । विणियट्टंति भोगेसु मियापुत्ते जहामिसी ॥ ९६ ॥

व्याख्या—एव पूर्वोक्तरीत्या कथनेन 'संपन्न' त्ति सङ्गता प्रज्ञा येषा ते सप्रज्ञाः । पुनः पण्डिता बुद्धिमन्त॰ । प्रविचक्षणा॰ चतुरा । विनिवर्तन्ते निवर्तन्ते भोगेभ्यः 'जहामिसी' त्ति मकारोऽलाक्षणिको यथा मृगापुत्रऋपिरिति । शेपं व्यक्तम् ॥ ९६ ॥

भङ्ग्यन्तरेणोपदिशन्नाह—

महापभावस्स महाजसस्स मियायपुत्तस्स निसम्म भासियं ।
तवप्पहाण चरिय च उत्तम गइप्पहाण च तिलोयविस्सुय ॥ ९७ ॥
वियाणिया दुक्खविवद्धण धण ममत्तवंधं च महाभयावहं ।
सुहावह धम्मधुर अणुत्तरं धारेह निव्वाणगुणावहं मह ॥ ९८ ॥ ति वेमि ॥

अनयोर्व्याख्या—महान् प्रभावोऽस्य स महाप्रभावस्तस्य पुनर्महायशस एतादृशस्य मृगापुत्रस्य भापितं संसारदु॰-स्वरूपताऽऽवेदकं यत् तेन पित्रो पुरत उक्तम्। प्रधानं तपो यत्र चरिते तत् प्रधानतप चरित चेष्टितम् । 'गइप्प-हाण च' त्ति प्रधाना गतिर्मोक्षलक्षणा यत्र तत् प्रधानगति 'उभयत्र व्यत्ययनिर्देश॰ प्राकृतत्वात्' । त्रिलोकविश्रुतं जगद्विख्यातम् ॥ एतन्निशमनाच्च विज्ञाय ज्ञात्वा दु॰खविवर्धनं धनं तथा ममत्वबन्धं सत्प्रवृत्तिघातितया महाभया-

वहम् । धर्मो धूरिव महासत्त्वैरुह्यमानतया धर्मधुरा महाव्रतपञ्चकात्मिका तां तथा निर्वाणगुणा अनन्तज्ञान-दर्शन-चारित्र-वीर्य-सुखादयस्तदावहां तत्प्रापिकां धर्मधुरां धारयत महतीं अपरिमितमाहात्म्याम् । शेषं निगदसिद्धमिति वृत्तद्वयार्थः । इति ब्रवीमीति प्राग्वत् ॥ ९७-९८ ॥ ग्रं० ३२० ॥

॥ इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां मृगापुत्रीयाख्यमेकोनविंशमध्ययनं समाप्तम् ॥ १९ ॥

# अथ विंशतितमं महानिर्ग्रन्थीयमध्ययनम् ।

अनन्तराध्ययने निष्प्रतिकर्मताऽभिहिता, सा चानाथत्वपरिभावनयैव पालयितुं शक्येति महानिर्ग्रन्थहितमभिधातुमनाथत्वमनेनोच्यते । इति विंशतितम महानिर्ग्रन्थीयमध्ययनमारभ्यते ।

सिद्धाणं नमो किच्चा संजयाणं च भावओ । अत्थ-धम्म-गइं तच्चं अणुसिट्ठिं सुणेह मे ॥ १ ॥

व्याख्या—सिद्धेभ्यस्तीर्थंकरादिसिद्धेभ्यो नमस्कृत्य संयतेभ्यश्चाचार्योपाध्याय-साधुभ्यो भावतो भक्त्येति पञ्चपरमेष्ठिस्तवमुक्त्वाऽभिधेयादित्रयमाह । अर्थश्च धर्मश्चार्थ-धर्मौ तयोर्गतिर्गत्यर्थानां ज्ञानार्थत्वाद् हिताहितलक्षणस्वरूपज्ञानं यस्यां साऽर्थ-धर्म-गतिस्तां 'तच्च' ति तथ्यां सत्यामनुशिष्टिं हितोपदेशरूपां शिक्षां शृणुत 'मे' इति मम 'कथयत इति शेष' स्थविरवचनमेतदिति । इह चानुशिष्टिरभिधेया । अर्थ-धर्म-गतिः प्रयोजनम् । अनयोश्च परस्परमुपायोपेयभावलक्षण सम्बन्धः सामर्थ्यादुक्त इति ॥ १ ॥

यथाप्रतिज्ञात धर्मकथारूपतयाऽऽह—

पभूयरयणो राया सेणिओ मगहाहिवो । विहारजत्तं निज्जाओ मंडिकुच्छिंसि चेइए ॥ २ ॥

व्याख्या—प्रभूतानि रत्नानि मरकतादीनि गजाश्वादिरूपाणि वा यस्य स तथा । मगधाधिपः श्रेणिकः 'विहा-

रजत्तं' ति सुब्व्यत्ययाद् विहारयात्रायाः क्रीडाऽर्थमश्ववाहनिकादिरूपाया निर्यातो निर्गतो 'नगरादिति गम्यते' क्व गतः ? इत्याह–'मंडिकुच्छंसि' त्ति मण्डिकुक्षिनाम्नि चैत्ये उद्याने ॥ २ ॥

तदेव विशिनष्टि—

**नाणादुमलयाइन्नं नाणापक्खिनिसेवियं । नाणाकुसुमसंच्छन्नं उज्जाणं नंदणोवमं ॥ ३ ॥**

व्याख्या—तदुद्यानं 'वर्तते इत्युपस्कारः' । स्पष्टमन्यत् ॥ ३ ॥

**तत्थ सो पासई साहुं संजयं सुसमाहियं । निसन्नं रुक्खमूलंमि सुकुमालं सुहोइयं ॥ ४ ॥**

व्याख्या—तत्र वने स श्रेणिकः पश्यति कं ? साधुम् । साधुः सर्वोऽपि शिष्ट उच्यते, तद्व्यवच्छेदार्थं संयतमित्युक्तम् । सोऽपि च बहिःसंयमवान् निह्नवादिरपि स्यादिति सुसमाहितं मनःसमाधानवन्तमित्युक्तम् । निषण्णमुपविष्टं क्व ? वृक्षमूले । सुकुमालं सुकोमलाङ्गावयवम् । 'सुहोइयं' ति सुखोचितं शुभोचितं वा ॥ ४ ॥

**तस्स रूवं तु पासित्ता राइणो तंमि संजए । अच्चंतं परमो आसी अउलो रूवविम्हओ ॥ ५ ॥**

व्याख्या—तस्य साधो रूपं दृष्ट्वा राज्ञस्तस्मिन् संयतेऽत्यन्तं परमोऽतिशयप्रधानोऽतुल्योऽनन्यसदृशो रूपविषयो विस्मय आसीदिति ॥ ५ ॥

कथमित्याह—

अहो ! वण्णो अहो ! रूवं अहो ! अज्जस्स सोमया । अहो ! खती अहो ! मुत्ती अहो ! भोगे असंगया ॥६॥

व्याख्या—'अहो ! इत्याश्चर्ये' सर्वत्र । वर्णो गौरताऽऽदि । रूपमाकारः । आर्यस्य पूज्यस्य सौम्यता चन्द्रस्येवानन्ददायिता । अहो ! इति क्षान्ति क्षमा । मुक्तिर्निर्लोभता । पुन. भोगे असङ्गता नि.स्पृहता ॥ ६ ॥

तत किमकार्षीदित्याह—

तस्स पाए उ वंदित्ता काऊण य पयाहिणं । नाइदूरमणासन्ने पंजली पडिपुच्छई ॥ ७ ॥

व्याख्या-तस्य मुने पादौ चरणौ नत्वा प्रदक्षिणा च कृत्वा नातिदूरो नात्यासन्नो योग्यस्थानवर्तीत्यर्थं । प्राञ्जलिर्योजितकर. सन् प्रतिपृच्छति । इह च वन्दनानन्तर प्रदक्षिणाऽभिधानं पूज्यानामालोके एव प्रणाम[1] क्रियते इति ज्ञापनार्थम् । तथा चागम —"आलोए जिणपडिमाणं पणाम करेइ" त्ति ॥ ७ ॥

किं पृच्छतीत्याह—

तरुणो सि अज्जो ! पव्वईओ भोगकालम्मि संजया ! । उवट्ठिओ सि सामन्ने एयमट्ठं सुणामि ता ॥ ८ ॥

---

१ आलोके जिनप्रतिमाना प्रणाम करोतीति ।

व्याख्या—तरुणोऽसि युवाऽस्यार्य ! यद् भोगकाले भोगोचितसमये प्रव्रजितस्तारुण्यस्य भोगकालत्वात् । त्वं पुनरुपस्थितश्च कृतोद्यमश्च श्रामण्ये चारित्रे एतमर्थं निमित्तं येनार्थेन त्वमीदृश्यामवस्थायां प्रव्रजितः । शृणोमि ता इति तावत् पश्चात् तु यत् त्वं भणिष्यसि, तदपि श्रोष्यामीति भावः ॥ ८ ॥

इत्थं राज्ञोक्ते मुनिराह—

अणाहो मि महाराय ! नाहो मज्झ न विज्जई । अणुकंपगं सुहिं वावि कंची नाभिसमेमहं ॥ ९ ॥

व्याख्या—अनाथोऽस्वामिकोऽसीत्यहं महाराज ! । कुतः ? इत्याह—यतो नाथो योग—क्षेमकर्ता मम न विद्यते । अलब्धस्य लाभो योगः, लब्धस्य परिपालनं क्षेमः । तथाऽनुकम्पकमनुकम्पाकर्तारं 'सुहिं' ति सुहृदं वा मित्रं वा कंचिदपि नाभिसमेमि नाभिसङ्गच्छाम्यहं न केनचिदनुकम्पकेन सुहृदा वा सङ्गतोऽहमित्यादिनाऽर्थेन तारुण्येऽपि प्रव्रजित इति भावः ॥ ९ ॥

एवं च मुनिनोक्ते—

तउ सो पहसिओ राया सेणिओ मगहाहिवो । एवं ते इड्ढिमंतस्स कहं नाहो न विज्जई ? ॥ १० ॥

होमि नाहो भयंताण भोगे भुंजाहि संजया ! । मित्त—नाइपरिवुडो माणुस्सं खु सुदुल्लहं ॥ ११ ॥

अनयोर्व्याख्या—तत स प्रहसित अनाथत्वासम्भावनया विस्मितो राजा नृप· श्रेणिको मगधाधिप· 'कथितवानिति शेष'। एवमिति दृश्यमानप्रकारेण ऋद्धिमतो विस्मयनीयवर्णादिसम्पत्तिमतः कथं नाथो न विद्यते ?। यत.—

"यत्राकृतिस्तत्र गुणा गुणाढ्ये च स्थिर धनम् । तत्र श्री श्रीमतश्चाज्ञा तस्या राज्यमिय स्थितिः" ॥ १ ॥ इति

तथाच न कथञ्चिदनाथत्वं भवत सम्भवतीति भाव· ॥ यदिचानाथतैव प्रव्रज्याप्रतिपत्तिहेतु· ? तत· 'होमि' त्ति भवाम्यहं भदन्तानां पूज्यानां नाथस्ततश्च मयि नाथे मित्राणि सुहृदो ज्ञातय स्वजनाः सुप्रापा एवेत्यतस्ते· परिवृतो भुङ्क्ष्व भोगान् भो ! सयतेति । यतो मानुष्य खलु दुर्लभमिति हेत्वभिधानमिति गाथाद्वयार्थः ॥ १०—११ ॥

मुनिराह—

अप्पणा वि अणाहो सि सेणिया मगहाहिवा ! । अप्पणा अणाहो संतो कहं नाहो भविस्ससि? ॥ १२ ॥

व्याख्या—आत्मनाऽपि स्वयमपि अनाथोऽसि भोः श्रेणिक ! मगधाधिप ! । ततश्चात्मना स्वयं अनाथ· सन् कथम् 'अन्येषामिति गम्यते' नाथो भविष्यसि त्वमिति ? ॥ १२ ॥

एवं च मुनिनोक्ते—

एवं वुत्तो नरिंदो सो सुसंभंतो सुविम्हिओ । वयण अस्सुयपुव्वं साहुणा विम्हयन्निओ ॥ १३ ॥

अत्यन्तविशेषणादस्य व्याख्या—विस्मयान्वितः प्रागपि मुनिगतरूपादिविलोकनप्रभूताश्चर्यवान् स श्रेणिकनामा

नरेन्द्र एवमुक्तप्रकारेण वचनं आत्मनैव त्वमनाथोऽसीत्यादिरूपमश्रुतपूर्वं साधुना उक्तः सन् सुसम्भ्रान्तः संशयाद्व्याकुलः सुविस्मितोऽघटमानार्थोपदेशादतीवविस्मयोपेतो भूत्वा 'उक्तवानिति शेषः' ॥ १३ ॥

यदुक्तवांस्तदाह—

आसा हत्थी मणुस्सा मे पुरमंतेउरं च मे । भुंजामि माणुसे भोए आणाइस्सरियं च मे ॥ १४ ॥
एरिसे संपयग्गंमि सव्वकामसमप्पिए । कहं अणाहो भवई ? मा हु भंते ! मुसं वए ॥ १५ ॥

अनयोर्व्याख्या—अश्वादयो मे 'सन्तीति क्रियाऽत्राध्याहार्या' । अत एव भुनज्मि मानुष्यकान् भोगान् यत आज्ञाया ऐश्वर्यं प्रभुत्वं च मे ममेति ॥ तथेदृशेऽनन्तरोक्तरूपे सम्पदामग्रं सम्पदग्रं समृद्धिप्रकर्षस्तस्मिन् सति 'सव्वकामसमप्पिए' त्ति प्राकृतत्वात् समर्पितसर्वकामे कथमनाथोऽस्वामी 'भवइ'त्ति पुरुषव्यत्ययेन भवामि ? 'हुस्तस्मादर्थे' यत एवं तस्मान्मा भदन्त ! मृषा 'वए' त्ति वादीरिति सूत्रद्वयार्थः ॥ १४–१५ ॥

यतिस्तमाह—

न तुमं जाणे अणाहस्स अत्थं पुत्थं च पत्थिवा ! । जहा अणाहो हवई सणाहो वा नराहिवा ! ॥ १६ ॥
सुणेह मे महाराय ! अवक्खित्तेण चेयसा । जहा अणाहो हवई जहा मे य पवत्तियं ॥ १७ ॥

अनयोर्व्याख्या—न 'तुमं' ति न त्वं जानीषेऽवबुध्यसेऽनाथस्येत्यनाथशब्दस्य अर्थमभिधेय प्रोत्था प्रकृष्टोत्थानरूपां हे पार्थिव नृप ! अत एव यथा अनाथो भवति सनाथो वा, तथा च न जानीषे इति योग. ॥ शृणु मे मम 'कथयत इति शेष'' हे महाराज ! अव्याक्षिप्तेन चेतसोपलक्षित. सन्। किं तद् ? इत्याह—यथा अनाथो भवतीत्यनाथशब्दस्याभिधेय पुरुषो भवति, यथा 'मे य' त्ति मया च प्रवर्तितमिति प्ररूपितं 'अनाथत्वमिति प्रक्रमः' एतेनोत्थानमुक्तम् ॥ १६-१७ ॥

कोसंबी नाम नयरी पुराणपुरभेयणी । तत्थ आसी पिया मज्झं पभूयधणसंचओ ॥ १८ ॥

व्याख्या—कौशाम्बी नाम नगरी । 'पुराणपुरभेयणि' त्ति पुराणपुराणि भिनत्ति स्वगुणैरसाधारणत्वाद् भेदेन व्यवस्थापयतीति पुराणपुरभेदिनी प्रधाननगरीत्यर्थः । तत्रासीत् पिता मम प्रभूतधनसञ्चयो यस्य स. ॥१८॥

पढमे वए महाराय ! अउला मे अच्छिवेयणा । अहोत्था विउलो डाहो सव्वगत्तेसु पत्थिवा ! ॥१९॥

व्याख्या—प्रथमे वयसि प्रक्रमाद् यौवनेऽतुलाऽनुपमा मेऽक्षिवेदना चक्षूरोगजा व्यथा 'अहोत्था' त्ति अभूत् । तथा विपुलो विस्तीर्णो दाहो दाघज्वर सर्वगात्रेषु सर्वाङ्गोपाङ्गेषु हे पार्थिव ! ॥ १९ ॥

सत्थं जहा परमतिक्खं सरीरविवरंतरे । आवीलिज्ज अरी कुद्धो एवं मे अच्छिवेयणा ॥ २० ॥

व्याख्या–शस्त्रं यथा परमतीक्ष्णं 'सरीरविवरंतरे' त्ति शरीरविवराणि कर्णरन्ध्रादीनि तेषामन्तरे मध्ये 'आवीलिज्ज'त्ति आपीडयेद् गाढमवगाहयेदरिवैरी क्रुद्ध एवमित्यापीड्यमानशस्त्रवन्ममाक्षिवेदना । यथा तदत्यन्तबाधाकारि तथैषाऽपीति भावः ॥ २० ॥

तियं मे अंतरिच्छं च उत्तमंगं च पीडई । इंदासणिसमा घोरा वेयणा परमदारुणा ॥ २१ ॥

व्याख्या—त्रिकं कटिभागं मे मम अन्तरा मध्ये इच्छां चाभिमतवस्त्वभिलाषं, न केवलं बहिस्त्रीकाद्येवेति भावः, उत्तमाङ्गं शिरश्च पीडयति बाधते । कीदृशी का? इत्याह– इन्द्राशनिरिन्द्रवज्रं तत्समा तुल्याऽतिदाहोत्पादकत्वात् । घोरा परेषामपि भयोत्पादिनी वेदनाऽत एव परमदारुणाऽतीवरौद्रा दुःखदायिनीत्यर्थः ॥ २१ ॥

कश्चित् तां किं न प्रतिकृतवान्? इत्याह—

उवट्ठिया मे आयरिया विज्जा–मंतचिगिच्छगा । अबीया सत्थकुसला मंत–मूलविसारया ॥ २२ ॥

व्याख्या—उपस्थिता वेदनाप्रतीकारं प्रत्युद्यता मे ममाचार्याः प्राणाचार्या वैद्या इति यावत् । विद्या–मन्त्रचिकित्सका विद्या–मन्त्राभ्यां व्याधिप्रतिकर्तारः । अद्वितीया अनन्यसामान्यतया तादृग्द्वितीयाभावात् । शस्त्रेषु शास्त्रेषु वा कुशलाः । मन्त्राणि प्रणवपूर्वकानि, मूलानि चौषधयस्तेषु विशारदा विज्ञा मन्त्रविशारदत्वेन बिना मन्त्रचिकित्सकत्वं न भवतीति न पौनरुक्त्यम् ॥ २२ ॥

न चौपस्थानमात्रेणैव ते स्थिता', किन्तु—

**ते मे चिगिच्छं कुव्वंति चाउप्पाय जहाहियं । न य दुक्खा विमोयंति एसा मज्झ अणाहया ॥ २३ ॥**

व्याख्या—ते मे प्राणाचार्या वैद्याश्चिकित्सा उपचारं कुर्वन्ति। 'चाउप्पाय' ति चतुष्पादां भिषग्-भेषजातुर-प्रतिचारकात्मकभागचतुष्टयात्मिकां 'जहाहियं' ति यथाहितं हितानतिक्रमेण । ततः किम्? इत्याह-न चैवं कुर्वन्तोऽपि दुःखादेवंविधरोगजनिताद् विमोचयन्ति विशेषेण मुत्कलयन्ति । एषा दुःखाविमोचनरूपा ममानाथता ॥ २३ ॥

अन्यच्च—

**पिया मे सव्वसारं पि दिज्जाहि मम कारणा । न य दुक्खा विमोयंति एसा मज्झ अणाहया ॥ २४ ॥**

व्याख्या-पिता मे सर्वसारमपि निःशेषप्रधानवस्तुरूपं 'दिज्जाहि' त्ति दद्यान्मम कारणान्मोहादिहेतोः । न चैवमादरवानपि दुःखाद् 'विमोयंति' त्ति वचनव्यत्ययाद् विमोचयति । एवं सर्वत्र ॥ २४ ॥

**माया वि मे महाराय! पुत्तसोग-दुहट्टिया । न य दुक्खा विमोयंति एसा मज्झ अणाहया ॥ २५ ॥**

व्याख्या-माताऽपि मे पुत्रविषय शोक पुत्रशोको हा! कथमित्थं मत्सुतो दुःखी जात इत्यादिरूपस्ततो दुःखं तेन 'अट्टिय' त्ति आर्ता पीडिता इत्यर्थः । उत्तरार्धं प्राग्वत् ॥ २५ ॥

तथा—

भायरो मे महाराय ! सगा जिट्ठ–कणिट्ठगा । न य दुक्खा विमोयंति एसा मज्झ अणाहया ॥ २६ ॥

व्याख्या—भ्रातरो मे 'सग' त्ति सौदर्याः स्वका वा आत्मीया ज्येष्ठा अग्रजाः कनिष्ठा अनुजाः। शेषं स्पष्टम् ॥२६॥

भयणीओ मे महाराय ! सगा जेट्ठ–कणिट्ठगा। न य दुक्खा विमोयंति एसा मज्झ अणाहया ॥ २७ ॥

व्याख्या–'भयणि' त्ति भगिन्यः । शेषं सुगमम् ॥ २७ ॥

भारिया मे महाराय ! अणुरत्ता अणुव्वया । अंसुपुन्नेहिं नयणेहिं उरं मे परिसिंचई ॥ २८ ॥

व्याख्या–भार्या पत्नी अनुरक्ताऽनुरागवती अन्विति कुलानुरूपं व्रतमाचारोऽस्याः साऽनुव्रता पतिव्रतेत्यर्थः । अश्रुपूर्णैर्नयनैरुरो वक्षो मे परिषिञ्चति समन्तात् प्लावयति ॥ २८ ॥

तथा—

अन्नं पाणं च न्हाणं च गंध-मल्ल-विलेवणं । मए नायमनायं वा सा बाला नोवभुंजई ॥ २९ ॥

व्याख्या–अन्नं चतुर्विंशतिधान्यात्मकं, पानं पानीयं, स्नानं च, गंधं च माल्यं च विलेपनं च कर्पूरादि गंधमाल्यविलेपनं एतन्मया ज्ञातमज्ञातं वा सद्भावसारमित्यर्थः । सा भार्या बाला नवयौवना नोपभुङ्क्ते नासेवते मम विरहदुःखदुःखिता सतीति ॥ २९ ॥

खण पि मे महाराय ! पासाओ वि न फिट्टई। न य दुक्खा विमोयति एसा मज्झ अणाहया ॥ ३० ॥

व्याख्या—क्षणमात्रमपि महाराज ! 'पासाओ वि न फिट्टई' त्ति 'अपिश्चार्थे' मम पार्श्वाच्च नापयाति न दूरे याति। किन्तु सा सदा सन्निहितैवास्तेऽतिवत्सलत्वेन। न च दु खाद् विमोचयति । एपा मेऽनाथता ॥ ३० ॥

तओ ह एवमाहंसु दुक्खमा हु पुणो पुणो। वेयणा अणुभविउ जे संसारंमि अणंतए ॥ ३१ ॥

व्याख्या—ततो रोगाप्रतिकार्यताऽनन्तरमहमेवम् 'आहंसु' त्ति उक्तवान्। यथा 'दुक्खमा हु' त्ति 'हुरेवार्थे' ततो दु.क्षमैव दु.सहैव पुन पुनर्वेदनाऽक्षिरोगप्रमुखा व्यथाऽनुभवितुं 'जे पूरणे' अनेन ससारेऽक्षीणकर्मणो हि मम प्रतिभव जायमाना वेदना दु सहा। अतस्तद्बीजभूतकर्मक्षयार्थमेव यतिष्ये इत्यर्थ. ॥ ३१ ॥

अत एवाह—

सइं च जइ मुच्चिज्जा वेयणा विउला इओ। खतो दतो निरारभो पव्वए अणगारियं ॥ ३२ ॥

व्याख्या—'चशब्दोऽप्यर्थ.' तत सकृदप्येकदाऽपि यदि मुच्येय 'अहमिति गम्यते,' कुत. ? वेदनाया विपुलाया विस्तीर्णाया इतोऽस्या अनुभूयमानायास्तत' किम् ? इत्याह–क्षान्त क्षमावान, दान्त इन्द्रिय–नोइन्द्रियदमेन, निरारम्भ , प्रव्रजेयं प्रतिपद्येयमनगारिताम्, येन संसारोच्छित्त्या वेदनाऽभाव. स्यादिति भावः ॥ ३२ ॥

एवं च चिंतइत्ताण पसुत्तो मि नराहिवा !। परियत्तंतीइ राईए वेयणा मे खयं गया ॥ ३३ ॥

व्याख्या—एवं न केवलमुक्त्वा चिन्तयित्वा च प्रसुप्तोऽस्मि। 'परियत्तंती'इति परिवर्तमानायामतिक्रामन्त्यां रात्रौ वेदना मे क्षयं गता ॥ ३३ ॥

तओ कल्ले पभायंमि आपुच्छित्ताण बंधवे । खंतो दंतो निरारंभो पव्वईओ अणगारियं ॥ ३४ ॥

व्याख्या—ततो वेदनोपशमानन्तरं कल्यो नीरोगः सन् प्रभाते आपृच्छ्य मातृपितृबान्धवप्रमुखान् क्षान्तो दान्तो निरारम्भः सन् प्रव्रजितः । कोऽर्थः ? प्रतिपन्नवाननगारितां साधुतामिति ॥ ३४ ॥

तओ हं नाहो जाओ अप्पणो य परस्स य । सव्वेसिं चेव भूयाणं तसाणं थावराण य ॥ ३५ ॥

व्याख्या—ततः प्रव्रज्याप्रतिपत्तेरहं नाथो जातो योग–क्षेमकरणक्षम इति भावः। आत्मनः स्वस्य परस्य वाऽन्यस्य पुरुषादेः सर्वेषां चैव भूतानां जीवानां त्रस्यन्तीति त्रसास्तेषां त्रसानां तिष्ठन्तीति स्थावरास्तेषां स्थावराणां च ॥३५॥

किमिति प्रव्रजितानन्तरं नाथत्वं जातम् ? गुरा नेत्याह—

अप्पा नई वेयरणी अप्पा मे कूडसामली । अप्पा कामदुहा धेणू अप्पा मे नंदणं वणं ॥ ३६ ॥

अप्पा कत्ता विकत्ता य दुहाण य सुहाण य । अप्पा मित्तममित्तं च दुप्पट्ठिय सुपट्ठिओ ॥ ३७ ॥

अनयोर्व्याख्या—'व्यवच्छेदफलत्वाद् वाक्यस्य' आत्मैव नान्यः कश्चित् किम्? इत्याह—नदी वैतरिणी महाऽनर्थ-

हेतुतया नरकनदीवात एवात्मैव कूटमिव जन्तुयातनाहेतुत्वाच्छाल्मली नरकोद्भवा । तथाऽऽत्मैव कामदुघा धेनुरिव वाञ्छितस्वर्गोपवर्गप्राप्तिहेतुत्वादियं तु रूढ्योक्ता । आत्मैव मे नन्दनं वनं चित्तप्रहत्तिहेतुत्वात् ॥ तथा आत्मैव कर्ता दु:खाना सुखाना चेति सम्बन्ध. 'प्रक्रमात् स्वात्मन एव' विकिरिता विक्षेपकश्चात्मैव तेपामेव । ततश्चात्मैव मित्रमुपकारित्वात्, अमित्रश्चापकारित्वात् । कीदृग् सन् ? दु प्रस्थितो दुराचारप्रवृत्तो वैतरण्यादिरूपः । सुप्रस्थितश्च सदनुष्ठानकर्ता कामधेन्वादिकल्प । तथाच प्रव्रज्यायामेव सुप्रस्थितत्वेनात्मनोऽन्येषां च योग–क्षेमकारित्वान्नाथत्वमिति सूत्रद्वयार्थ ॥ ३६–३७ ॥

अन्यथा पुनरनाथत्वमाह—

इमा हु अन्ना वि अणाहया निवा ! तमेगचित्तो निहुओ सुणेहिं ।
नियंठधम्मं लहियाण वि जहा सीयंति एगे बहुकायरा नरा ॥ ३८ ॥

व्याख्या—इयं वक्ष्यमाणा 'हु पूरणे' अन्याऽप्यनाथता यदभावादहं नाथो जात इति भाव । 'निव' त्ति हे नृप ! तामनाथतामेकचित्त एकाग्रमना निभृत स्थिर. शृणु । काऽसौ ? इत्याह—निर्ग्रन्थानां धर्म आचारस्तं 'लहियाण वि' त्ति लब्ध्वाऽपि यथा सीदन्ति तदनुष्ठानं प्रति शिथिलीभवन्त्येके केचन बहुकातरनरा नि:सत्त्वा पुरुषा. । इतीयं सीदनलक्षणाऽपराऽनाथतेति भाव ॥ ३८ ॥

जो पव्वइत्ताण महव्वयाइं सम्मं नो फासयई पमाया ।
अणिग्गहप्पा य रसेसु गिद्धे न मूलओ छिंदइ बंधणं से ॥ ३९ ॥

व्याख्या—यः प्रव्रज्य महाव्रतानि सम्यग् न स्पृशति नासेवते प्रमादात् । अनिग्रहात्मा विषयानियन्त्रितात्माऽत एव रसेषु मधुरादिषु गृद्धो न मूलतश्छिनत्ति बन्धनं राग–द्वेषात्मकं 'से' इति सः ॥ ३९ ॥

आउत्तया जस्स य नत्थि काई इरियाइ भासाइ तहेसणाए ।
आयाण–निक्खेव–दुगंछणाए न वीरजायं अणुजाइ मग्गं ॥ ४० ॥

व्याख्या—आयुक्तता सावधानता यस्य नास्ति काचिदतिस्वल्पाऽपि ईर्यायां भाषायां तथैषणायां आदान–निक्षेपयोरुपकरणग्रहण–न्यासयोः । जुगुप्सनायां इहोच्चारादीनां संयमानुपयोगितया जुगुप्सनीयत्वेनैव परिष्ठापनात् परिष्ठापनैव जुगुप्सनोक्ता। स ईदृक् किम्? इत्याह–न वीरैर्धीरैर्यातो वीरयातस्तमनुयात्यनुगच्छति मार्गं मुक्तिपथमल्पसत्त्वतयेति भावः ॥ ४० ॥

तथा—

चिरं पि से मुंडरुई भवित्ता अथिरव्वए तव–नियमेहिं भट्ठे ।
चिरं पि अप्पाणं किलेसइत्ता न पारए होइ हु संपराए ॥ ४१ ॥

व्याख्या—चिरमपि प्रभूतकालमपि स मुण्ड एव 'मुण्डनं मुण्ड.' केशापनयनात्मकः तस्मिन्नेव शेषानुष्ठानपराङ्मुखतया रुचिर्यस्य स मुण्डरुचिर्भूत्वा । अस्थिरव्रतो गृहीतमुक्तत्वात् तपो–नियमेभ्यो भ्रष्टश्चिरमप्यात्मान क्लेशयित्वा 'लोचादिनाऽऽत्मनैवेति गम्यते' । न पारग पर्यन्तगामी भवति । 'दुरलङ्कारे' सम्परायस्य संसारस्य 'सुब्व्यत्ययात् सूत्रे सप्तमी' ॥ ४१ ॥

स चैवंविध —

पोल्लेव मुट्ठी जह से असारे अयंतिए कूडकहावणे वा ।
राढामणी वेरुलियप्पगासे अमहग्घए होइ हु जाणएसु ॥ ४२ ॥

व्याख्या—पोल्लैवात्यन्तशुषिरैव न मनागपि निबिडा मुष्टि. प्रतीता । यथा साऽसारा । 'अयंतिए' त्ति अयन्त्रितः कूटकार्षापण इव 'वा इवार्थे' । यथा ह्यसौ न केनचित् कूटतया नियन्त्र्यते । तथैषोऽपि निर्गुणत्वादुपेक्षणीयः, राढामणि. काचमणिर्वैडूर्यप्रकाशी वैडूर्यमणिसदृश. अमहार्घकोऽल्पमूल्यक एव भवति 'हुरेवार्थे' 'जाणएसु' त्ति ज्ञेषु मुग्धजनविप्रतारकत्वात् तस्य ॥ ४२ ॥

कुसीललिंगं इह धारइत्ता इसिज्झयं जीविय वूहइत्ता ।
असंजए संजय लप्पमाणे विणिघायमागच्छइ से चिरं पि ॥ ४३ ॥

व्याख्या—कुशीललिङ्गं पार्श्वस्थादिवेषमिह जन्मनि धारयित्वा ऋषिध्वजं मुनिचिह्नं रजोहरणादि, 'जीविय' त्ति 'आर्षत्वाद् विन्दुलोपे' जीवितमसंयमजीवितं जीविकां वा निर्वहणोपायरूपां बृंहयित्वा पोषयित्वाऽत एवासंयतः सन् 'संजय लप्पमाणे' त्ति 'सोपस्कारत्वात्' संयतमात्मानं लपन् विनिघातं विविधाभिघातरूपमागच्छत्यायाति स चिरमप्यास्तामल्पकालं नरकादाविति भावः ॥ ४३ ॥

इहैव हेतुमाह—

विसं तु पीयं जह कालकूडं हणाइ सत्थं जह कुग्गहीयं ।
एसेव धम्मो विसओववन्नो हणाइ वेयाल इवाविवन्नो ॥ ४४ ॥

व्याख्या—विषं तु पीतं यथा कालकूटं 'हणाइ' त्ति हन्ति 'चस्य गम्यत्वात्' शस्त्रं च यथा कुत्सितं गृहीतं हन्तीति योगः । एष एवं विषादिवद् धर्मो यतिधर्मो विषयैः शब्दादिभिरुपपन्नो युक्तो हन्ति दुर्गतिपातहेतुत्वेन 'चस्य गम्यत्वाद्' वेताल इव 'अविवन्नो' त्ति अविपन्नोऽप्राप्तविपद् मन्त्रादिभिरनियन्त्रित इति भावः ॥ ४४ ॥

जे लक्खण सुविण पउजमाणे निमित्त–कोऊहलसंपगाढे ।
कुहेडविज्जासवदारजीवी न गच्छई सरण तंमि काले ॥ ४५ ॥

व्याख्या—यो लक्षणं पुरुषादीनां स्वप्न च प्रतीतं प्रयुञ्जानो व्यापारयन्, निमित्तं भौमादि कौतुकमपत्याद्यर्थं स्नानादि तयो• सम्प्रगाढोऽतिशयासक्त• । कुहेटकविद्या अलीकाश्चर्यकारिमन्त्राद्यात्मिकास्ता एव कर्मबन्धहेतुत्वाद् आश्रवद्वाराणि तैर्जीवितुं शीलमस्येति कुहेटकविद्याऽऽश्रवद्वारजीवी न गच्छति न प्राप्नोति शरण त्राण दुष्कृतरक्षाक्षम तस्मिन् फलोपभोगकाले ॥ ४५ ॥

अमुमेवार्थं भावयति—

तमंतमेणेव उ से असीले सया दुही विप्परियासुवेइ ।
संधावई नरग–तिरक्खजोणि मोण विराहित्तु असाहुरूवे ॥ ४६ ॥

व्याख्या—अतिमिथ्यात्वोपहततया तमस्तमसैव प्रकृष्टाज्ञानेनैव 'तु• पूरणे' स द्रव्ययतिरशील• सदा दु•खी विराधनाजनितदु•खेनैव 'विप्परियासुवेइ' त्ति विपर्यास तत्त्वादिषु वैपरीत्यमुपैत्युपगच्छति । ततश्च संधावति सततं गच्छति नरक–तिर्यग्योनी• मौन चारित्र विराध्यासाधुरूपस्तत्त्वतोऽयतिस्वभाव• सन् ॥ ४६ ॥

कथं स तद्गती संधावतीत्याह—

उद्देसियं कीयगडं नियागं न मुंचई किंचि अणेसणिज्जं ।
अग्गी विवा सव्वभक्खी भवित्ता इओ चुओ गच्छइ कट्टु पावं ॥ ४७ ॥

व्याख्या—उद्देशिकं प्रतीतं, क्रयणं क्रीतं तेन कृतं क्रीतकृतं, नियागं नित्यपिण्डं न मुञ्चति किञ्चिदप्यनेपणीयम् । अग्निरिव 'विवेतीवार्थे' 'प्राकृतत्वादाकारः' सर्वं प्रासुकाप्रासुकादि भक्षयतीत्येवंशीलः सर्वभक्षी भूत्वा इतश्च्युतो गच्छति 'कुगतिमिति शेषः' कृत्वा पापमिति ॥ ४७ ॥

यतश्चैवमतः—

न तं अरी कंठछित्ता करेइ जं से करे अप्पणिया दुरप्पया ।
से नाहिई मच्चुमुहं तु पत्ते पच्छाणुतावेण दयाविहूणो ॥ ४८ ॥

व्याख्या—न नैव 'तमिति प्रस्तावादनर्थम्' अरिः कण्ठच्छेत्ता प्राणहर्ता करोति । यत् 'से' तस्य करोत्यात्मीया दुरात्मता दुष्टाचारप्रवृत्तिरूपा । न चैनामाचरन्नपि जन्तुर्मूढतया वेत्ति । परं स दुरात्मताकर्ता ज्ञास्यति दुरात्मतां

मृत्युमुखं तु प्राप्त । पश्चादनुतापेन हा ! दुष्ट मयाऽनुष्ठितमित्येवंरूपेण दया संयमोऽहिंसा वा 'सत्याद्युपलक्षणमिदं' तद्विहीन सन् । अतो महाऽनर्थहेतु पश्चात्तापहेतुश्च दुरात्मता त्याज्यैवेति भाव' ॥ ४८ ॥

यस्त्वन्तेऽपि ता न वेत्स्यति तस्य किम्? इत्याह—

निरट्ठिया नग्गरुई उ तस्स जे उत्तमट्ठे विवज्जासमेइ ।
इमे वि से नत्थि परे वि लोए दुहओ वि से झिज्झइ तत्थ लोए ॥ ४९ ॥

व्याख्या—'तुरवधारणे' निरर्थिकैव निष्फलैव नाग्न्ये श्रामण्ये रुचिरिच्छा नाग्न्यरुचिस्तस्य य 'उत्तमट्ठे' त्ति 'अपेर्गम्यत्वाद्'उत्तमार्थेऽपि पर्यन्तसमयाराधनरूपेऽपि विपर्यासं दुरात्मतायामपि सुन्दरात्मतापरिज्ञानरूपमेति गच्छति। अन्यस्य तु स्यादपि किञ्चित् फलमिति भाव । यतोऽयमपि प्रत्यक्षो लोक' 'से' तस्य नास्ति देहक्लेशहेतुलोचादिसेवनात् । तथा परोऽपि भवान्तररूपोऽपि लोक कुगतिगमनादनेकदु खसम्भवाच्च । तथाच 'दुहओ वि' त्ति द्विधाऽप्यैहिक–पारत्रिकार्थाभावेन 'से झिज्झइ' त्ति स उभयलोकार्थसम्पत्तिमतो जनानवलोक्य धिग् मां निष्पुण्यकमुभयभ्रष्टतयेति चिन्तया क्षीयते तत्रेत्युभयरूपे लोके ॥ ४९ ॥

उक्तार्थोपसंहारमाह—

एमेवहाछंदकुसीलरूवे मग्गं विराहित्तु जिणुत्तमाणं ।
कुररी विवा भोगरसाणुगिद्धा निरट्ठसोया परियावमेइ ॥ ५० ॥

व्याख्या—एवमेव महाव्रतास्पर्शादिना प्रकारेण यथाच्छन्दाः स्वरुचिविरचिताचाराः कुशीलाश्च प्रतीतास्तद्रूपस्तत्स्वभावो मार्गं विराध्य जिनोत्तमानां । कुररीव पक्षिणीव भोगरसानुगृद्धा निरर्थो निष्प्रयोजनः शोको यस्याः सा तथा परितापं पश्चात्तापरूपमेति गच्छति । यथा चैषाऽऽमिषगृद्धा पक्ष्यन्तरेभ्यो विपत्प्राप्तौ शोचते न च ततः प्रतीकार एवमसावपि भोगरसगृद्धो लोकद्वयानर्थप्राप्तौ । ततोऽस्य स्व–परपरित्राणासमर्थत्वेनानाथत्वमिति भावः ॥ ५० ॥

कृत्योपदेशमाह—

सुच्चाण मेहावि ! सुभासियं इमं अणुसासणं नाणगुणोववेयं ।
मग्गं कुसीलाण जहाय सव्वं महानियंठाण वए पहेण ॥ ५१ ॥

व्याख्या—श्रुत्वा मेधाविन् ! सुष्ठु शोभनप्रकारेण भाषितं सुभाषितमिदमनन्तरोक्तमनुशासनं शिक्षणं ज्ञानेन गुणेन च विरतिरूपेणोपपेतं युक्तं । किं ? मार्गं कुशीलानां हित्वा सर्वं महानिर्ग्रन्थानां व्रजेस्त्वं पथेति ॥ ५१ ॥

तत' किं फलम् ? इत्याह—

चरित्तमायारगुणान्निए तओ अणुत्तरं संजम पालियाणं ।
निरासवे संखवियाण कम्मं उवेइ ठाण विउलुत्तम धुवं ॥ ५२ ॥

व्याख्या—चरित्रस्याचार आसेवन गुणो ज्ञान ताभ्यामन्वितो 'मोऽलाक्षणिक' महानिर्ग्रन्थमार्गगमनादनुत्तरं प्रधानं संयमं यथाख्यातचारित्ररूप पालयित्वा निराश्रवो हिंसाद्याश्रवरहित 'सखविया ण' ति सक्षिपय्य संक्षयं नीत्वा कर्म ज्ञानावरणादि उपैत्युपगच्छति स्थानं विपुलमनन्तानां तत्रावस्थितेरत उत्तम ध्रुवं नित्यं मुक्तिपदमित्यर्थ. ॥५२॥

सर्वोपसंहारमाह—

एवुग्गदंते वि महातवोहणे महामुणी महापइन्ने महायसे ।
महानियठिज्जमिण महासुय से काहए महया वित्थरेणं ॥ ५३ ॥

व्याख्या—एवमुक्तप्रकारेण 'से काहए' त्ति स श्रेणिकपृष्टो महामुनिरकथयदिति सम्बन्ध' । स कीदृग् ? उग्र उत्कटः कर्मशत्रुं प्रति, दान्त. प्राग्वत् । 'अपिः पूरणे' महातपोधनो महाप्रतिज्ञ इति दृढव्रताभ्युपगमोऽत एव महायशा. । किमकथयद् ? इत्याह—महानिर्ग्रन्थेभ्यो हितं महानिर्ग्रन्थीयमिदमनन्तरोक्तं महाश्रुतं महाविस्तरेण ॥५३॥

ततश्च—

तुट्ठो य सेणिओ राया इणमुदाहु कयंजली । अणाहत्तं जहाभूयं सुट्ठु मे उवदंसियं ॥ ५४ ॥

व्याख्या—तुष्टश्च श्रेणिको राजा इदं 'वच इति शेषः' 'उदाहु' त्ति उक्तवान् कृताञ्जलिः । तदेवाह—अनाथत्वं यथाभूतं यथावस्थितं सुष्ठु यथास्यान्मे उपदर्शितं 'त्वयेति प्रक्रमः' ॥ ५४ ॥

तथा—

तुज्झं सुलद्धं खु मणुस्सजम्मं लाभा सुलद्धा य तुमे महेसी ।
तुब्भे सणाहा य सबंधवा य जं भे ठिया मग्गि जिणुत्तमाणं ॥ ५५ ॥

व्याख्या—तव सुलब्धं मनुष्यजन्म । लाभा वर्ण—रूपाद्यवाप्तिरूपाः सुलब्धास्तव महर्षे ! यूयं सनाथाः सबान्धवाश्च 'तत्त्वत इति गम्यम्' । यद् यस्माद् 'भे' भवन्तः स्थिता मार्गे जिनोत्तमानाम् ॥ ५५ ॥

किञ्च—

तं सि नाहो अनाहाणं सवभूयाण संजया ! । खामेमि ते महाभाग ! इच्छामि अणुसासिउं ॥५६॥

व्याख्या—त्वमसि नाथोऽनाथानां सर्वभूतानां हे संयत ! क्षामयामि 'ते' त्ति त्वां हे महाभाग! इच्छामि अनुशासयितु शिक्षयितुमात्मान 'भवतेति गम्यते' ॥ ५६ ॥

पुन क्षामणमेवाह—

पुच्छिऊण मए तुब्भ झाणविग्घो उ जो कओ । निमत्तिया य भोगेहि तं सव्वं मरिसेहि मे ॥५७॥

व्याख्या—पृष्ट्वा कथ प्रथमवयसि प्रव्रजित ? इति पर्यनुयुज्य मया तव ध्यानविघ्नस्तु यः कृतो निमन्त्रिताश्चागृहीता यूयं भोगैस्तत् सर्व 'मरिसेहि' त्ति क्षमस्व मे ममेति ॥ ५७ ॥

अध्ययनोपसंहारमाह—

एव थुणित्ताण स रायसीहो अणगारसीह परमाइ भत्तीए ।
सओरोहो य सबंधवो य धम्माणुरत्तो विमलेण चेयसा ॥ ५८ ॥

ऊससियरोमकूवो काऊण य पयाहिण । अभिवदिऊण सिरसा अइयाओ नराहिवो ॥ ५९ ॥

अनयोर्व्याख्या—एवं स्तुत्वा स राजसिंह श्रेणिकोऽनगारसिंहं 'उभयत्र सिंहशब्द. प्रकृष्टवाचक ' 'सओरोहो'त्ति सावरोध. सान्त.पुर सबान्धवश्च विमलेनापगतमिथ्यात्वमलेन चेतसोपलक्षित. ॥ उच्छ्वसिता उद्भिन्ना रोमकूपा

रोमरन्ध्राणि यस्यासावुच्छ्वसितरोमकूपः कृत्वा प्रदक्षिणामभिवन्द्य च शिरसा 'अइयाओ' त्ति अतियातो गतः 'स्वस्थानमिति गम्यते' इति पद्यद्वयार्थः ॥ ५८-५९ ॥

साधुः किं कृतवान्? इत्याह—

इयरो वि गुणसमिद्धो तिगुत्तिगुत्तो तिदंडविरओ य।
विहग इव विप्पमुक्को विहरइ वसुहं विगयमोहो ॥ ६० ॥ त्ति बेमि ॥

व्याख्या-इतरः संयतोऽपि गुणसमृद्धस्त्रिगुप्तिगुप्तस्त्रिदण्डविरतश्च विहग इव पक्षीव विप्रमुक्तः क्वचिदपि प्रतिबन्धरहितो विहरति वसुधां विगतमोहः। इति ब्रवीमीति प्राग्वत् ॥ ६० ॥ ग्रं० २४५-१६ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां महानिर्ग्रन्थीयाख्यं विंशतितममध्ययनं समाप्तमिति ॥ २० ॥

# अथ एकविंशं समुद्रपालीयमध्ययनम् ।

अनन्तराध्ययनेऽनाथत्वमुक्तमिह तदालोचनाद् विविक्तचर्यैव चरितव्यमिति तामभिधातुमाह—

चंपाए पालिए नाम सावए आसि वाणिए । महावीरस्स भगवओ सीसो सो उ महप्पणो ॥ १ ॥

व्याख्या—चम्पायां पुरि पालितनामा सार्थवाह. श्रावक आसीदभूद् वाणिजो वणिग्जातिः । महावीरस्य भगवतः शिष्य. स 'तुर्विशेपणे' महात्मन. प्रशस्यात्मन. ॥ १ ॥

स च कीदृग् ? इत्याह—

निग्गंथे पावयणे सावए से विकोविए । पोएण ववहरंते पिहुड नगरमागए ॥ २ ॥

व्याख्या—नैर्ग्रन्थे निर्ग्रन्थसम्बन्धिनि प्रवचने श्रावक. स विशेपेण कोविदो जीवादिपदार्थज्ञाता पोतेन व्यवहरन् प्रवहणवाणिज्यं कुर्वन् पिहुण्डं नगरमागत. प्राप्त. ॥ २ ॥

तत्र च—

पिहुंडे ववहरतस्स वाणिओ देइ धूयरं । तं ससत्त पईगिज्झ सदेसमह पत्थिओ ॥ ३ ॥

व्याख्या—पिहुण्डे व्यवहरतस्तस्य तद्गुणाकृष्टचेताः कश्चिद् वणिग् ददाति 'धूयरं' ति दुहितरं पुत्रीं 'तां चोदूढवान्, स्थित्वा च तत्र कियत्कालमित्यध्याहारः'। ततस्तां ससत्त्वां सगर्भां प्रतिगृह्यादाय स्वदेशं प्रत्यथ प्रस्थितश्चलितः ॥ ३ ॥

तत्रागच्छतः किमजनि? इत्याह—

अह पालियस्स घरणी समुद्दंमि पसवई। अह बालए तहिं जाए समुद्दपालित्ति नामए ॥ ४ ॥

व्याख्या—अथ पालितस्य गृहिणी भार्या समुद्रे प्रसूतेऽथ बालकः सुतस्तस्मिन् प्रसवने जातः समुद्रपाल इति नामकः ॥ ४ ॥

ततश्च—

खेमेण आगए चंपं सावए वाणिए घरं। संवड्ढई घरे तस्स दारए से सुहोईए ॥ ५ ॥

व्याख्या—क्षेमेण कुशलेनागतश्चम्पां श्रावकः 'घरं' ति गृहं 'चस्य गम्यत्वात्' स्वकीयं गृहं चागतः। कृतं च तत्र वर्धापनकादि। संवर्धते गृहे तस्य पालितस्य दारकः स सुखैरुचितः सुखोचितः सुकुमारोऽकर्कशः ॥ ५ ॥

बावत्तरी कलाओ य सिक्खिए नीइकोविए। जुव्वणेण य संपन्ने सुरूवे पियदंसणे ॥ ६ ॥

व्याख्या—तत कलाग्रहणयोग्यतां प्राप्त स द्वासप्ततिकला शिक्षितो नीतिकोविदो न्यायाभिज्ञो यौवनेन च सम्पन्नो युक्तोऽत एव सुरूप प्रियदर्शन. सर्वेषामानन्दक. ॥ ६ ॥

तस्स रूववइ भज्जं पिया आणेइ रूविणि । पासाए कीलए रम्मे देवो दोगुंदगो जहा ॥ ७ ॥

व्याख्या—विवाहयोग्यता च तस्य ज्ञात्वा रूपवतीं भार्यां पिता पालितो वणिगानयति रूपिणी रूपिणिनाम्नीम् । परिणायितश्च तामसौ प्रासादे क्रीडति रमते 'तया सहेति शेष.' रम्ये मनोहरे देवो दोगुन्दको यथा ॥ ७ ॥

अह अन्नया कयाई पासायालोयणे ट्ठिओ । वज्झमंडणसोभागं वज्झं पासइ वज्झग ॥ ८ ॥

व्याख्या—अथान्यदा कदाचित् प्रासादालोकने सौधगवाक्षे स्थित सन् वध्यमण्डनानि रक्तचन्दन–करवीरादीनि तै शोभा यस्यासौ वध्यमण्डनशोभाकस्त तादृश वध्य वधार्हं कञ्चनाकार्यकारिणं नर पश्यति बाह्यगं बहिर्नीयमानं वध्यभूमिगत वा ॥ ८ ॥

तं पासिऊण सवेग समुद्दपालो इणमब्बवी । अहो! असुहाण कम्माणं निज्जाण पावग इमं ॥ ९ ॥

व्याख्या—तं तथाविध वध्य दृष्ट्वा संवेगः ससारवैमुख्यतो मुक्त्यभिलापस्तद्धेतुत्वात् सोऽपि संवेगस्त सवेगजन-

कमित्यर्थस्ततश्च समुद्रपाल इदमब्रवीत् । यथा—अहो ! अशुभानां कर्मणां निर्याणमवसानं पापकमशुभमिदं प्रत्यक्षम्, यदसौ वराको वधार्थमित्थं नीयते इति भावः ॥ ९ ॥

संबुद्धो सो तहिं भगवं परं संवेगमागओ । आपुच्छम्मा–पियरो पव्वए अणगारियं ॥ १० ॥

व्याख्या—एवं च भावयन् सम्बुद्धो ज्ञाततत्त्वः स वणिक्पुत्रस्तत्रेति प्रासादालोकने भगवान् माहात्म्यवान् परं प्रकृष्टं संवेगमागतश्चापृच्छ्य माता–पितरौ 'पव्वए' त्ति प्राव्राजीत् प्रकर्षेण गतवाननगारितां दीक्षां प्रतिपन्नवानित्यर्थः ॥ १० ॥

प्रव्रज्य च यदसौ कृतवांस्तदाह—

जहित्तु संगं थ महाकिलेसं महंतमोहं कसिणं भयावहं ।
परियायधम्मं चऽभिरोयएज्जा वयाणि सीलाणि परीसहेय ॥ ११ ॥

व्याख्या—हित्वा त्यक्त्वा सङ्गं स्वजनादिप्रतिबन्धं 'थः पूरणे निपातः' महान् क्लेशो यस्मात् यस्मिन् वा स तथा तम् । महान् मोहोऽभिष्वङ्गो यस्मिन् स तथा तम् । कृत्स्नं सर्वं कृष्णं वा कृष्णलेश्यापरिणामहेतुत्वेनात एव भयावहं विवेकिनाम् । ततः 'परियाय' त्ति पर्यायः प्रक्रमात् प्रव्रज्यापर्यायस्तत्र धर्मः पर्यायधर्मस्तं 'चः पादपूर्तौ'

'अभिरोयएज्ज' त्ति 'आर्षत्वात् ह्यस्तन्यर्थे सप्तमी' ततोऽभिरोचितवांस्तदनुष्ठाने प्रीतिं कृतवान् । एवमुत्तरक्रियास्वपि यथासम्भवं भावनीयम् । पर्यायधर्ममेव विशेषेणाह–व्रतानि महाव्रतानि, शीलानि पिण्डविशुद्ध्याद्युत्तरगुणरूपाणि, परीषहानिति 'भीमो भीमसेनेति न्यायेन' परीषहसहनानि च ॥ ११ ॥

एतदभिरुच्यनन्तर यत् कृतवांस्तदाह—

अहिंस–सच्च च अतेणग च तत्तो य वभं अपरिग्गहं च ।
पडिवज्जिया पच महव्वयाइ चरिज्ज धम्म जिणदेसिय विऊ ॥ १२ ॥

व्याख्या—अहिंसा सत्यमस्तैन्यकं ततश्च ब्रह्मचर्यमपरिग्रहं च प्रतिपद्य पञ्च महाव्रतानि 'चरिज्ज' त्ति प्राग्वदचरत् नाङ्गीकृत्यैवातिष्ठदिति भाव । धर्मं श्रुत–चारित्ररूपं जिनदेशित 'विऊ' त्ति विद्वान् जानानः ॥ १२ ॥

सव्वेहिं भूएहि दयाणुकपे खतिक्खमे सजयवंभयारी ।
सावज्जजोग परिवज्जयतो चरिज्ज भिक्खू सुसमाहिइंदिए ॥ १३ ॥

व्याख्या—'सुब्व्यत्ययात्' सर्वेषु भूतेषु प्राणिषु दयया रक्षोपदेशरूपयाऽनुकम्पत इति दयाऽनुकम्पी । क्षान्त्या न त्वशक्त्या क्षमते प्रत्यनीकदुर्वचनानि सहते इति क्षान्तिक्षम । सयतश्चासौ ब्रह्मचारी च स तथा । ब्रह्मचर्यस्य दुरनुचरत्वख्यापनार्थं पुनस्तद्ग्रहणम् । सावद्ययोगं परिवर्जयन्नचरद् भिक्षु सुसमाहितेन्द्रिय' ॥ १३ ॥

कालेण कालं विहरेज्ज रट्ठे बलाबलं जाणिय अप्पणो य ।
सीहो व सद्देण न संतसिज्जा वयजोग सुच्चा न असब्भमाहु ॥ १४ ॥

व्याख्या—कालेन पादोनपौरुष्यादिना कालमिति कालोचितं प्रत्युपेक्षणादि 'कुर्वन्निति शेषः' व्यहरद् राष्ट्रे मण्डले बलाबलं सहिष्णुत्वासहिष्णुत्वलक्षणं ज्ञात्वाऽऽत्मनः स्वस्य । यथा यथा संयमयोगहानिर्न स्यात् तथा तथेति भावः । अन्यच्च सिंहवच्छब्देन भयोत्पादकेन न समत्रस्यन्नैव सत्त्वाचलितवानत एव च वाग्योगमर्थाद् दुःखजनकं श्रुत्वा न नैवासभ्यमश्लीलरूपं 'आहु'त्ति उक्तवान् ॥ १४ ॥

तर्हि किमयमकरोद्? इत्याह—

उवेहमाणो उ परिव्वइज्जा पियमप्पियं सव्व तितिक्खएज्जा ।
न सव्व सव्वत्थऽभिरोयइज्जा न यावि पूयं गरहं च संजए ॥ १५ ॥

व्याख्या—उपेक्षमाणस्तमश्लीलवचनादिकमवधीरयन्नेव पर्यव्रजत् । तथा प्रियमप्रियं सर्वं 'तितिक्खएज्ज' त्ति अतितिक्षत सोढवान् । किञ्च न सर्वं वस्तु सर्वत्र स्थानेऽभ्यरोचयत न यथादृष्टाभिलाषुकोऽभूदिति भावो न चापि पूजां गर्हां च परापवादरूपां चाभ्यरोचयतेति योज्यम् ॥ १५ ॥

ननु भिक्षोरप्यन्यथाभाव किं सम्भवति ? येनेत्थमित्थं तद्गुणाभिधानमित्याह—

अणेगछन्दा इह माणवेहिं जे भावओ संपकरेइ भिक्खू ।
भय-भेरवा तत्थ उइंति भीमा दिव्वा मणुस्सा अदुवा तिरिच्छा ॥ १६ ॥

व्याख्या—अनेके च्छन्दा अभिप्राया 'सम्भवन्तीति गम्यम्' इह जगति 'सुब्व्यत्ययात्' मानवेषु 'जे' इति यान् छन्दान् भावतस्तत्त्वत औदयिकादिभावतो वा संप्रकरोति भृश विधत्ते भिक्षुरपि 'अपेरत्र गम्यमानत्वात्' अत इत्थमित्थं तद्गुणाभिधानमिति भाव । अपर च भयभैरवा भयोत्पादकत्वेन भीषणास्तत्र व्रताङ्गीकारे 'उइंति'त्ति उद्यान्ति उदयं यान्ति । भैरवा इत्युक्तेऽपि पुनर्भीमा इति ग्रहणमतिरौद्रताख्यापनार्थम् । दिव्या मानुष्या 'अदुव' त्ति अथवा तैरश्चा 'उपसर्गा इति गम्यते' ॥ १६ ॥

तथा—

परीसहा दुव्विसहा अणेगे सीयंति जत्था बहुकायरा नरा ।
से तत्थ पत्ते न वहिज्ज भिक्खू संगामसीसे इव नागराया ॥ १७ ॥

व्याख्या—परीषहा क्षुधादयो दुर्विषहा दु सहा 'उद्यान्तीति सम्बन्ध '। सीदन्ति संयम प्रति शिथिलीभवन्ति ।

'जत्था' इति यत्र येषूपसर्गेषु परीषहेषु च सत्सु बहुकातरा नराः 'से' इति स तत्र तेषु 'पत्ते' त्ति वचनव्यत्ययात् प्राप्तेषु नाव्यथत न चलितो वा सत्त्वाद् भिक्षुः सन्। सङ्ग्रामशीर्ष इव युद्धप्रकर्ष इव नागराजो गजेन्द्रः ॥ १७ ॥

सीओसणा दंस–मसा य फासा आयंका विविहा फुसंति देहं ।
अकुक्कुओ तत्थऽहियासइज्जा रयाइं खेविज्ज पुरे कडाइं ॥ १८ ॥

व्याख्या—शीतोष्णे दंश–मशकाश्च प्रतीताः, स्पर्शास्तृणादीनाम्, आतङ्का रोगा विविधाः स्पृशन्त्युपतापयन्ति देहं 'तथापीति गम्यम्'। 'अकुक्कुओ' त्ति आर्षत्वान्न कुत्सितं कूजति पीडितः सन्नाक्रन्दतीत्यकुकूजस्तत्र शीतादिष्वध्यसहत। एवंविधश्च रजांसि जीवमालिन्यहेतुतया कर्माणि 'खेविज्ज'त्ति अक्षिपत परीषहसहनादिभिः क्षिप्तवान् ॥ १८ ॥

पहाय रागं च तहेव दोसं मोहं च भिक्खू सययं वियक्खणो ।
मेरु व्व वाएण अकंपमाणो परीसहे आयगुत्ते सहिज्जा ॥ १९ ॥

व्याख्या—प्रहाय त्यक्त्वा रागं द्वेषं च तथैव मोहं मिथ्यात्वादिरूपमज्ञानं वा भिक्षुः सततं विचक्षणो मेरुवद् वातेनाकम्पमानः परीषहान् आत्मना गुप्त आत्मगुप्तः कूर्मवत् संकुचिताङ्गः 'सहिज्ज' त्ति असहत ॥ १९ ॥

अणुन्नए नावणए महेसी न यावि पूय गरहं च संजए ।
से उज्जुभाव पडिवज्ज सजए निवाणमग्ग विरए उवेइ ॥ २० ॥

व्याख्या–अनुन्नतो नावनतश्च महर्षिर्न चापि पूजां गर्हां च 'प्रतीति शेप ' 'संजए' त्ति असजत् सङ्गं कृतवान् तत्र चानुन्नतत्वमनवनतत्वं च हेतु , भावत उन्नतो हि पूजा प्रति, अवनतश्च गर्हां प्रति, सङ्गं कुर्यान्नत्वन्यथेति भाव । 'से' इति स एवं गुणवान् ऋजुभावमार्जव प्रतिपद्याङ्गीकृत्य सयतो निर्वाणमार्गं विरत सन्नुपैति प्राप्नोति ॥ २० ॥

तदा स कीदृक् किं करोति ? इत्याह—

अरइ–रइसहे पहीणसथवे विरए आयहिए पहाणव ।
परमट्ठपएहि चिट्ठई छिन्नसोए अममो अकिंचणो ॥ २१ ॥

व्याख्या—अरति रती सयमासयमविपये सहते ताभ्यां न वाध्यते इत्यरति रतिसह । प्रहीण प्रक्षीण सस्तव पूर्व–पश्चात्परिचयरूपो गृहिभि सह यस्य स तथा । विरत आत्महितः, प्रधान. सर्वसंयमो मुक्तिहेतुत्वादस्यास्त्यसौ प्रधानवान् । परमश्चासावर्थश्च परमार्थो मोक्षस्तस्य पदानि सम्यग्दर्शनादीनि तेपु तिष्ठति । छिन्नानि स्रोतांसि

मिथ्यादर्शनादीनि येनासौ छिन्नस्रोताः छिन्नशोको वाऽत एवाममोऽकिञ्चनः । इह च संयमविशेषाणामानन्त्यात् तदभिधायिपदानां पुनः पुनरभिधानेऽपि न पौनरुक्त्यम् ॥ २१ ॥

विवित्तलयणाइ भएज्ज ताई निरोवलेवाइ असंथडाइं ।
इसीहि चिन्नाइ महायसेहि काएण फासेज्ज परीसहाइं ॥ २२ ॥

व्याख्या–विविक्तानि लयनानि स्त्र्यादिरहितोपाश्रयरूपाण्यत एव निरुपलेपानि भावतोऽभिष्वङ्गरूपोपलेपवर्जितानि द्रव्यतस्तदर्थं नोपलिप्तानि । असंस्तृतानि बीजादिभिरव्याप्तानि । अत एव निर्दोषतया ऋषिभिर्मुनिभिश्चीर्णान्यासेवितानि महायशोभिः 'भएज्ज' त्ति अभजदिति सम्बन्धः । तथा कायेनास्पृशत् सोढवानित्यर्थः 'चस्याध्याहारात्' परीषहांश्च । पुनः पुनः परीषहस्पर्शनाभिधानमतिशयख्यापनार्थम् ॥ २२ ॥

ततः स कीदृगभूद्? इत्याह—

स नाण–नाणोवगए महेसी अणुत्तरं चरिउं धम्मसंचयं ।
अणुत्तरे नाणधरे जसंसी ओभासई सूरिए वंतलिक्खे ॥ २३ ॥

व्याख्या–स समुद्रपालनामा मुनिर्ज्ञानं श्रुतज्ञानं तेन ज्ञानमवगमः 'प्रक्रमाद् यथावत् क्रियाकलापस्य' तेनोपगतो युक्तो ज्ञान–ज्ञानोपगतो महर्षिरनुत्तरं चरित्वा धर्मसंचयं क्षान्त्यादिधर्मसमूहम् । अनुत्तरमुत्कृष्टं यज्ज्ञानं केवलाख्यं

तद्धरो यशस्वी 'ओभासइ'त्ति अवभासते प्रकाशते सूर्यवदन्तरिक्षे, यथाऽऽकाशे सूर्योऽवभासते तथाऽसावप्युत्पन्न-केवल इति ॥ २३ ॥

अध्ययनोपसंहारमाह—

दुविह खवेऊण य पुन्न-पाव निरंगणे सव्वओ विप्पमुक्के ।
तरित्ता समुद्द व महाभवोह समुद्दपाले अपुणागम गए ॥ २४ ॥ त्ति बेमि ॥

व्याख्या–द्विविध घात्यघातिकर्मभेदेन पुण्य-पाप शुभाशुभप्रकृतिरूपं अर्थात् कर्म क्षपयित्वा 'अगेर्गत्यर्थत्वात्' निरञ्जन 'प्रस्तावात् सयमे' निश्चल शैलेश्यवस्थां प्राप्त इत्यर्थ । सर्वतो बाह्यादान्तराच्च 'प्रक्रमादभिष्वङ्गहेतो' विप्रमुक्त' । तीर्त्वोल्लङ्घ्य समुद्रमिवातिदुस्तरतया महांश्चासौ भवौघश्च देवादिभवसमूहस्त समुद्रपालो मुनिरपुनरागमां गतिं सिद्धिलक्षणा गत प्राप्त । इति ब्रवीमीति प्राग्वत् ॥ २४ ॥ ग्र० ११७–१६ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां समुद्रपालीयमेकविंशमध्ययन समाप्तम् ॥ २१ ॥

# अथ द्वाविंशं रथनेमीयमध्ययनम् ।

इहानन्तराध्ययने विविक्तचर्योक्ता, सा च चारित्रिणा धृतिमता च कर्तुं शक्यतेऽतः कथञ्चिदुत्पन्नविस्रोतसिकेनापि रथनेमिवच्चरणे चारित्रे धृतिराधेयेत्यनेन सम्बन्धेनायातस्यास्य रथनेमीयाख्यस्य द्वाविंशाध्ययनस्य प्रस्तावनाऽर्थं श्रीनेमिचरितं किञ्चिल्लिख्यते । तथाहि—

रम्ये कस्मिंश्चिदेकस्मिन् संनिवेशे श्रियाऽऽश्रिते । कुलपुत्रो धनाभिख्यो ग्रामाध्यक्षोद्वहोऽभवत् ॥ १ ॥
तन्मातुलसुता तस्य जज्ञे धनवती प्रिया । ग्रीष्मर्तावन्यदा सोऽगादरण्यानीं सतन्त्रकः ॥ २ ॥
प्रयोजनवशात् तत्र भ्रमन् सोऽपश्यदेककम् । साधुं सार्थपरिभ्रष्टं भूगतं धमनीकृशम् ॥ ३ ॥
क्षुत्-तृपाऽऽर्ति-पथश्रान्ति-संशुष्यद्गल-तालुकम् । कृच्छ्राज्जिगमिषुप्राणं विनिमीलितलोचनम् ॥४॥ (युग्मम्)
धनोऽथ दध्यिवानेष सुतपस्वी महामुनिः । कुतोऽपि हेतोः सम्प्राप्तः कश्चिदेतादृशीं दशाम् ॥ ५ ॥
ततः सञ्जातकरुणो भक्त्याऽम्भोभिः सिषेच तम् । चेलाञ्चलसमीरेण देहसंवाहनेन च ॥ ६ ॥
सुस्थं कृत्वा पुरं नीत्वा प्रत्यचारीत् सदौषधैः । साधुरप्युचितं धर्मोपदेशं ददिवान् मुदा ॥ ७ ॥ (युग्मम्)
"संसारे[1] दुहपउरे परलोगहियं वुहेण कायव्वं । ता मंस-मज्ज-पारद्धिमाइ ण करेज्ज कइया वि ॥ १ ॥

१ संसारे दुःखप्रचुरे परलोकहितं बुधेन कर्तव्यम् । तत् मांस–मद्य–पापर्द्ध्यादि न कुर्यात् कदाऽपि ॥ १ ॥

'पंचिंदियवहभूयं मंसं दुग्गधमसुइ वीभच्छं । मज्ज च कुगइमूल सिरि-हिरि-मइ-धम्मनासकरं ॥ २ ॥
सपरोवघायजणया नारय–तिरिदुहकरा य पारद्धी । आयहियएणं तिन्नि वि वज्जेयव्वाणि वहुदोसा" ॥ ३ ॥
एवमाकर्ण्य सविभ्र स ऊचे भगवन्नहो ! । गृहस्थोचितमादेश्य धर्मकृत्यं कृपालुना ॥ ८ ॥
साधुराह–"सो धम्मो जत्थ दया, दसट्ठदोसा न जस्स सो देवो । सो सुगुरू जो नाणी आरंभ-परिग्गहोवरओ ॥१॥
अन्न च–देव-गुरूण तिसझ करेज्ज तह परमवदण विहिणा । तह पुप्फ–वत्थमाईहि पुयणं सव्वकालंमि ॥ २ ॥
भोयणसमए सयणे विवोहणे पवसणे भए वसणे । पंचनमोकारं खलु सुमरेज्जा सव्वकज्जेसु" ॥ ३ ॥
एवमाद्युपदेशेन ग्राहित शुभभावतः । सम्यक्त्वमूलसुश्राद्धधर्मं तेन स साधुना ॥ ९ ॥
धन्यम्मन्यो धन साधूपदिष्ट धर्ममाचरत् । महत् तपस्विवात्सल्यात् शुभकर्मानुबद्धवान् ॥ १० ॥

---

१ पञ्चेन्द्रियवधभूत मास दुर्गन्धमशुचि वीभत्सम् । मद्य च कुगतिमूल श्री ह्री-मति धर्मनाशकरम् ॥ २ ॥
स-परोपघातजनका नरक तिर्यग् दु खकरा च पापर्द्धि । आत्महितकेन त्रीण्यपि वर्जितव्यानि वहुदोषाणि ॥ ३ ॥
२ स धर्मो यत्र दया, दशाष्टदोषा न यस्य स देव । स सुगुरुर्यो ज्ञानी आरम्भ-परिग्रहोपरत ॥ १ ॥
अन्यच्च–देव-गुरूणा त्रिसन्ध्य कुर्यात् तथा परमवन्दन विधिना । तथा पुष्प वस्त्रादिभि पूजन सर्वकाले ॥ २ ॥
भोजनसमये शयने विबोधने प्रवसने भये व्यसने । पञ्चनमस्कार खलु स्मरेत् सर्वकार्येषु ॥ ३ ॥

साधुर्धर्मे स्थिरीकृत्य तमापृच्छ्य च संयमी । भव्यान् सम्बोधयन् पृथ्वीं विजहार यथासुखम् । ११ ॥
धनः स्वीकृत्य चारित्रं समये सकलत्रकः । तदाराध्य च सौधर्मे सोऽभूत् सामानिकः सुरः ॥ १२ ॥
धनवत्यपि तत्रैव तन्मित्रत्वेन चाजनि । तत्र दिव्यं महासौख्यं तौ द्वावनुबभूवतुः ॥ १३ ॥
ततश्च्युतो धनो जज्ञे वैताढ्ये सूरतेजसः । राज्ञः पुत्रश्चित्रगतिनामा विद्याधरेश्वरः ॥ १४ ॥
सुता सूरनरेन्द्रस्य भूत्वा सा धनवत्यपि । तस्य चित्रगते राज्ञो जाया जाताऽतिवल्लभा ॥ १५ ॥
प्रान्ते प्रव्रज्ययाऽभूतां तौ माहेन्द्रे सुरोत्तमौ । धनः सामानिकस्तत्र तन्मित्रमपराऽभवत् ॥ १६ ॥
ततोऽपराजितो भूपो धनः प्रीतिमती प्रिया । अन्या तस्यारणे कल्पे तावास्तां सुहृदौ ततः ॥ १७ ॥
ततश्च्युतो धनः शङ्खनृपोऽन्या च यशोमती । तत्कान्ताऽजनि वैराग्याद् व्रतं जगृहतुस्तकौ ॥ १८ ॥
शङ्खर्षिर्विंशतिस्थानान्यर्हद्भक्त्यादिकानि च । आराध्य विधिना सम्यक् तीर्थकृत्कर्म बद्धवान् ॥ १९ ॥
ततोऽपराजिताभिख्ये विमाने त्रिदशो धनः । यशोमत्यपि चारित्रं चरित्वा तत्र सोऽभवत् ॥ २० ॥
इतः शौर्यपुरद्रङ्गे समुद्रविजयो नृपः । दशानां च दशार्हाणां ज्यायान् राज्यं पिपर्ति यः ॥ २१ ॥
तद्वल्लभा शिवादेवी तत्कुक्षाववतीर्णवान् । धनजीवोऽङ्गजत्वेन विमानादपराजितात् ॥ २२ ॥
सुयोगे कार्तिके मासि श्यामायां द्वादशीतिथौ । निशीथे तत्र साऽद्राक्षीच्छुभस्वप्नांश्चतुर्दश ॥ २३ ॥

श्रावणिक्या च पञ्चम्या शुद्धाया विश्वशर्मदम् । द्योतयन्तं दिश सर्वाः साऽसूत समये सुतम् ॥ २४ ॥
तदा तत्रागता दिक्कुमार्यो निजनिजाश्रयात् । षट्पञ्चाश मुदा सूतिकर्मशुद्धिं व्यधुस्तराम् ॥ २५ ॥
अर्हज्जन्मावधेर्मत्वा चतु षष्टि सुरेश्वरा । सुमेरुशिखरे स्नात्रं चक्रिरे सपरिच्छदा. ॥ २६ ॥
समुद्रविजयो राजा पुरालङ्करणादिभि । पारितोषिकदानाद्यैर्वर्धापनमहो व्यधात् ॥ २७ ॥
देवीदृष्टारिष्टरत्नचतचक्रस्वप्नानुसारत । अरिष्टनेमिरित्याख्या स चकार महोत्सवै ॥ २८ ॥
लाल्यमान. पाल्यमानो धात्रीभि प्रेमपूर्वकम् । प्रभुर्जातोऽष्टवर्षीयान् वर्धमान कलाऽऽदिभि ॥ २९ ॥
तथाऽपराजिताच्च्युत्वोग्रसेननृपतेस्तदा । देवो यशोमतीजीवो राजीमत्यभवत् सुता ॥ ३० ॥
इतश्च–हरिहतकसव्यतिकरजीवयशावचनतो जरासन्धे । भूपे कुपितेऽपाचीं भीतास्ते यादवा भेजु. ॥ ३१ ॥
केशवभक्त्याऽऽराधितधनदकृतायां महाऽम्बुधेस्तीरे । जात्याष्टापदमय्यां ते तस्थुर्द्वारिकापुर्याम् ॥ ३२ ॥
कालेन निहत्य हरी रामोपेतो नृपं जरासन्धम् । समरे हेलासाधितभरतार्धाधीश्वरो जात ॥ ३३ ॥
तत्रेच्छया नेमिकुमारधीरस्तारुण्यमाप्तो विषयेष्वरक्त । दीव्यन्ननेकै सवय कुमारै. स यादवेष्टो विचरत्यधृष्य. ॥३४॥

शेष चरित्र सूत्रकृदेवाह—

सोरियपुरंमि नयरे आसि राया महिड्ढिओ । वसुदेवित्ति नामेणं रायलक्खणसंजुए ॥ १ ॥

तस्स भज्जा दुवे आसि रोहिणी देवई तहा। तासिं दोण्हं पि दो पुत्ता इट्ठा राम–केसवा ॥ २ ॥

अनयोर्व्याख्या–शौर्यपुरे आसीद् राजा महर्द्धिको वसुदेव इति नाम्ना राज्ञो लक्षणानि चक्र–स्वस्तिकाङ्कुशादीनि तैः संयुतो राजलक्षणसंयुतः ॥ तस्य भार्ये द्वे 'आसि' त्ति अभूताम्। 'तासिं' ति तयो रोहिणी–देवक्योर्द्वौ पुत्राविष्टौ वल्लभौ राम–केशवौ वलभद्र–वासुदेवौ 'अभूतामित्यत्रापि योज्यम्'। तत्र रोहिण्या रामो देवक्याश्च केशवो वासुदेवो नवम इति गाथाद्वयार्थः ॥ १–२ ॥

सोरियपुरंमि नयरे आसि राया महिड्ढिए। समुद्दविजए नामं रायलक्खणसंजुए ॥ ३ ॥
तस्स भज्जा सिवा नाम तीसे पुत्ते महायसे। भयवं अरिट्ठनेमित्ति लोगनाहे दमीसरे ॥ ४ ॥

अनयोर्व्याख्या–शौर्यपुरे नाम्नि पूर्वोक्ते नगरे आसीद् राजा महर्द्धिकः समुद्रविजय इति नाम यस्य स समुद्रविजयनामा 'प्राकृतत्वादनुस्वारः', किं लक्षणः? राजलक्षणानि छत्र–चामर–सिंहासनादीनि तैः संयुतः। पुनः शौर्यपुराभिधानं समुद्रविजय–वसुदेवयोरेकत्र स्थितिदर्शनार्थम्। तथा भगवद्विवाहोपयोगित्वेन प्रथमोत्पन्नत्वेन च केशवस्य पूर्वमभिधानम्, तत्सहचरत्वाद् रामस्येति। दमिनामुपशमिनामीश्वरो दमीश्वरः कौमार एव जितकामवीर्यत्वात् तस्येति गाथाद्वयार्थः ॥ ३–४ ॥

स भगवान् कीदृग् ? इत्याह—

सोऽरिट्ठनेमिनामो उ लक्खण-स्सरसजुओ । अट्ठसहस्सलक्खणधरो गोयमो कालगच्छवी ॥ ५ ॥

व्याख्या–सोऽरिष्टनेमिनामा 'प्राकृतत्वेन पूर्वनिपातात्' स्वरस्य लक्षणानि सुस्वरत्व-गम्भीरत्वादीनि तै. संयुत स्वर-लक्षणसंयुतः । अष्टोत्तरसहस्रलक्षणधर' अष्टोत्तरसहस्रसङ्ख्यशुभसूचककरादिरेखाद्यात्मकचक्रादिलक्षणधारको गौतमो गोत्रेण, कालकच्छवि. कृष्णकान्ति. ॥ ५ ॥

वज्जरिसहसंघयणो समचउरसो झसोयरो । तस्स रायमइ कन्न भज्ज जायइ केसवो ॥ ६ ॥

व्याख्या–वज्रऋषभनाराचसंहननधर', समचतुरस्र', 'झसोयरो' त्ति झषो मत्स्यस्तदुदरमिव तदाकारतयोदरं यस्यासौ झषोदरः 'मध्यपदलोपी समासः' । इतश्च द्वारिकायां राज्य भुञ्जानः केशवो यौवनस्थेऽरिष्टनेमिनि समुद्रविजयादेशतो यदचेष्टत तदाह–'तस्स' त्ति तस्यारिष्टनेमिनो राजीमतीं कन्यां भार्यां 'कर्तुमिति शेष.' याचते केशव 'तज्जनकमिति प्रक्रमः' ॥ ६ ॥

सा च कीदृशी ? इत्याह—

अह सा रायवरकन्ना सुसीला चारुपेहिणी । सव्वलक्खणसपुन्ना विज्जुसोयामणिप्पहा ॥ ७ ॥

व्याख्या–अथ सा राजवरस्योग्रसेनस्य कन्या राजवरकन्या राजीमतीत्यर्थः। सुशीला चारु मनोहरं प्रेक्षितुमवलोकितुं शीलमस्याः सा चारुप्रेक्षिणी नाधोदृष्टितादिदोपदुष्टा । सर्वलक्षणसंपूर्णा लक्षणानि मषीतिलकादीनि ताभिः संपूर्णा। पुनः किंभूता ? 'विज्जुसोयामणिप्पहा'त्ति विशेषेण द्योतते दीप्यते इति विद्युद् दीप्ता सा चासौ सौदामिनी च विद्युत्सौदामिनी तद्वत् प्रभा यस्याः सा तथा ॥ ७ ॥

अहाह जणओ तीसे वासुदेवं महिड्ढियं । इहागच्छउ कुमारो जा से कन्नं दलामहं ॥ ८ ॥

व्याख्या–अथ याच्ञाऽनन्तरमाहोक्तवान् जनक उग्रसेनस्तस्या राजीमत्या वासुदेवं महर्धिकं ससाङ्गराज्यादिऋद्धियुक्तम् । इहागच्छतु कुमारः 'जा से' त्ति 'सुब्व्यत्ययाद्' येन तस्मै कुमाराय कन्यां ददामि विवाहविधिनोपढौकयाम्यहम् ॥ ८ ॥

एवं च प्रतिपन्नायामुग्रसेनेन राजीमत्यामासन्ने क्रोष्टुक्यादिष्टे विवाहलग्ने यदभूत् तदाह—

सव्वोसहीहिं न्हविओ कयकोउयमंगलो । दिव्वजुयलपरिहिओ आहरणेहिं विभूसिओ ॥ ९ ॥

व्याख्या–सर्वाश्च ता जया–विजयर्द्धि-वृद्ध्यादयः सर्वौषधयस्ताभिः स्नपितोऽभिषिक्तः, कृतानि कौतुकानि ललाटमुशलस्पर्शनादीनि मङ्गलानि दध्यक्षत–दूर्वा–चन्दन–वन्दनादीनि यस्य स कृतकौतुकमङ्गलः । 'दिव्वजुयलपरिहिओ' त्ति प्राकृतत्वात् परिहितं दिव्ययुगलं प्रस्तावाद् दूष्ययुगलं येन स तथा । आभरणैर्विभूषितः ॥ ९ ॥

मत्त च गधहत्थि वासुदेवस्स जिट्ठगं । आरूढो सोहए अहियं सिरे चूडामणी जहा ॥ १० ॥

व्याख्या—मत्त च गन्धहस्तिनं वासुदेवस्य ज्येष्ठक पट्टहस्तिनमारूढ शोभतेऽधिकं शिरसि चूडामणिः शिरोऽलङ्काररत्नं यथा ॥ १० ॥

अह ऊसिएण छत्तेण चामराहि य सोहिओ । दसारचक्केण य सो सव्वओ परिवारिओ ॥ ११ ॥

व्याख्या—अथोच्छ्रितेनोपरि धृतेन च्छत्रेण चामराभ्यां चाधिकशोभित । दशार्हचक्रेण यदुसमूहेन सर्वत परिवारित ॥ ११ ॥

चउरंगिणीए सेणाए रइयाए जहक्कमं । तुरियाण सन्निनाएण दिव्वेण गयणं फुसे ॥ १२ ॥

व्याख्या—चतुरङ्गिण्या गजाश्व–रथ–पदातिरूपाङ्गचतुष्टयया सेनया रचितया न्यस्तया यथाक्रमं यथापरिपाटि । तूर्याणां मृदङ्ग–पटहादीना संनिनादेनातिगाढध्वनिना दिव्येन प्रधानेन देवकृतेन वा 'गयण फुसे' त्ति आर्षत्वाद् गगनस्पृशा अतिघनलतया नभोव्यापिना उपलक्षित ॥ १२ ॥

एयारिसीए इड्डीए जुईए उत्तिमाई य । नियगाओ भवणाओ निज्जाओ वण्हिपुगवो ॥ १३ ॥

व्याख्या—एतादृश्याऽनन्तराभिहितया ऋद्ध्या विभूत्या द्युत्या दीप्त्या चोत्तमयोपलक्षित सन् । निजकाद् भवनाद् निर्यातो निर्गतो वृष्णिपुङ्गवो यादवप्रधानो भगवानरिष्टनेमिरिति ॥ १३ ॥

अह सो तत्थ निज्जंतो दिस्स पाणे भयद्दुए । वाडेहिं पंजरेहिं च संनिरुद्धे सुदुक्खिए ॥ १४ ॥

व्याख्या–अथ गृहान्निर्गमनानन्तरं स भगवांस्तत्र मण्डपासन्ने निर्यन्नधिकं गच्छन् 'दिस्स' त्ति दृष्ट्वा प्राणान् प्राणिनो मृग–लावकादीन् भयद्रुतान् भयत्रस्तान् वाटैरिति वाटकैर्वृति–भित्त्यादिरूपैः, पञ्जरैश्च बन्धनविशेषैः संनिरुद्धान् वाढं नियन्त्रितान् अत एव सुदुःखितान् ॥ १४ ॥

तथा—

जीवितंतं तु संपत्ते मंसट्ठा भक्खियव्वए । पासित्ता से महापन्ने सारहिं इणमब्बवी ॥ १५ ॥

व्याख्या–जीवितान्तं मरणं सम्प्रासानिव सम्प्रासान् सम्भावितासन्नमरणत्वात् तेषां, मांसार्थं भक्षयितव्यान् 'अविवेकिभिरिति शेषः' । दृष्ट्वा तादृशान् हृदि निधाय सोऽरिष्टनेमिर्महाप्रज्ञो मत्यादिज्ञानत्रयात्मकः सारथिं गन्धहस्तिनो हस्तिपकमिदं वचोऽब्रवीदिति ॥ १५ ॥

कस्स अट्ठा इमे पाणा एए सव्वे सुहेसिणो । वाडेहिं पंजरेहिं च संनिरुद्धा य अच्छहिं ॥ १६ ॥

व्याख्या–कस्यार्थाद् हेतोरिमे प्रत्यक्षाः प्राणाः प्राणिन एते समीपस्थाः सर्वे सुखैषिणो वाटैः पञ्जरैश्च संनिरुद्धाः 'अच्छहिं' ति आसते ॥ १६ ॥

अह सारही तओ भणइ एए भद्दा उ पाणिणो। तुब्भं विवाहकज्जंमि भोयावेउं बहुं जणं ॥१७॥

व्याख्या–अथ भगवतैव पृष्टे सारथिर्भणति 'भद्दा उ' त्ति भद्रा एव भव्या एव, न तु श्व–शृगालादिवत् कुत्सिता निरपराधित्वाद् वा। शेषं स्पष्टम् ॥ १७ ॥

सारथिनैवमुक्ते यद् भगवान् कृतवांस्तदाह—

सोऊण तस्स वयणं बहुपाणिविणासणं। चिंतेइ से महापन्ने साणुक्कोसे जिए हिओ ॥ १८ ॥

व्याख्या–श्रुत्वा तस्य सारथेर्वचनं बहूनां प्राणिनां विनाशनमभिधेयं यस्मिंस्तद् बहुप्राणिविनाशनं। चिन्तयति स नेमिर्महाप्राज्ञः प्राग्वत्। सानुक्रोशः सदयो जीवेषु हितः ॥ १८ ॥

जइ मज्झ कारणा एए हम्मंति सुबहू जिया। न मे एयं तु निस्सेसं परलोए भविस्सई ॥ १९ ॥

व्याख्या–यदि मम कारणान्मम विवाहहेतोरेते हन्यन्ते सुबहवो जीवाः 'भोजनार्थममीषामिति भावः'। न मे ममैतज्जीवहननं निःश्रेयसं कल्याणं परलोके भविष्यति पापहेतुत्वादस्येति भावः ॥ १९ ॥

एवं च विदितभगवदाकूतेन सारथिना मोचितेषु प्राणिषु परितुष्टोऽसौ यत् कृतवांस्तदाह—

सो कुंडलाण जुयलं सुत्तगं च महायसो। आभरणाणि य सव्वाणि सारहिस्स पणामए ॥ २०॥

व्याख्या–स महायशा भगवान् कुण्डलयोर्युगलं सूत्रकं कटीसूत्रं च । किमेतदेव ? इत्याह–आभरणानि सर्वाणि सारथये 'पणामए' त्ति अर्पयति ॥ २० ॥

ततश्च—

**मणपरिणामो य कओ देवा य जहोइयं समोइन्ना । सव्विड्ढीइ सपरिसा निक्खमणं तस्स काउं जे ॥२१॥**

व्याख्या–मनःपरिणामश्चाभिप्रायः कृतः 'निष्क्रमणं प्रतीति गम्यम्' । देवाश्चतुर्निकाया यथोचितमौचित्यानतिक्रमेण समवतीर्णाः सम्प्राप्ताः 'द्वाभ्यां चकाराभ्यां मनःपरिणाम–देवागमनयोस्तुल्यकालता सूचिता' । सर्वर्द्ध्या सपरिषदो बाह्य–मध्याभ्यन्तरपर्षदुपेताः । निष्क्रमणं प्रक्रमान्निष्क्रमणमहिमानं तस्य भगवतः कर्तुं 'जे इति पादपूरणे' ॥ २१ ॥

**देव-मणुस्सपरिवुडो सीयारयणं तओ समारूढो । निक्खमिय वारगाओ रेवययंमि ठिओ भयवं ॥२२॥**

व्याख्या–शिविकारत्नं देवकृतम् 'उत्तरकुरुनामकमिति गम्यते' । ततः समारूढोऽध्यासीनो निष्क्रम्य निर्गत्य द्वारिकातो रैवतके उज्जयन्ताचले स्थितो गमनान्निवृत्तो भगवान् ॥ २२ ॥

**उज्जाणं संपत्तो ओइन्नो उत्तमाओ सीयाओ । साहस्सीए परिवुडो अह निक्खमई उ चित्ताहिं ॥ २३ ॥**

व्याख्या–उद्यानं सहस्राम्रवणाख्य सम्प्राप्त । तत्र चावतीर्ण शिविकात'। 'साहस्सीए' त्ति सहस्रेण प्रधानपुसां परिवृतोऽथानन्तर निष्क्रामति प्रव्रजति 'तु पूरणे' 'चित्ताहिं' ति चित्रानक्षत्रे ॥ २३ ॥

कथम्? इत्याह—

अह से सुगंधगंधिए तुरिय मउयकुंचिए । सयमेव लुचई केसे पचमुट्ठीहि समाहिओ ॥ २४ ॥

व्याख्या–अथ स नेमि सुगन्धिगन्धिकान् सुरभिगन्धान् स्वभावत एव, त्वरित शीघ्रं, मृदुककुञ्चितान् कोमल-कुटिलान् स्वयमेव लुञ्चत्यपनयति केशान् पञ्चमुष्टिभिः समाहित समाधिमान्, सर्वं सावद्यं ममाकर्तव्यमिति प्रतिज्ञाऽऽरोपणोपलक्षणमिदम् ॥ २४ ॥

एवं च प्रव्रजिते भगवति—

वासुदेवो य ण भणइ लुत्तकेस जिइदिय । इच्छियमणोरहे तुरिय पावसू त दमीसरा ! ॥ २५ ॥

व्याख्या–वासुदेवश्च 'चशब्दात् समुद्रविजयादय.' णमितीमं नेमि भणति कथयति लुप्तकेशं लुञ्चितकेश जितेन्द्रियं जितहृपीक । ईप्सितोऽभिलपितो मनोरथ सिद्धिविपयो मुक्त्यभिलापुकस्त त्वरितं 'पावसु' त्ति प्राप्नुहि 'आशीर्वचनत्वादस्य' तमिति त्व हे दमीनामीश्वर दमीश्वर ! ॥ २५ ॥

नाणेणं दंसणेणं च चरित्तेणं तहेव य। खंतीए मुत्तीए वड्ढमाणो भवाहि य ॥ २६ ॥

व्याख्या—ज्ञानादिभिर्वर्धमानो वृद्धिभाक् 'भवाहि य' त्ति भव ॥ २६ ॥

एवं ते राम–केसवा दसारा य बहुजणा। अरिट्ठनेमिं वंदित्ता अइगया बारगाउरिं ॥ २७ ॥

व्याख्या—एवमुक्तप्रकारेण वन्दित्वा स्तुत्वेति योगः। राम–केशवौ 'दसारा य' त्ति दशार्हाश्च बहवो जनाश्चातिगताः प्रविष्टा द्वारिकां पुरीम् ॥ २७ ॥

तदा च राजीमती किमचेष्टत? इत्याह—

सोऊण रायकन्ना पवज्जं सा जिणस्स उ। नीहासा य निराणंदा सोगेण उ समुच्छया ॥ २८ ॥

व्याख्या—श्रुत्वा राजकन्या राजीमती प्रव्रज्यां जिनस्यारिष्टनेमेः। निष्क्रान्ता हास्यान्निर्हासा निरानन्दा च शोकेन समवसृताऽवष्टब्धा ॥ २८ ॥

राईमई विचिंतेई धिरत्थु मम जीवियं। जा हं तेणं परिच्चत्ता सेयं पव्वइउं मम ॥ २९ ॥



व्याख्या—धिगस्तु मम जीवितमिति स्वजीवितनिन्दोद्भावकम्। यथाऽहं तेन नेमिना परित्यक्तेति खेदहेतुदर्शकम्। ततश्च श्रेयोऽतिप्रशस्यं प्रव्रजितुं प्रव्रज्यामङ्गीकर्तुं मम, येनान्यजन्मनि नैवं दुःखभागिनी भवेयमिति ॥ २९ ॥

इत्थ च तावत् स्थिता सा यावच्छद्मस्थतयाऽन्यत्र विहृत्योत्पन्नकेवलो भगवान् पुनस्तत्रैवाजगाम। ततः प्रभुदेशना श्रुत्वोत्पन्नवैराग्या किं कृतवती? इत्याह—

अह सा भमरसन्निभे कुच्चफणगपसाहिए। सयमेव लुंचई केसे धिइमता ववस्सिया ॥ ३० ॥

व्याख्या—अथानन्तर सा राजीमती भ्रमरसंनिभान् कृष्णतया, कूर्चो गूढकेशोन्मोचको वंशमयः, फनकः कङ्कतकश्च ताभ्यां प्रसाधितान् संस्कृतानाकुञ्चिततया। स्वयमेव लुञ्चति केशान् 'स्वाम्यनुज्ञयेति गम्यम्' धृतिमती व्यवसिता धर्मं कर्तुमध्यवसिता ॥ ३० ॥

ततश्च—

वासुदेवो य णं भणइ लुत्तकेसं जिइंदियं। संसारसागरं घोरं तर कन्ने! लहुं लहुं ॥ ३१ ॥

व्याख्या—वासुदेवो 'णं' इति इमां राजीमतीं भणति लुप्तकेशां जितेन्द्रियाम्। किं भणति? इत्याह—संसारसागरं घोरं तरेत्युलङ्घय कन्ये! लघु लघु त्वरितं त्वरितं 'सम्भ्रमे द्विर्वचनम्' ॥ ३१ ॥

ततः किम्? इत्याह—

सा पव्वइया संती पव्वावेसी तहिं बहुं। सयणं परियणं चेव सीलवंता बहुस्सुया ॥ ३२ ॥

व्याख्या—सा राजीमती प्रव्रजिता सती 'पव्वावेसि' त्ति प्राविव्रजत् प्रव्राजितवती 'तहिं' ति तत्र द्वारिकायां बहुं स्वजनं परिजनं चैव शीलवती बहुश्रुता ॥ ३२ ॥

**गिरिं रेवययं जंती वासेणुल्ला उ अंतरा । वासंते अंधयारंमि अंतो लयणस्स सा ठिया ॥ ३३ ॥**

व्याख्या—गिरिं नगं रैवतकमुज्जयन्तं यान्ती गच्छन्ती 'प्रभुं वन्दितुमिति गम्यते' वर्षेण वृष्ट्या 'उल्ल' त्ति आर्द्रा स्तीमितसर्वचीवरेत्यर्थः । अन्तरेत्यन्तरालेऽर्धमार्गे 'वासंते' त्ति वर्षति 'मेघे इति गम्यम्' अन्धकारेऽपगतप्रकाशे क ? अन्तर्मध्ये लयनस्य गुहायां सा राजीमती स्थिता 'असंयमभीरुतयेति गम्यते' ॥ ३३ ॥

तत्र च—

**चीवराइं विसारंती जहाजाय त्ति पासिया । रहनेमी भग्गचित्तो पच्छा दिट्ठो य तीइ वि ॥ ३४ ॥**

व्याख्या—चीवराणि सङ्घाट्यादिवस्त्राणि विसारयंती विस्तारयन्ती । तत एव यथाजाता अनाच्छादिताङ्गोपाङ्गतया जन्मावस्थोपमा इतीत्येवंविधा 'पासिय' त्ति दृष्ट्वा । ततो रथनेमिमुनिर्भग्नचित्तः 'संयमेऽभूदिति गम्यम्' स हि तामुदाररूपामवेक्ष्योत्पन्नतदभिलापः कामातुरोऽजनीति भावः । पश्चाद् दृष्टश्च स तया राजीमत्याऽपि 'अपेः पुनरर्थत्वात्' तयाऽन्धकारे पूर्वं न दृष्टोऽन्यथैकाकिनी तत्र न प्रविशेदित्यर्थः ॥ ३४ ॥

भीया य सा तहि दट्ठु एगंते सजय तयं । बाहाहिं काउ सगोफ वेवमाणी निसीयई ॥ ३५ ॥

व्याख्या—भीता च सा 'कदाचिदसौ मम शीलभङ्ग करोतीति' । 'तहि' ति तस्मिन् लयने दृष्ट्वा एकान्ते संयतं तक रथनेमिम् । किं कृतवती? इत्याह–'बाहाहि' ति बाहुभ्या कृत्वा संगोफमन्योन्यं बाहुसंगुम्फन स्तनोपरि मर्कटबन्धमित्यर्थ. । वेपमाना शीलभङ्गभयात् कम्पमाना निषीदत्युपविशति तदाश्लेषादिपरिहारार्थमिति भाव. ॥ ३५ ॥

स च किं कृतवान्? इत्याह—

अह सो वि रायपुत्तो समुद्दविजयंगओ । भीयं पवेइयं दट्ठुं इमं वक्कमुदाहरे ॥ ३६ ॥

व्याख्या—अथ सोऽपि राजपुत्रो रथनेमि. समुद्रविजयाङ्गजो भीता प्रवेपितां कम्पमाना 'प्रक्रमाद् राजीमतीं' दृष्ट्वा इदं वक्ष्यमाण वाक्य वचनमुदाहरदुक्तवान् ॥ ३६ ॥

तदेवाह—

रहनेमि अहं भद्दे ! सुरूवे ! चारुभासिणी ! । ममं भयाहि सुतणू न ते पीला भविस्सई ॥ ३७ ॥

व्याख्या—रथनेमिरह भद्रे ! भद्रकारिणि ! सुरूपे ! चारुभाषिणि ! मा भजस्व अङ्गीकुरुष्व पतित्वेन हे सुतनु ! न ते तव पीडा भविष्यति । सुखहेतुत्वाद् विषयसेवनस्येति भाव ॥ ३७ ॥

एहि तां भुंजिमो भोए माणुस्सं खु सुदुल्लहं । भुत्तभोगी तओ पच्छा जिणमग्गं चरिस्समो ॥ ३८ ॥

व्याख्या—एह्यागच्छ 'ता' इति तस्मात् तावद् वा, मानुष्यं खु निश्चितं सुदुर्लभं ततो भुञ्जावो भोगान् । भुक्तभोगौ ततः पश्चाद् वार्धक्ये जिनमार्गं मुक्तिपथं चरिष्यावः ॥ ३८ ॥

दट्ठूण रहनेमिं तं भग्गुज्जोयपराइयं । राईमई असंभंता अप्पाणं संवरे तहिं ॥ ३९ ॥

व्याख्या—दृष्ट्वा तं रथनेमिं 'भग्गुज्जोयपराइयं' ति भग्नोद्योगो गतोत्साहः 'प्रस्तावात् संयमे' पराजितोऽभिभूतः स्त्रीपरीषहेण ततो द्वन्द्वे भग्नोद्योगपराजितस्तं राजीमती असम्भ्रान्ता 'नायं मां बलादकार्ये प्रवर्तयितेत्याशयेनात्रस्ता' आत्मानं स्वं 'संवरे' त्ति समवारीदाच्छादितवती 'चीवरैरिति गम्यते' 'तहिं' ति तस्मिन् लयनमध्ये गुफामध्ये ॥३९॥

अह सा रायवरकन्ना सुट्ठिया नियमव्वए । जाईं कुलं च सीलं च रक्खमाणी तयं वए ॥४०॥

व्याख्या—अथ सा सुस्थिता निश्चला नियमव्रते इन्द्रियनोइन्द्रियनियमे प्रव्रज्यायां च । जातिं कुलं च शीलं च रक्षन्ती तकं रथनेमिं वदेत् ॥ ४० ॥

जइ सि रूवेण वेसमणो ललिएण नलकूवरो । तहा वि ते न इच्छामि जइ सि सक्खं पुरंदरो ॥४१॥

व्याख्या—यद्यसि भवसि रूपेण वैश्रमणो धनदः, ललितेन सविलासचेष्टितेन नलकूवरो देवविशेषः । तथापि ते' इति त्वां नेच्छामि यद्यसि साक्षात् पुरन्दर इन्द्रो रूपाद्यनेकगुणाश्रय इति भावः ॥ ४१ ॥

अपरं च—

धिरत्थु तेऽजसोकामी । जो त जीवियकारणा । वतं इच्छसि आवाउं सेय ते मरणं भवे ॥ ४२ ॥

व्याख्या—धिगस्तु ते तव 'पौरुषमिति गम्यते'। हे। अयश कामिन्नकीर्त्यभिलाषिन्। तज्जनकदुराचारवाञ्छकत्वेन, यद्वा ते तव यशो महाकुलसम्भवोद्भूतं धिगस्तु हे कामिन्! भोगाभिलाषिन्! यस्त्व जीवितकारणादसंयमजीवितहेतोर्वान्तमुद्गीर्णमापातुमिच्छसि । यथा हि कश्चिद् वान्तमापातुमिच्छत्येव भवानपि प्रव्रज्याग्रहणतस्त्यक्तान् भोगान् पुनरापातुमुपभोक्तुमिच्छत 'श्रेयः कल्याण ते तव मरण भवेन्न तु वान्ताऽऽपानं ततो मरणस्यैवाल्पदोषत्वात्।

उक्तं च—

"विज्ञाय वस्तु निन्द्य त्यक्त्वा गृह्णन्ति किं कचित् पुरुषा ?। वान्त पुनरपि भुङ्क्ते न च सर्व सारमेयोऽपि" ॥ १ ॥ ४२ ॥

अहं च भोगरायस्स त च सि अधगवण्हिणो । मा कुले गंधणा होमो सयमं निहुओ चर ॥ ४३ ॥

व्याख्या—अह च भोगराजस्योग्रसेनस्य त्वं चासि भवस्यन्धकवृष्णे 'कुले जात इत्युभयत्र योज्यम्' । अतो मा निषेधे, कुले गन्धनाना सर्पजातिविशेषाणां 'होमो' त्ति भूव तच्चेष्टितानुकारितयेति भावः । ते हि वान्तमपि विषं मन्त्राकृष्टा ज्वलदग्निपातभीरुतया पुनरप्यापिबन्ति न त्वगन्धना इति। तत. संयमं 'चारित्रं निभृतः स्थिरचित्तश्चरासेवस्व ॥ ४३ ॥

जइ तं काहिसि भावं जा जा दिच्छसि नारीओ । वायाइद्धु व्व हढो अट्ठिअप्पा भविस्ससि ॥ ४४ ॥

व्याख्या—यदि त्वं करिष्यसि भावं भोगाभिलापरूपं या या द्रक्ष्यसि नारीः 'तासु तास्विति गम्यते' ततो वाताविद्धो वायुना विद्धः समन्तात् ताडितो भ्रामित इत्यर्थः, इतस्ततो हढ इव वनस्पतिविशेषः सेवाल इवास्थितात्मा चञ्चलचित्ततयाऽस्थिरभावो भविष्यसि ॥ ४४ ॥

गोवालो भंडवालो वा जहा तद्दव्वनिस्सरो । एवं अणिस्सरो तं पि सामन्नस्स भविस्ससि ॥ ४५ ॥

व्याख्या—गोपालो यो गां पालयति, भाण्डपालो यः परकीयभाण्डानि भाटकादिना पालयति । यथा स तद्द्रव्यस्य गवादेरनीश्वरोऽप्रभुर्विशिष्टतत्फलोपभोगाभावादेवमनीश्वरस्त्वमपि श्रामण्यस्य भविष्यसि भोगाभिलाषतो विशिष्टतत्फलभोगाभावादिति भावः ॥ ४५ ॥

एवं तयोक्ते रथनेमिः किं कृतवान्? इत्याह—

तीसे सो वयणं सोच्चा संजयाए सुभासियं । अंकुसेण जहा नागो धम्मे संपडिवाइओ ॥ ४६ ॥

व्याख्या—तस्या राजीमत्याः साध्व्याः स रथनेमिर्वचनमनुशिष्टिरूपं श्रुत्वा संयतायाः प्रव्रजितायाः सुभाषितं सुष्ठु संवेगजनकत्वेनोक्तमङ्कुशेन यथा नागो हस्ती 'पथीति शेषः' । एवं धर्मे चारित्रधर्मे 'संपडिवाइओ' त्ति सम्प्रतिपतितः संस्थितः 'तद्वचसैवेति गम्यम्' । अत्रार्थे दृष्टान्तः—

स्वस्तिराजगृहं श्रीमत् स्वस्ति राजगृहं पुरम् । जितशत्रुमहाराजो जितशत्रुमहायशा. ॥ १ ॥
सोऽन्त'पुरपुरन्ध्रीभि क्रीडन् लीलाविलासवान् । बुभुजे तत्र साम्राज्यं चतुरङ्गचमूचण' ॥ २ ॥ ( युग्मम् )
निद्राविरहित कश्चित् स्वर्णकारं नृपोऽन्यदा । सर्वान्त.पुररक्षायै तद्द्वार्यस्थापयत् सदा ॥ ३ ॥
राजाङ्गनैकदा काचिन्निर्गताऽन्यरिरसया । जागरन्तं तमालोक्य चचले द्विस्तिरश्चसा ॥ ४ ॥
सोऽपि ता स्वैरिणी मत्वा सुप्तः कपटनिद्रया । सा तु तं तादृशं दृष्ट्वा रूढा वातायनं लघु ॥ ५ ॥
तत सङ्केतिकरिणा करेणाकृष्य साऽवनौ । मुक्ता मेण्ठेन कामान्धा रन्तुं लग्ना यथेच्छया ॥ ६ ॥
प्रातस्तेन तथैवेन गवाक्षेऽमोचि सा पुन । शुद्धान्तेऽगात् सुख तस्थौ नि.शङ्का हृष्टमानसा ॥ ७ ॥
भूपसद्मनि यद्येव रक्षपालेषु सत्स्वपि । पुंश्चलीत्व नृपस्त्रीणा का कथाऽपरवेश्मसु ? ॥ ॥ ८ ॥
ध्यात्वेति स्वर्णकृत् सुप्त सप्ताहं निश्चलोऽचल । राजोत्थाप्य ततोऽपृच्छत् त बहुस्वापकारणम् ॥ ९ ॥
राज्ञोऽग्रे सकलोदन्तं लात्वाऽभयमुवाच स । ततो मेण्ठेभ–पत्नीषु चुकोप समकं नृप ॥ १० ॥
वैभारभूधरं गत्वा भूपोऽथ बहुलोकयुक् । पत्नीमानाय्य ता पट्टहस्तिन चाह मेण्ठकम् ॥ ११ ॥
गजाजीव ! गजे राज्ञीमारोह्यानार्य ! ता जवात् । सद्य. सगज–देवीक. शैलशृङ्गादध पत ॥ १२ ॥
नभस्येकक्रमश्चक्रे तेन भूमौ निपाद् गज । निरागा मार्यते तिर्यग् हा ! कथं पूत्कृत जनै. ॥ १३ ॥

भूपेन पुनरादिष्टं तेऽद्यापि पतिता न किम् ? । ततो हस्तिपकः सद्योऽधारयद् द्विपदं द्विपम् ॥ १४ ॥
पौरमुख्यैः पुनः प्रोक्तं कृताञ्जलिभिरादरात् । राज्यशोभाकरं रक्ष राजकुञ्जर ! कुञ्जरम् ॥ १५ ॥
तूष्णीके रुषिते राज्ञ्याधोरणश्चरणत्रयम् । व्योम्नि भूस्थैकपादेनानेकपेनोदचिक्षिपत् ॥ १६ ॥
विज्ञप्तो मन्त्रि–सामन्तैरत्यर्थं पार्थिवः प्रभो ! । तृणादा नैव हन्यन्ते क्षत्रधर्मो ह्ययं खलु ॥ १७ ॥
तदाऽऽख्यद् नीतिविद् राजा भोः ! वदन्त्विभपालकम् । शैलाग्राद् वारणममुं यत् त्वमुत्तारयाशु भोः !॥१८॥
सोऽवग् भो धीसखा ! भूपश्चेद् ददात्यभयं मम । सराज्ञीकस्य तर्हीभं क्षेमेणातो निवर्तये ॥ १९ ॥
तैः तस्मिन् स्वीकृते मेण्ठो विज्ञानेन सुशिक्षितम् । अङ्कुशेन ततो नागं शुभंयुमुदतारयत् ॥ २० ॥
आलानस्तम्भगं कृत्वा हस्तिनं मेदिनीपतिः । राज्ञी–हस्तिपकौ क्रुद्धः स्वदेशान्निरसारयत् ॥ २१ ॥
तौ नवं जन्म मन्वानौ ततो यातौ ससम्मदौ । तद्देशात् तु वहिर्ग्रामे सुखं तस्थतुरुच्चकैः ॥ २२ ॥

यथा स ईदृगवस्थो गजोऽङ्कुशेन पथि संस्थित एवमयमप्युत्पन्नविस्रोतसिकस्तद्वचनेनाहितप्रवृत्तिनिवर्तकतयाऽङ्कुशप्रायेण धर्मे इत्यभिप्रायः ॥ ४६ ॥

ततश्च—

मणगुत्तो वयगुत्तो कायगुत्तो जिइंदिओ । सामन्नं निच्चलं फासे जावज्जीवं दढव्वओ ॥ ४७ ॥

व्याख्या–श्रामण्यं निश्चल स्थिर 'फासे' त्ति अस्प्राक्षीदासेवितवान् यावज्जीव दृढव्रत· सन्। शेपं स्पष्टम् ॥४७॥

द्वयोरपि यदभूत् तदाह—

उग्ग तव चरित्ताण जाया दोन्नि वि केवली। सव्वं कम्म खवित्ताण सिद्धि पत्ता अणुत्तरं ॥ ४८ ॥

व्याख्या—उग्र कर्मरिपुदारुणतया तपोऽनशनादि चरित्वा जातौ द्वावपि रथनेमि–राजीमत्यौ केवलिनौ सर्वं कर्म क्षपयित्वा सिद्धिं प्रासावनुत्तरामुत्कृष्टाम्। किञ्च रथनेमि प्रत्येकबुद्धो भूत्वा वर्पशतचतुष्टय गृहस्थत्वेन, वर्पमेकं छद्मस्थत्वेन, वर्पशतपञ्चक च केवलिपर्यायत्वेनैव नववर्पशतान्येकवर्पाधिकानि सर्वायु· प्रतिपाल्य सिद्ध इति ॥ ४८ ॥

अध्ययनोपसहारमाह—

एव करेंति सबुद्धा पडिया पवियक्खणा। विणियट्टति भोगेसु जहा सो पुरिसुत्तमो ॥४९॥ त्ति बेमि ॥

व्याख्या—एवं कुर्वन्ति सम्बुद्धा बोधिलाभत, पण्डितास्तत्त्वानुगामिबुद्धिमन्त·, प्रविचक्षणा· प्रकर्पेण शास्त्रज्ञा, विशेपेण कथञ्चिद् विस्रोतसिकोत्पत्तावपि तन्निरोधलक्षणेन निवर्तन्ते विनिवर्तन्ते भोगेभ्यो यथा स पुरुपोत्तमो रथनेमिरिति। इति ब्रवीमीति पूर्ववत् ॥ ४९ ॥ ग्र० २५१–२ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकाया रथनेमीयाख्यं द्वाविंशतिममध्ययनं समासम् ॥ २२ ॥

## अथ त्रयोविंशतितमं केशि–गौतमीयमध्ययनम् ।

इहानन्तराध्ययने कथञ्चिदुत्पन्नविस्रोतसिकेन रथनेमिवद् वृत्तिश्चरणे कार्येत्युक्तम्; इह तु परेषामपि चित्तविप्लुतिमुपलभ्य केशि–गौतमवत् तदपनोदाय यतितव्यमित्युच्यते । तद् यथा—

जिणे पासे त्ति नामेणं अरहा लोगपूइए । संबुद्धप्पा य सवन्नू धम्मतित्थयरे जिणे ॥ १ ॥

व्याख्या–जिनः परीषहोपसर्गजेता पार्श्व इति नाम्ना 'अभूदिति शेषः' अर्हंस्तीर्थकृदत एव लोकपूजितः । सम्बुद्धस्तत्त्वावबोधवानात्माऽस्येति सम्बुद्धात्मा 'चः समुच्चये' स च छाद्मस्थ्येऽपि स्यादित्याह–सर्वज्ञः सर्वद्रव्यपर्यायवेत्ता । धर्म एव भवाम्भोधितारकत्वात् तीर्थं तत्करः । जिनो जितसकलकर्मा मुक्त्यवस्थाऽपेक्षया ॥ १ ॥

ततः किम्? इत्याह—

तस्स लोगप्पईवस्स आसि सीसे महायसे । केसीकुमारसमणे विज्जा–चरणपारगे ॥ २ ॥

व्याख्या–तस्य पार्श्वस्यार्हतो लोके प्रदीपस्येव समस्तवस्तुप्रकाशकतया लोकप्रदीपस्य आसीच्छिष्यो महायशाः केशी कुमारोऽपरिणीततया, श्रमणस्तपस्वितया, विद्या–चरणयोर्ज्ञान–चारित्रयोः पारगः पर्यन्तगामी ॥ २ ॥

ओहिनाणसुए बुद्धे सीससंघसमाउले । गामाणुगामं रीयंते सावत्थिं नगरिमागए ॥ ३ ॥

व्याख्या–'सुव्यत्ययाद्' अवधिज्ञान–श्रुताभ्या 'मइपुव्व जेण सुय' इत्यागमाच्छ्रुतस्य मतिपूर्वकतया मत्या च बुद्धोऽवगततत्त्व । शिष्याणां सङ्घेन समूहेन समाकुल आकीर्ण· परिवृत इत्यर्थः । ग्रामानुग्राम 'रीयते' त्ति रीयमाणो विहरन् श्रावस्तीं नगरीमागत· 'स इति शेप' ॥ ३ ॥

तिंदुय नाम उज्जाण तम्मि नगरमंडले । फासुए सिज्जसंथारे तत्थ वासमुवागए ॥ ४ ॥

व्याख्या–ति·दुकं नामोद्यानं 'तम्मि' त्ति तस्या श्रावस्त्या नगरमण्डले पुरपरिसरे । प्रासुके स्वाभाविकागन्तुकसत्त्वरहिते क ? इत्याह–शय्या वसतिस्तस्यां संस्तारक· शिला–फलकादि· शय्यासंस्तारकस्तस्मिन् तत्रेत्युद्याने वासमवस्थानमुपागत प्राप्त 'स इति गम्यम्' ॥ ४ ॥

अत्रान्तरे यदभूत् तदाह—

अह तेणेव कालेण धम्मतित्थयरे जिणे । भयव वद्धमाणुत्ति सव्वलोगंमि विस्सुए ॥ ५ ॥

व्याख्या–'अथेति वक्तव्यान्तरोपन्यासे' 'तेणेव कालेणं' ति तस्मिन्नेन काले 'सूत्रत्वात् सप्तम्यर्थे तृतीया' वर्धमान इति भगवास्तीर्थंकरो धर्मतीर्थंकरत्वादिविशेपणवान् 'अभूदिति शेप.' । सर्वलोके विश्रुतो विख्यात· ॥ ५ ॥

---

१ मतिपूर्वं येन श्रुतम् ।

तस्स लोगप्पईवस्स आसि सीसे महायसे। भयवं गोयमे नामं विज्जा-चरणपारगे ॥ ६ ॥

व्याख्या-तस्य भगवतो महावीरस्य लोकप्रदीपस्यासीत् शिष्यो महायशा भगवान् चतुर्ज्ञानयुक्तो गौतमो नामेति गोत्रनामतोऽन्यथा हीन्द्रभूत्यभिधानोऽसौ। शेषं व्याख्यातमेव ॥ ६ ॥

बारसंगविऊ बुद्धे सीससंघसमाउले। गामाणुगामं रीयंते से वि सावत्थिमागए ॥ ७ ॥

व्याख्या-किं विशिष्टः? आचाराङ्गादिद्वादशाङ्गवित्, बुद्धो ज्ञाततत्त्वः, शिष्याणां सङ्घः शिष्यसङ्घः तेन समाकुलः संयुक्तः, पुनः एकस्माद् ग्रामादन्यो ग्रामो ग्रामान्तरं 'रीयंते' त्ति विचरन् 'से वि' त्ति सोऽपि गौतमोऽपि 'सावत्थि' त्ति श्रावस्तिं नगरीमागतः ॥ ७ ॥

कोट्ठगं नाम उज्जाणं तम्मि नगरमंडले। फासुए सिज्जसंथारे तत्थ वासमुवागए ॥ ८ ॥

व्याख्या-कोष्ठकं नामोद्यानं 'तम्मि' त्ति इहापि तस्याः श्रावस्त्या नगर्या नगरमण्डले नगरैकभागे ईशानकूणे। तत्र प्रासुके शय्यासंस्तारके तत्र 'वासं' ति वासार्थमुपागतः समागतः ॥ ८ ॥

ततः किमजनि? इत्याह—

केसीकुमारसमणे गोयमे य महायसे। उभओ वि तत्थ विहरंसु अल्लीणा समाहिया ॥ ९ ॥

व्याख्या–केशिकुमारश्रमणो गौतमश्च महायशा 'उभओ वि' त्ति उभावपि द्वावपि केशि–गौतमौ तत्र श्रावस्त्यां नगर्यां 'विहरंसु' त्ति 'वचनव्यत्ययाद्' व्यहार्ष्टां विहृतवन्तौ 'अल्लीणा' त्ति आलीनौ त्रिगुप्तिगुप्तौ यद्वा अलीनौ पृथगवस्थानेनान्योन्यमश्लिष्टावमिलितौ पुनः सुसमाहितौ ज्ञानादिसमाधिं गतौ ॥ ९ ॥

उभओ सीससघाण संजयाण तवस्सिण । तत्थ चिंता समुप्पन्ना गुणवंताण ताइण ॥ १० ॥

व्याख्या–उभयोर्द्वयो केशि–गौतमयो शिष्यसङ्घानां शिष्यसमूहाना संयताना संयमिनां तपस्विनां तपोधनयुक्तानां तत्र श्रावस्त्या नगर्यां चिन्ता वक्ष्यमाणविकल्पात्मिका समुत्पन्ना । गुणा ज्ञानादयस्तद्वता त्रायिणा रक्षकानाम् ॥१०॥

चिन्तामेवाह—

केरिसो वा इमो धम्मो इमो धम्मो व केरिसो? । आयारधम्मपणिही इमा वा सा व केरिसी? ॥ ११ ॥

व्याख्या–कीदृश किंस्वरूप ? 'वा विकल्पे' 'इमो' त्ति अयमस्मत्सम्बन्धी धर्मो महाव्रतात्मकोऽयं वा दृश्यमानगणभृच्छिष्यसम्बन्धी धर्म कीदृश ? । आचारो वेषधारणादिको बाह्यक्रियाकलाप· स एव सुगतिधारणाद् धर्मो बाह्यक्रियातोऽपि हि नवमग्रैवेयकोत्पत्ते तस्य प्रणिधिर्व्यवस्थापनमाचारप्रणिधि 'इमा व' त्ति प्राकृतत्वादय चाऽस्मत्सम्बन्धी 'सा व' त्ति स वा द्वितीययतिसत्क· कीदृश ? । ततोऽस्माकममीषां च सर्वज्ञोक्तत्वेऽपि धर्मस्य तत्साधनाना च भेदं ज्ञातुमिच्छाम इति भाव ॥ ११ ॥

तामेव चिन्तां व्यक्तीकर्तुमाह—

**चाउज्जामो य जो धम्मो जो इमो पंचसिक्खिओ । देसिओ वद्धमाणेण पासेण य महामुणी ॥ १२ ॥**

व्याख्या—चातुर्यामो महाव्रतचतुष्टयात्मको यो देशितः कथितः पार्श्वेन पार्श्वनाथेनार्हतेति सम्बन्धः । 'जो इमो' त्ति 'प्राक्चकारस्यात्र योजनाद्' यश्चायं पञ्च शिक्षाः प्राणातिपात—मृषावादादत्तादान—मैथुन—परिग्रहादिविरत्युपदेशरूपा यस्मिन्नसौ पञ्चशिक्षितो वर्धमानेन महावीरेण देशितः कथित इति योगः । 'विभक्तिव्यत्ययाद्' महामुनिनेति द्वयोरपि विशेषणम् ॥ १२ ॥

तथा—

**अचेलगो य जो धम्मो जो इमो संतरुत्तरो । एगकज्जपवन्नाणं विसेसे किं नु कारणं ? ॥ १३ ॥**

व्याख्या—अचेलकश्चाविद्यमानचेलकोऽवस्त्रकः 'परिजुन्नमप्पमुल्लं'[1] इत्यागमात् नञः कुत्सार्थत्वाच्च कुत्सितचेलको वा यो धर्मः 'वर्धमानेन देशित इत्यपेक्ष्यते'। 'जो इमो' त्ति यश्चायं सान्तराणि वर्धमानशिष्यवस्त्रापेक्षया कस्यचित् कदाचिन्मान—वर्णविशेषितानि, उत्तराणि च बहुमूल्यतया प्रधानानि वस्त्राणि यस्मिन्नसौ सान्तरोत्तरो धर्मः 'पार्श्वेन

१ परिजीर्णमल्पमूल्यम् ।

देशित इतीहापि योज्यम्' एकं कार्यं मुक्तिलक्षण तदर्थं प्रवृत्तयो प्रक्रमात् पार्श्व-वर्धमानयोर्धर्माचारप्रणिधि-विपये विशेपे किं 'नुर्वितर्के' कारणम् ?। कारणभेदेन हि कार्यभेद इति भावः ॥ १३ ॥

अह ते तत्थ सीसाण विन्नाय पवितक्किय। समागमे कयमई उभओ केसि-गोयमा ॥ १४ ॥

व्याख्या-अथानन्तर 'ते' इति तौ प्रक्रान्तौ केशि-गौतमो तत्र श्रावस्त्यां शिष्याणा प्रकर्पेण वितर्कित मिथ सशयेन विकल्पितं विज्ञाय समागमे मीलके कृतमती कृताभिप्रायावभूतामुभौ ॥ १४ ॥

गोयमे पडिरूवन्नू सीससंघसमाउले । जेट्ठं कुलमविक्खतो तिंदुयं वणमागओ ॥ १५ ॥

व्याख्या-गौतम 'पडिरूवन्नू' त्ति प्रतिरूपविनयो यथोचितप्रतिपत्तिरूपस्तं जानातीति प्रतिरूपज्ञ• शिष्यसङ्घसमाकुल शिष्यसमूहयुक् । ज्येष्ठं प्राग्भावितया पूर्वं भूत वृद्ध कुलं पार्श्वसन्तानमपेक्षमाणो विगणयन् तिन्दुकं तिन्दुकनामान वनमुद्यानं केशिकुमाराधिष्ठितमागतः ॥ १५ ॥

केसीकुमारसमणे गोयमं दिस्समागयं । पडिरूव पडिवत्ति सम्म सपडिवज्जई ॥ १६ ॥

व्याख्या-केशिकुमारश्रमण• श्रीपार्श्वनाथसंतानीयो गौतममिन्द्रभूति 'दिस्स' त्ति दृष्ट्वाऽऽगत प्रतिरूपामुचितां प्रतिपत्तिमभ्यागतकर्तव्यरूपां सम्यक् समिति साम्मुख्येन प्रतिपद्यतेऽङ्गीकरोति ॥ १६ ॥

प्रतिपत्तिमेवाह—

पलालं फासुयं तत्थ पंचमं कुस–तणाणि य। गोयमस्स निसिज्जाए खिप्पं संपणामए ॥ १७ ॥

व्याख्या–पलालं व्रीहिसत्कं प्रासुकं निर्जीवं तत्र तिन्दुकोद्याने 'पंचमं' ति वचनव्यत्ययात् पञ्चमानि पञ्चसङ्ख्यापूरणानि कुश–तृणानि चशब्दादन्यान्यपि साधुयोग्यानि तृणानि। पञ्चमत्वं चैषां पलालभेदापेक्षम्। ते चामी–'सीली वीही कोद्दव रालग रन्ने तणाइं च'[1] गौतमस्य निषिद्यायै उपवेशनार्थं 'संपणामए' त्ति सम्प्रणामयति समर्पयति ॥ १७ ॥

तौ तत्र कीदृशौ जातावित्याह—

केसीकुमारसमणो गोयमे य महायसे। उभओ निसन्ना सोहंति चंद–सूरसमप्पहा ॥ १८ ॥

व्याख्या–केशीकुमारश्रमणो गौतमश्चेत्युभावपि 'सोहंति' त्ति शोभेते चन्द्र–सूर्यसमा प्रभा ययोस्तौ तथा चन्द्र–सूर्योपमावित्यर्थः ॥ १८ ॥

ततसङ्गमे यदभूत् तदाह—

समागया वहु तत्थ पासंडा कोउगा मिया। गिहत्थाण अणेगाओ साहस्सीओ समागया ॥ १९ ॥

१ शालिर्व्रीहिः कोद्रवो रालकोऽरण्यतृणानि च।

व्याख्या–सं सम्यक्प्रकारेणागता' समागता मिलिताः पाखण्डा' शेषव्रतिन' कौतुकाश्रिता मृगा इव मृगा अज्ञत्वात्। गृहस्थानामनेकानि सहस्राणि सहस्रसङ्ख्याकानि समागताः ॥ १९ ॥

पुन.—

देव–दाणव–गधव्वा जक्ख–रक्खस–किन्नरा। अदिस्साण य भूयाण आसि तत्थ समागमो ॥ २० ॥

व्याख्या–देवाद्या. 'समागता इति योज्यम्'। तत्र देवा ज्योतिष्कवैमानिकाः, दानवा भवनपतयः, गन्धर्वादयस्तु व्यन्तरविशेषा देवगायना वा, यक्षा गुह्यका', राक्षसा नृमांसाशिनः, किन्नरा एतेऽपि देवविशेषाः। अमेऽदृश्यविशेषणादेते दृश्यरूपाः। अदृश्यानां च भूतानां केलीकिलव्यन्तरविशेषाणामासीत् समागमस्तत्र ॥ २० ॥

अथ तयोर्जल्पमाह—

पुच्छामि ते महाभाग! केसी गोयममब्बवी। तओ केसिं बुवंतं तु गोयमो इणमब्बवी ॥ २१ ॥

व्याख्या—पृच्छामि ते इति त्वां हे-महाभागाचिन्त्यशक्ते! इति केशिः केशिकुमारो गौतमं महावीरप्रथमगणधरमब्रवीत्। ततस्तदनन्तरं केशिं ब्रुवन्तं ब्रूयाणं तु पुनर्गौतमोऽब्रवीत् ॥ २१ ॥

पुच्छ भंते! जहिच्छ ते केसिं गोयममब्बवी। तओ केसी अणुन्नाओ गोयम इणमब्बवी ॥ २२ ॥

व्याख्या—पृच्छ हे भदन्त ! हे पूज्य ! 'जहिच्छं'ति यथेच्छमिच्छाया अनतिक्रमेण यदवभासते इत्यर्थः । केशिं केशिकुमारं 'गोयमं'ति सुव्यत्ययाद् गौतमोऽब्रवीत् । ततः केशिरनुज्ञातः 'प्रक्रमाद् गौतमेन' गौतममिदमब्रवीत् ॥२२॥

यदसौ पृष्टवांस्तदाह—

चाउज्जामो य जो धम्मो जो इमो पंचसिक्खिओ । देसिओ वद्धमाणेणं पासेण य महामुणी ॥२३॥
एगकज्जपवन्नाणं विसेसे किं नु कारणं ? । धम्मे दुविहे मेहावी कहं विप्पच्चओ न ते ? ॥ २४ ॥

अनयोर्व्याख्या—चातुर्यामो हिंसाऽनृतस्तेयपरिग्रहोपरमात्मकव्रतचतुष्टयरूपः । पञ्चशिक्षितः स एव मैथुनविरतिरूपपञ्चमव्रतसहितः ॥ इत्थं च धर्मे साधुधर्मे द्विविधे द्विप्रकारे हे मेधाविन्नवधारणशक्त्यन्वित ! कथं विप्रत्ययोऽनाश्वासो न ते तव ? । तुल्ये हि सर्वज्ञत्वे किं कृतोऽसौ मतभेद इत्याशयः । शेषं प्रकटार्थमेवेति गाथाद्वयार्थः ॥ २३–२४ ॥

एवं केशिनोक्ते—

तओ केसिं बुवंतं तु गोयमो इणमब्बवी । पन्ना समिक्खए धम्मंतत्तं तत्तविणिच्छयं ॥ २५ ॥

व्याख्या—ततः 'तुरवधारणे' केशिं ब्रुवन्तमेव जल्पादनुपरतमेवानेनादरातिशयमाह । गौतम इदमब्रवीत् । किम-

ब्रवीद्? इत्याह-प्रज्ञा बुद्धि' समीक्षते सम्यक् पश्यति धर्मतत्त्वं 'विन्दुरलाक्षणिक'' धर्मपरमार्थं तत्त्वानां जीवादीनां विनिश्चयो यस्मिंस्तत् तथा। न हि वाक्यश्रवणमात्रादेव वाक्यार्थनिर्णय, किन्तु प्रज्ञावशादिति भाव ॥ २५ ॥

ततश्च—

पुरिमा उज्जुजडा उ वक्कजडा य पच्छिमा। मज्झिमा उज्जुपन्ना उ तेण धम्मे दुहा कए ॥ २६ ॥

व्याख्या—पूर्वे प्रथमतीर्थकृत्साधव' 'उज्जुजड'त्ति ऋजव सरलतया, जडाश्च दुष्प्रतिबोध्यतया ऋजुजडास्तुर्यस्मात् 'वक्कजडा य'त्ति वक्राश्च वक्रबोधतया, जडाश्चानेककुविकल्पतो विवक्षितार्थावबोधाक्षमतया वक्रजडा. 'च. समुच्चये' पश्चिमा' पश्चिमतीर्थकृद्यतय, मध्यमा मध्यमतीर्थकृन्मुनय ऋजुप्रज्ञा ऋजवश्च ते प्रकर्षेण जानन्तीति प्रज्ञाश्च सुखेनैव विवक्षितार्थग्रहणक्षमा ऋजुप्रज्ञास्तेन हेतुना धर्मो द्विभेद' कृत 'एककार्यप्रपन्नत्वेऽपीति प्रक्रमः' ॥ २६ ॥

पूर्वादीनामेवंविधत्वेऽपि कुतस्तद् वैविध्यमित्याह—

पुरिमाणं दुव्विसोज्झो उ चरिमाण दुरणुपालओ। कप्पो मज्झिमगाणं तु सुविसोज्झो सुपालओ ॥२७॥

व्याख्या—पूर्वेषां यतीना दुर्विशोध्यो दु'खेन विशोधयितुं निर्मलतां नेतुं शक्य 'कल्प इति सम्बध्यते' ते ह्यतिऋजुतया जडतया च सम्यगपि गुर्वनुशासनं यथावन्न प्रतिपत्तुं क्षमा इति निर्मलावबोधाभावात् तेषामसौ दुर्विशोध्यः। 'तुर्विशेषार्थे' चरमाणा तु खेनानुपाल्यते इति दुरनुपालको वक्रजडत्वात् कल्पो यतिक्रियाकल्प', ते हि वक्रत्वेन

कुविकल्पाकुलितचित्ततया कथञ्चिज्जानाना अपि न यथावदनुष्ठातुं शक्ताः । मध्यमकानां तु सुविशोध्यः सुपालकश्च ऋजुप्रज्ञत्वात् 'कल्प इहापि योज्यः' ते हि ऋजुप्रज्ञतया चतुर्यामोक्तावपि पञ्चममपि यामं गुरूक्तं सुखेनैव यथावदवबुध्यन्ते पालयन्ति चातस्तदपेक्षया पार्श्वेन चतुर्याम उक्तः । प्रथमान्त्यार्हद्भ्यां तत्तद्धेतोः पञ्चमं व्रतं भिन्नतयोक्तमिति धर्मस्य द्वैविध्यं देशितम् । वस्तुतो व्रतपञ्चकमेव सर्वतीर्थकृताम्, भेदाभिधानं तु बोध्यापेक्षयेति प्रसज्ञतश्चाद्यजिनाभिधानमिति ॥ २७ ॥

केशिराह—

साहु गोयम ! पन्ना ते छिन्नो मे संसओ इमो । अन्नो वि संसओ मज्झं तं मे कहसु गोयमा !॥२८॥

व्याख्या—साधु शोभना गौतम ! प्रज्ञा बुद्धिस्ते तव यतश्छिन्नो मे मम संशयः सन्देहः 'इमो' त्ति अयं 'त्वयेति गम्यम्' विनयापेक्षं चेत्थमुक्तमन्यथा तस्य ज्ञानत्रयवतः कुत एवंविधसंशयसम्भव इति । तथाऽन्योऽपि वक्ष्यमाणः संशयो मम तं मे कथय गौतम ! तद्विषयमप्यर्थं यथावत् प्रतिपादयेति भावः ॥ २८ ॥

अचेलगो य जो धम्मो जो इमो संतरुत्तरो । देसिओ वद्धमाणेणं पासेण य महायसा ॥ २९ ॥

व्याख्या—'महायस'त्ति महायशसा शेषं व्याख्यातमेव ॥ २९ ॥

एगकज्जपवन्नाणं विसेसे किं नु कारणं ?। लिंगे दुविहे मेहावी कहं विप्पच्चओ न ते ? ॥ ३० ॥

व्याख्या—लिङ्गे वर्षाकल्पादिरूपे वेषे द्विविधे अचेलकतया वस्त्रधारकतया च द्विभेदे इति शेषं स्पष्टम् ॥ ३० ॥

गौतम. प्राह—

केसि एव बुवाण तु गोयमो इणमब्बवी। विन्नाणेण समागम्म धम्मसाहणमिच्छिय ॥ ३१ ॥

व्याख्या—विशिष्टं ज्ञानं विज्ञानं केवलाख्य तेन समागम्य यद् यस्योचितं तत् तथैव ज्ञात्वा धर्मसाधन धर्मोपकरणं वर्षाकल्पादिकं 'इच्छिय'ति दृष्टमनुमतं 'पार्श्व–वीराभ्यामिति प्रक्रम'। श्रीवीरशिष्याणां हि रक्तादिवस्त्रानुज्ञाते वक्रजडत्वेन वस्त्ररञ्जनादिप्रवृत्तिर्दुर्निवारा स्यादतस्तेन नानुज्ञातम्, पार्श्वशिष्यास्तु न तथेति तेन रक्तादीनामप्यनुज्ञात कृतमिति भाव॰ ॥ ३१ ॥

किञ्च—

पच्चयत्थ च लोयस्स नाणाविहविगप्पण। जत्तत्थं गहणत्थ च लोगे लिगपओयणं ॥ ३२ ॥

व्याख्या—प्रत्ययार्थं चामी व्रतिन इति प्रतीतिनिमित्तं लोकस्य, अन्यथा हि यथाऽभिरुचितं वेषमादाय पूजाऽऽद्यर्थं विडम्नकादयोऽपि वयं व्रतिन इत्यभिहितवन्त., ततो व्रतिष्वपि न लोकस्य व्रतिन इति प्रतीतिः स्यात्। किं तद् ? इत्याह–नानाविधविकल्पनं 'प्रक्रमान्नानाविधोपकरणपरिकल्पनं' नानाविधवर्षाकल्पाद्युपकरणं हि यथावद् यतिष्वेव

सम्भवतीति कथं तत्प्रत्ययहेतुर्न स्यात् ? । तथा यात्रा संयमनिर्वाहस्तदर्थं, वर्षाकल्पादिकं विना हि वृष्ट्यादौ संयमे बाधैव स्यात् । ग्रहणं ज्ञानं तदर्थं च, कथञ्चिच्चित्तविप्लवोत्पत्तावपि यथाऽहं व्रतीत्येतदर्थं लोके लिङ्गस्य वेषधारणस्य प्रयोजनमिति प्रवर्तनं लिङ्गप्रयोजनम् ॥ ३२ ॥

अह भवे पइन्ना उ मुक्खसब्भूयसाहणा । नाणं च दंसणं चेव चरित्तं चेव निच्छए ॥ ३३ ॥

व्याख्या—अथ 'भवे पइन्ना उ'त्ति 'तुरेवकारार्थे भिन्नक्रमश्च' ततो भवेदेव प्रतिज्ञाऽभ्युपगमः 'प्रक्रमात् पार्श्व—वीरयोः' सा का ? इत्याह—मोक्षस्य सद्भूतानि तात्त्विकत्वात् साधनानि हेतुत्वान्मोक्षसद्भूतसाधनानि। कानि ? इत्याह-ज्ञानं च दर्शनं च चारित्रं च 'एवकारोऽवधारणे' स च लिङ्गस्य मुक्तिसाधनतां व्यवच्छिनत्ति यतो ज्ञानाद्येव मुक्तिसाधनं, न तु लिङ्गं; श्रूयते हि भरतादीनां लिङ्गं विनाऽपि केवलोत्पत्तिः, निश्चये निश्चयनये विचार्ये। एष च लिङ्गं प्रत्याद्रियत एव न, व्यवहार एव तूक्तहेतुभिस्तदिच्छतीति तद्भेदस्य तत्त्वतोऽकिञ्चित्करत्वान्न विदुषां विप्रत्ययहेतुतेत्याशयः ॥३३॥

केशिराह—

साहु गोयम ! पन्ना ते छिन्नो मे संसओ इमो। अन्नो वि संसओ मज्झं तं मे कहसु गोयमा ! ॥ ३४ ॥

प्राग्वत् ॥ ३४ ॥

अणेगाण सहस्साण मज्झे चिट्ठसि गोयमा ! । ते य ते अभिगच्छंति कहं ते निज्जिया तुमे ? ॥३५॥

व्याख्या–अनेकानां सहस्राणां 'प्रक्रमाच्छत्रुसम्बन्धिनां' मध्ये तिष्ठस्यास्से हे गौतम ! 'ते य'त्ति ते च शत्रवस्ते इति त्वामभिलक्षीकृत्य गच्छन्ति धावन्त्यर्थाज्जेतुमिच्छन्ति । तत् कथ ते इत्युक्तरूपा· शत्रवो निर्जितास्त्वया भूयस्त्वात् तेषामिति भाव· ॥ ३५ ॥

गौतम आह—

एगे जिए जिया पंच पच जिए जिया दस । दसहा उ जिणित्ता णं सव्वसत्तू जिणाम हं ॥ ३६ ॥

व्याख्या—एकस्मिन् सर्वभावशत्रुप्रधाने आत्मनि जिते जिता· पञ्च, कथम्? एक· स एवान्ये चत्वार कषायाः । 'पंच जिए'त्ति सूत्रत्वात् पञ्चसु जितेषु जिता दश, अत्रापि पञ्चोक्ता एवापराणि च पञ्चेन्द्रियाणि ततो दशधा दशप्रकारानुक्तरूपास्तु पुन शत्रून् जित्वा 'णमित्यलङ्कारे' सर्वशत्रून् नोकषायादीस्तदुत्तरोत्तरभेदांश्चानेकसहस्रसङ्ख्यान् जयाम्यहम् ॥ ३६ ॥

ततश्च—

सत्तू य इइ के वुत्ते केसी गोयममब्ववी । तओ केसि बुवंतं तु गोयमो इणमब्ववी ॥ ३७ ॥

व्याख्या—शत्रुश्च क उक्त ? इति केशिगौतममब्रवीत् । शेष स्पष्टम् ॥ ३७ ॥

एगप्पा अजिए सत्तू कसाया इंदियाणि य । ते जिणित्तु जहानाय विहरामि अहं मुणी ॥ ३८ ॥

व्याख्या—एक आत्मेति जीवश्चित्तं वा, अतति गच्छति तांस्तान् भावानर्थांश्चेति व्युत्पत्तेः । अथवा आत्मैव चित्तं तदभेदोपचारात् । अजितोऽवशीकृतोऽनेकानर्थहेतुत्वाच्छत्रुरिव शत्रुस्तत एव हेतोः कषाया इन्द्रियाणि 'चशब्दान्नोकषायादयः कषायाद्युत्तरभेदाश्च' 'अजिताः शत्रव इति योज्यम्' । तान् शत्रून् जित्वा यथान्यायं यथोक्तनीत्या विहरामि 'तन्मध्येऽपि तिष्ठन्, अप्रतिवद्धविहारितयेति गम्यम्' अहं हे मुने ! ॥ ३८ ॥

पुनः केशिराह—

साहु गोयम ! पन्ना ते छिन्नो मे संसओ इमो । अन्नो वि संसओ मज्झं तं मे कहसु गोयमा ! ॥ ३९ ॥

प्राग्वत् ॥ ३९ ॥

तथा—

दीसंति बहवे लोए पासबद्धा सरीरिणो । मुक्कपासो लहुब्भूओ कहं तं विहरसी मुणी ? ॥ ४० ॥

व्याख्या—दृश्यन्ते बहवोऽनेके लोके जगति पाशैर्बद्धा नियन्त्रिताः पाशबद्धाः शरीरिणो जीवाः । मुक्तपाशो लघुभूतो वायुस्ततश्च लघुभूत इव लघुभूतः सर्वत्राप्रतिबद्धत्वात् कथं त्वं विहरसि हे मुने ! ॥ ४० ॥

गौतम आह—

ते पासे सव्वसो छित्ता निहंतूण उवायओ । मुक्कपासो लहुब्भूओ विहरामि अहं मुणी ॥ ४१ ॥

व्याख्या—तान् पाशान् लोकबन्धकान् 'सव्वसो' त्ति सूत्रत्वात् सर्वान् छित्त्वा त्रोटयित्वा निहत्य पुनर्बन्धाभावेन विनाश्योपायत सद्भूतभावनाऽभ्यासात्। मुक्तपाशो लघुभूत सन् विचराम्यहं हे मुने! ॥ ४१ ॥

तत —

पासा य इइ के वुत्ता? केसी गोयममब्बवी। केसि एव बुवतं तु गोयमो इणमब्बवी ॥ ४२ ॥

पाशाश्च 'के वुत्ता' त्ति उक्ता.?। शेष प्राग्वत् ॥ ४२ ॥

राग-द्दोसादओ तिव्वा नेह पासा भयंकरा। ते छिंदित्तु जहानाय विहरामि जहक्कम ॥ ४३ ॥

व्याख्या—राग-द्वेषादय 'आदिशब्दान्मोहादिग्रह.' तीव्रा गाढास्तथा स्नेहा पुत्रादिसम्बन्धास्ते पाशा इव पारवश्यहेतुत्वात् पाशा भयङ्करास्त्रासोत्पादका अनर्थहेतुतया। तान् छित्त्वा यथान्याय विहरामि विचरामि यथाक्रमं क्रमो यत्याचारस्तदनतिक्रमेण ॥ ४३ ॥

केशि प्राह—

साहु गोयम! पन्ना ते छिन्नो मे ससओ इमो। अन्नो वि संसओ मज्झ तं मे कहसु गोयमा! ॥ ४४ ॥

पूर्ववत् ॥ ४४ ॥

अंतोहिययसंभूया लया चिट्ठइ गोयमा। फलेइ विसभक्खीणि सा उ उद्धरिया कहं ? ॥ ४५ ॥

व्याख्या—हृदयस्यान्तरन्तर्हृदयं मनस्तत्र सम्भूता लता तिष्ठति भो गौतम ! फलति विषवद् भक्ष्यन्त इति विषभक्षीणि पर्यन्तदारुणतया विषोपमानि 'फलानीति गम्यम्' सा पुनरुद्धृतोत्पाटिता कथं ? 'त्वयेति योज्यम्' ॥४५॥

गौतम आह—

तं लयं सव्वसो छित्ता उद्धरित्ता समूलियं। विहरामि जहानायं मुक्को मि विसभक्खणं ॥ ४६ ॥

व्याख्या—तां लतां 'सव्वसो'त्ति सर्वां छित्त्वोद्धृत्योत्पाट्य समूलामेव समूलिकां मूलसहितां राग-द्वेषलक्षणमूलनिर्मूलनेन विहरामि यथान्यायं मुक्तोऽस्मि 'विसभक्खणं'ति सुब्व्यत्ययाद् विषभक्षणाद् विषफलास्वादोपमात् क्लिष्टकर्मणः ॥४६॥

लया य इइ का वुत्ता? केसी गोयममब्बवी। तओ केसिं बुवंतं तु गोयमो इणमब्बवी ॥ ४७ ॥

लतेति का उक्ता ? इत्यादि सुगमम् ॥ ४७ ॥

भवतण्हा लया वुत्ता भीमा भीमफलोदया। तमुच्छित्तु जहानायं विहरामि महामुणी ॥ ४८ ॥

व्याख्या—भवः संसारस्तस्मिंस्तृष्णा लोभात्मिका लतोक्ता भीमा भयदा स्वरूपतः, कार्यतश्च भीमो दुःखहेतुतया फलानामर्थात् क्लिष्टकर्मणामुदयः परिपाको यस्याः सा तथा। तामुद्धृत्योत्पाट्य यथाज्ञातं तथा विहरामि महामुने ! ॥ ४८ ॥

पुन॰ केशिराह—

साहु गोयम ! पन्ना ते छिन्नो मे संसओ इमो । अन्नो वि ससओ मज्झ त मे कहसु गोयमा! ॥४९॥

गतार्था ॥ ४९ ॥

सपज्जलिया घोरा अग्गी चिट्ठइ गोयमा । जे डहंति सरीरत्था कहं विज्झाविया तुमे ? ॥ ५० ॥

व्याख्या—समन्तात् प्रकर्षेण ज्वलिता॰ सम्प्रज्वलिता अत एव घोरा रौद्रा॰ 'अग्गी चिट्ठइ' त्ति वचनव्यत्ययादग्नयस्तिष्ठन्ति हे गौतम ! ये दहन्तीव दहन्ति परितापकारितया शरीरस्था देहस्था न बहिर्वर्तिन॰। देहात्मनोरभेदोपचारादात्मस्था इत्यर्थ । ते कथं विध्यापिता निर्वापितास्त्वया ? ॥ ५० ॥

गौतम॰ प्राह—

महामेहप्पसूयाओ गिज्झ वारि जलुत्तमं । सिंचामि सयय ते उ सित्ता नो व डहंति मे ॥ ५१ ॥

व्याख्या—महामेघात् प्रसूतमुत्पन्नं महामेघप्रसूतं तस्मान्महास्रोतस इति गम्यम् । 'गिज्झ' त्ति गृहीत्वा वारि पानीयं जलोत्तमं शेषजलेषु प्रधानं तेन सिञ्चामि विध्यापयामि सततमनवरतं 'ते उ' त्ति तानग्नीन् ततः सिक्तास्तु 'नो व' त्ति नैव दहन्ति 'मे' त्ति माम् ॥ ५१ ॥

अग्गी य इइ के वुत्ते केसी गोयममब्बवी । तओ केसिं बुवंतं तु गोयमो इणमब्बवी ॥ ५२ ॥

व्याख्या—सुगमा, नवरमग्निप्रश्ने महामेघादिप्रश्नोपलक्षणम् ॥ ५२ ॥

गौतम आह—

कसाया अग्गिणो वुत्ता सुय-सील-तवो जलं । सुयधाराभिहया संता भिन्ना हु न डहंति मे ॥ ५३ ॥

व्याख्या—कषायाः क्रोधादयश्चत्वारः परितापकतया चाग्नय उक्ताः 'तीर्थकृद्भिरिति गम्यम्' श्रुतं च 'उपचारात् कषायोपशमकास्तद्व्रतोपदेशाः', शीलं महाव्रतानि, तपो द्वादशभेदं ततो द्वन्द्वे श्रुत–शील–तपस्तदेव जलं 'उपलक्षणान्महामेघस्तीर्थकृन्महास्रोतश्च तदुत्पन्न आगमः' ततश्च श्रुतस्य 'उपलक्षणत्वाच्छील–तपसोश्च' धारा इव धारा आक्रोश–हनन–तर्जन–धर्मभ्रंशादिषूत्तरोत्तराभावस्य लाभरूपताऽऽदिभावनास्ताभिरभिहतास्ताडिताः श्रुतधाराऽभिहताः सन्त उक्तरूपा अग्नयो भिन्ना विदारितास्तदाभिघातेन लवमात्रीकृता इत्यर्थः । हुर्यस्मान्न दहन्ति माम् ॥५३॥

पुनः केशिराह—

साहु गोयम ! पन्ना ते छिन्नो मे संसओ इमो । अन्नो वि संसओ मज्झं तं मे कहसु गोयमा ! ॥ ५४ ॥

स्पष्टम् ॥ ५४ ॥

अय साहसिओ भीमो दुट्ठस्सो परिधावई । जंसि गोयममारूढो कहं तेण न हीरसी ? ॥ ५५ ॥

व्याख्या—अय प्रत्यक्ष सहसाऽसमीक्ष्य प्रवर्तते इति साहसिको भीम प्राग्वत् । दुष्टश्चासावकार्यप्रवृत्त्याऽश्वश्च दुष्टाश्व परिधावति समन्ताद् गच्छति । 'जसि'त्ति यस्मिन् हे गौतमारूढश्चटित सन् कथं तेन दुष्टाश्वेन न ह्रियसे प्रस्तावान्नोन्मार्गं नीयसे ? ॥ ५५ ॥

गौतम आह—

पहावंतं निगिण्हामि सुयरस्सीसमाहियं । न मे गच्छइ उम्मग्ग मग्गं च पडिवजई ॥ ५६ ॥

व्याख्या—प्रधावन्तमुन्मार्गाभिमुखं गच्छन्तं निगृह्णामि निरुणध्मि 'तमश्वमिति शेष' कीदृशं सन्तम् ? इत्याह—श्रुतमागमो नियन्त्रकतया रश्मिरिव रश्मिर्वल्गा श्रुतरश्मिस्तेन समाहितो बद्धस्तम् । अतो न मे मम दुष्टाश्वो गच्छत्युन्मार्गं ततो न मम तेन हरणमिति भाव । मार्गं सत्पथ पुन प्रतिपद्यतेऽङ्गीकुरुते ॥ ५६ ॥

अस्से य इइ के वुत्ते केसी गोयममब्बवी । तओ केसिं बुवंत तु गोयमो इणमब्बवी ॥ ५७ ॥

व्याख्या—सोऽश्व इति क उक्तोऽभिप्रेतो भवतेत्यादि स्पष्टम् ॥ ५७ ॥

गौतम आह—

मणो साहसिओ भीमो दुट्ठस्सो परिधावई । तं सम्मं तु निगिण्हामि धम्मसिक्खाइ कंथगं ॥ ५८ ॥

व्याख्या—मनश्चित्तं साहसिको भीमश्च प्राग्वत् । दुष्टाश्वः परिधावति तं सम्यग् निगृह्णामि धर्मशिक्षायै धर्माभ्यासनिमित्तं कन्थकमिव जात्याश्वमिव । कोऽर्थः ? दुष्टाश्वोऽपि निग्रहणयोग्यो जात्याश्वप्राय एव ॥ ५८ ॥

केशिराह—

साहु गोयम ! पन्ना ते छिन्नो मे संसओ इमो । अन्नो वि संसओ मज्झं तं मे कहसु गोयमा ! ॥५९॥

सूत्रं तथैव ॥ ५९ ॥

कुप्पहा बहवो लोए जेहिं नस्संति जंतवो । अद्धाणे कह वट्टंतो तं न नस्ससि गोयमा ! ॥ ६० ॥

व्याख्या—कुत्सिताः पन्थानः कुपथा अशोभनमार्गा बहवो लोके यैः कुपथैर्नश्यन्ति सन्मार्गाद् भ्रश्यन्ति जन्तवस्तत्श्चाध्वनि प्रस्तावात् सन्मार्गे 'कह'त्ति कथं वर्तमानं त्वं न नश्यसि न सत्पथाच्च्यवसे ? हे गौतम ! ॥ ६० ॥

ततो गौतम आह—

जे य मग्गेण गच्छंति जे य उम्मग्गपट्ठिया । ते सव्वे विइया मज्झं तो न नस्सामहं मुणी ! ॥ ६१ ॥

व्याख्या—ये केचिन्मार्गेण प्रस्तावात् सन्मार्गेण गच्छन्ति, ये चोन्मार्गप्रस्थिता उत्पथप्रवृत्तास्ते सर्वे विदिता· प्रतीता मम तत पथापथपरिज्ञानान्न नश्याम्यह मुने ! । ये हि पथापथस्वरूपानभिज्ञास्ते हि कुपथभ्रान्ता नश्येयुरह न तथेति भाव ॥ ६१ ॥

केशिराह—

मग्गे य इइ के वुत्ते केसी गोयममब्ववी । केसिमेव वुवतं तु गोयमो इणमब्ववी ॥ ६२ ॥

व्याख्या—मार्ग· सन्मार्ग 'उपलक्षणात् कुमार्गश्च' क उक्त· ? । शेपं स्पष्टम् ॥ ६२ ॥

गौतम आह—

कुप्पवयणपासडी सव्वे उम्मग्गपट्ठिया । सम्मग्गं तु जिणक्खाय एस मग्गो हि उत्तमो ॥ ६३ ॥

व्याख्या—कुप्रवचनेषु कपिलाद्युपदिष्टकुमतेपु पाखण्डिनो व्रतिन· कुप्रवचनपाखण्डिन· सर्वे उन्मार्गं प्रस्थिता· । 'अनेन कुप्रवचनानि कुपथा इत्युक्त स्यात्' सन्मार्गं तु पुन· 'जानीयादिति शेप·' जिनाख्यातम् । एप मार्गो हिर्यस्मादुत्तमोऽन्यमार्गेभ्य· प्रधानस्तस्मादयमेव सन्मार्ग इति भाव । उत्तमत्व चास्य प्रणेतॄणा रागादिविकलत्वेनेति भावनीयम् ॥ ६३ ॥

केशिराह—

साहु गोयम ! पन्ना ते छिन्नो मे संसओ इमो । अन्नो वि संसओ मज्झं तं मे कहसु गोयमा ! ॥ ६४ ॥

पूर्ववत् ॥ ६४ ॥

महाउदगवेगेणं वुज्झमाणाण पाणिणं । सरणं गई पइट्ठा य दीवं कं मन्नसी मुणी ? ॥ ६५ ॥

व्याख्या—महदुदकं पानीयं यत्र तन्महोदकं प्रक्रमान्महास्रोतस्तस्य वेगो रयो महोदकवेगस्तेनोह्यमानानां नीयमानानां प्राणिनां शरणं तन्निवारणक्षममत एव गम्यमानत्वाद् गतिः स्थिरावस्थानहेतुं च प्रतिष्ठां द्वीपं च कं मन्यसे मुने ! नास्त्येव कश्चन तादृशो द्वीप इति प्रश्नयितुराशयः ॥ ६५ ॥

गौतम आह—

अत्थि एगो महादीवो वारिमज्झे महालओ । महाउदगवेगस्स गई तत्थ न विज्जई ॥ ६६ ॥

व्याख्या—अस्त्येको महांश्चासौ द्वीपश्च महाद्वीपो वारिमध्ये जलस्यान्तः समुद्रान्तर्वर्त्यन्तर्द्वीप इत्यर्थः । 'महालओ'त्ति महानुच्चैस्त्वेन विस्तीर्णतया चालयः स्थानं यस्य स महालयोऽत एव महोदकवेगस्य क्षुभितपातालकलशवातेरितप्रवृद्धजलमहास्रोतोवेगस्य गतिर्गमनं तत्र द्वीपे न विद्यते ॥ ६६ ॥

दीवे य इइ के वुत्ते केसी गोयममब्बवी । केसिमेवं बुवंतं तु गोयमो इणमब्बवी ॥ ६७ ॥

व्याख्या—द्वीपः क उक्तः ? इत्यादि गतार्था ॥ ॥ ६७ ॥

गौतम आह—

जरा-मरणवेगेणं वुज्झमाणाण पाणिणं । धम्मो दीवो पइट्ठा य गई सरणमुत्तमं ॥ ६८ ॥

व्याख्या—जरा-मरणे एव निरन्तरप्रवाहप्रवृत्ततया वेग 'प्रक्रमादुदकमहास्रोतस.' जरा-मरणवेगस्तेनोह्यमानाना-मपरापरपर्यायनयनेन प्राणिनां धर्मः श्रुतादि द्वीप इव द्वीप उक्तः। स हि भवोदधिमध्यवर्ती मुक्तिपदहेतुतया जरा-मरणवेगस्यागम्योऽत एव तमाश्रित्य विवेकिनस्तिष्ठन्तीति प्रतिष्ठा, गतिः, शरणं चोत्तममिति । इह द्वीपमात्रप्रश्ने यदुदकवेगप्रश्नस्याभिधानं तत् प्रक्रमोपलक्षणम् ॥ ६८ ॥

केशिराह—

साहु गोयम ! पन्ना ते छिन्नो मे संसओ इमो । अन्नो वि संसओ मज्झं तं मे कहसु गोयमा ! ॥ ६९ ॥

उक्तार्था ॥ ६९ ॥

अण्णवंसि महोहंसि नावा विपरिधावई । जंसि गोयममारूढो कह पारं गमिस्ससि ? ॥ ७० ॥

व्याख्या—अर्णवे समुद्रे महौघे बृहज्जलप्रवाहे नौर्द्रोणी कष्टाम्बुवाहिनी विपरिधावति विशेषेण समन्तात् गच्छति

'जंसि' त्ति यस्यां नावि वेडायां हे गौतम! आरूढश्चटितः 'त्वमिति गम्यम्' । ततः कथं पारं पर्यन्तं 'प्रक्रमादर्णवस्य' गमिष्यसि ? न कथञ्चिदित्यर्थः ॥ ७० ॥

गौतम आह—

जा उ अस्साविणी नावा न सा पारस्स गामिणी । जा निरस्साविणी नावा सा उ पारस्स गामिणी ॥ ७१ ॥

व्याख्या—या 'तुः पूरणे' आस्रवते सन्धिभ्यो जलमित्यास्राविणी जलसङ्ग्राहिणी नौर्न सा पारस्य प्रस्तावात् समुद्रपर्यन्तस्य गामिन्यवश्यंयायिनी । या पुनर्निष्क्रान्तः सन्धिभ्य आस्रावो जलसङ्ग्रहो यस्याः सा निरास्राविणी जलासङ्ग्राहिणीत्यर्थो नौर्द्रोणी सा पारस्य गामिनी पारप्रापिका । ततोऽहं निरास्राविणीं नावमारूढ उपायतः पारंगाम्येव भविष्यामीति भावः ॥ ७१ ॥

नावा य इइ के वुत्ते केसी गोयममब्बवी । केसिमेवं बुवंतं तु गोयमो इणमब्बवी ॥ ७२ ॥

व्याख्या—नौः केत्यादि स्पष्टा, नवरं नावस्तारणत्वात् तत्प्रश्ने तरिता तार्यं च पृष्टमेवातस्तदुत्तरमाह गौतमः ॥७२॥

सरीरमाहु नाव त्ति जीवो वुच्चइ नाविओ । संसारो अण्णवो वुत्तो जं तरंति महेसिणो ॥ ७३ ॥

व्याख्या—शरीरमाहुर्ब्रुवते नौरिति तस्यैव सदनुष्ठानहेतुतया भवाब्धितारकत्वात्, जीव उच्यतेऽर्हद्भिर्नाविकः स

श्रुतरूपया नावा भवोदधिं तरतीति, ससारोऽर्णव· समुद्र उक्तस्तस्यैव तत्त्वतस्तार्यत्वात्, य संसार महार्णवप्रायं तरन्ति महर्षय इति ॥ ७३ ॥

केशिराह—

साहु गोयम ! पन्ना ते छिन्नो मे संसओ इमो । अन्नो वि ससओ मज्झ त मे कहसु गोयमा ! ॥७४॥

गतार्था ॥ ७४ ॥

अंधयारे तमे घोरे चिट्ठंति पाणिणो वहू । को करिस्सइ उज्जोयं सव्वलोगंमि पाणिणं ? ॥ ७५ ॥

व्याख्या—अन्धमिवान्ध चक्षु प्रवृत्तिनिवर्तकत्वेनार्थार्जनं करोतीत्यन्धकारस्तस्मिन् तमसि प्रतीते घोरे भयानके तिष्ठन्ति प्राणिनो जीवा वहव क करिष्यत्युद्योतं सर्वलोके प्राणिनां ? न किञ्चित् तादृश पश्याम इति भावः ॥७५॥

गौतम आह—

उग्गओ विमलो भाणू सव्वलोगप्पभकरो । सो करिस्सइ उज्जोयं सव्वलोगंमि पाणिण ॥ ७६ ॥

व्याख्या—उद्गत उदितो विमलो निर्मलो भानु सूर्य· सर्वलोकप्रभाकर· सर्वजगत्प्रकाशविधाता स करिष्यत्युद्योतम् । सर्वस्मिन् लोके प्राणिना प्राणा सन्ति येपा ते प्राणिनस्तेपा जीवानां ॥ ७६ ॥

भाणू य इइ के वुत्ते केसी गोयममब्बवी । केसिमेवं बुवंतं तु गोयमो इणमब्बवी ॥ ७७ ॥

व्याख्या—भानुः रविः क उक्तो य उद्द्योतं करिष्यतीति प्रक्रमः ॥ ७७ ॥

गौतम आह—

उग्गओ खीणसंसारो सवन्नू जिणभक्खरो । सो करिस्सइ उज्जोयं सवलोगंमि पाणिणं ॥ ७८ ॥

व्याख्या—उद्गत उदयं प्राप्तः क्षीणसंसारः सर्वज्ञो जिनभास्करोऽर्हदादित्यः । उद्द्योतं समस्तवस्तुप्रकाशनं करिष्यति । शेषं स्पष्टम् ॥ ७८ ॥

केशिराह—

साहु गोयम! पन्ना ते छिन्नो मे संसओ इमो । अन्नो वि संसओ मज्झं तं मे कहसु गोयमा! ॥ ७९ ॥

विदितार्था ॥ ७९ ॥

सारीर-माणसे दुक्खे बज्झमाणाण पाणिणं । खेमं सिवं अणाबाहं ठाणं किं मन्नसी मुणी ? ॥ ८० ॥

व्याख्या—शारीर-मानसैर्दुःखैः 'सूत्रत्वात् तृतीया' बाध्यमानानां पीड्यमानानां प्राणिनां क्षेमं व्याधिरहितं तथा, शिवं सकलोपद्रवाभावतः, अनाबाधं स्वाभाविकबाधाऽपगमात्, स्थानमाश्रयस्तदेवंविधं किं मन्यसे प्रतिजानीषे ? न किञ्चिदीदृशं निश्चिनुम इति भावः ॥ ८० ॥

गौतम आह—

अत्थि एगं धुव ठाण लोगग्गमि दुरारुह । जत्थ नत्थि जरा मच्चू वाहिणो वेयणा तहा ॥ ८१ ॥

व्याख्या—अस्त्येकमद्वितीय धुव शाश्वत स्थानं लोकाग्रे 'दुरारुह' ति दु खेनारुह्यतेऽध्यास्यते इति दुरारोहम् । दुरापेणैव सम्यग्दर्शनादित्रयेण तस्य प्राप्यत्वात् । यत्र न सन्ति जराऽऽदीनि प्रतीतानि, वेदना शारीरादिपीडा ततश्च व्याध्यभावत क्षेमत्वं, जरा-मरणाभावत. शिवत्वं, वेदनाऽभावतोऽनाबाधत्वमुक्तमिति यथायोगं भावनीयम् ॥ ८१ ॥

ठाणे य इइ के वुत्ते केसी गोयममब्ववी । एव केसि बुवत तु गोयमो इणमब्ववी ॥ ८२ ॥

व्याख्या—स्थान किमुक्त धुवादिविशेषणविशिष्टमिति प्रक्रमः ॥ ८२ ॥

गौतम आह—

निवाण ति अवाह ति सिद्धी लोगग्गमेव य । खेमं सिवं अणाबाह जं तरति महेसिणो ॥ ८३ ॥

व्याख्या-निर्वाति कर्माग्निविध्यापनाच्छीतीभवन्त्यस्मिन्निति निर्वाणं 'इतिशब्दः स्वरूपप्रदर्शको यत्रापि नास्ति तत्राप्यध्याहार्यः' तत. 'उच्यत इत्यध्याहत्य' निर्वाणमिति यदुच्यते, अबाधमिति यदुच्यते, सिद्धिरिति यदुच्यते,

लोकाग्रमिति यदुच्यत इति व्याख्येयं। क्षेमं शिवमनाबाधमिति च प्राग्वत्। यदिति यत् स्थानं 'विभक्तिव्यत्ययाद्' यत्र स्थाने वा तरन्ति प्लवन्ते गच्छन्तीत्यर्थो महर्षयो महामुनयः॥ ८३॥

एवंविधं किं तद्? इत्याह—

तं ठाणं सासयंवासं लोगग्गंमि दुरारुहं। जं संपत्ता न सोयंति भवोहंतकरा मुणी॥ ८४॥

व्याख्या—तत् स्थानं 'उक्तमिति प्रक्रमः'। 'विन्दोरलाक्षणिकत्वात्' शाश्वतवासं नित्यावस्थितं ध्रुवमिति यावत्। लोकाग्रे दुरारोहम् 'उपलक्षणत्वाज्जराद्यभाववच्च' यत् सम्प्राप्ता न शोचन्ते कीदृशाः सन्तः? इत्याह—भवा नारकादयस्तेषामोघः पुनः पुनर्भावरूपः प्रवाहस्तस्यान्तकराः पर्यन्तविधायिनो भवौघान्तकरा मुनय इति॥ ८४॥

केशिराह—

साहु गोयम! पन्ना ते छिन्नो मे संसओ इमो। नमो ते संसयातीत! सव्वसुत्तमहोयही!॥ ८५॥

व्याख्या—नमः 'अस्त्विति शेषः' ते तुभ्यं संशयातीत! सन्देहातिक्रान्त! सर्वसूत्राणां श्रुतानां महोदधिरिव महोदधिः समुद्रः सामस्त्येन तदाधारतया तत्सम्बोधनं सर्वसूत्रमहोदधे! अनेनोपबृंहणागर्भं स्तवनमाह॥ ८५॥

पुनस्तद्वक्तव्यतामेवाह—

एवं तु संसए छिन्ने केसी घोरपरक्कमे। अभिवंदित्ता सिरसा गोयमं तु महायसं॥ ८६॥

व्याख्या—एवममुना क्रमेण द्वादशानां प्रश्नानां केशिना कृतानां संशये उक्तरूपे छिन्ने 'उभयत्र जातावेकवचनम्' केशिर्घोरपराक्रम उत्कटवीर्य अभिवन्द्य शिरसा मस्तकेन गौतमं पुनर्महायशसम् ॥ ८६ ॥

किं कृतवान् ? इत्याह—

पंचमहव्वयधम्मं पडिवज्जइ भावओ । पुरिमस्स पच्छिमंमी मग्गे तत्थ सुहावहे ॥ ८७ ॥

व्याख्या—पञ्चमहाव्रतरूपं धर्मं प्रतिपद्यते 'केशिरिति गम्यम्' भावत इत्यभिप्रायत । पूर्वं हि चतुर्याम एव धर्म· प्रतिपत्तव्य इत्यभिप्राय आसीदधुना तु पञ्चयाम इति । क्व पुनरथ पञ्चयाम· ? इत्याह—'पुरिमस्स' पूर्वस्याद्यस्यार्हतोऽभिमते, पश्चिमे पश्चिमार्हत्सम्बन्धिनि मार्गे, तत्र प्रक्रान्ते तिन्दुकोद्याने वा शुभावहे कल्याणप्रापके ॥ ८७ ॥

सम्प्रत्यध्ययनोपसंहारमाह—

केसीगोयमओ निच्च तम्मि आसी समागमे । सुय–सीलसमुक्करिसो महत्थत्थविणिच्छओ ॥ ८८ ॥

व्याख्या—केशिगौतमत इति केशि–गौतमावाश्रित्य 'क्यब्लोपे पञ्चमी' नित्यं 'तम्मि' त्ति तस्मिन् प्रक्रान्ते स्थाने आसीत् समागमे मीलके । किमासीद् ? इत्याह—श्रुत–शीलयोर्ज्ञान–चरणयो समुत्कर्षः प्रकर्ष श्रुत–शीलसमुत्कर्ष· । महार्था महाप्रयोजना मुक्तिसाधकत्वेन येऽर्था· शिक्षाव्रतादयस्तेषां विनिश्चयो निर्णयो महार्थार्थविनिश्चय· 'तच्छिष्याणामिति गम्यते' ॥ ८८ ॥

शेषपर्षदो यदभूत् तदाह—

तोसिया परिसा सवा सम्मग्गं समुवट्ठिया । संथुया ते पसीयंतु भगवं केसीगोयमे ॥ ८९ ॥ त्ति बेमि ॥

व्याख्या—तोषिता परितोषं नीता परिषत् सदेव-मनुजासुरा सभा सर्वा, सन्मार्गं मुक्तिपथं 'अनुष्ठातुमिति गम्यते' समुपस्थिता उद्यता । प्रणिधानमाह–'संथुय' त्ति संस्तुतौ सम्यगभिवन्दितौ तावुक्तरूपौ प्रसीदतां प्रसादपरौ भवतां भगवत्केशि–गौतमाविति । इति ब्रवीमीति पूर्ववत् ॥ ८९ ॥ ग्रं० ३०६ अ० २८ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां केशि–गौतमीयं त्रयोविंशमध्ययनं समाप्तम् ॥२३॥

# अथ चतुर्विंशं प्रवचनमात्रीयाख्यमध्ययनम् ।

अनन्तराध्ययने परेषां चित्तविप्लुति· केशि–गौतमवदपनेयेत्युक्तमिह तदपनयनं च सम्यग्वाग्योगत एव, स च प्रवचनमातृस्वरूपपरिज्ञानादिति तत्स्वरूपाभिधायकं चतुर्विंशमध्ययनमारभ्यते—

अट्ठ प्पवयणमायाओ समिई गुत्ती तहेव य । पञ्चेव य समिईओ तओ गुत्तीओ आहिया ॥ १ ॥

व्याख्या–अष्टौ प्रवचनमातरः, समिति सम्यगर्हन्मतानुसारितया इतिरात्मचेष्टा समितिरीर्यादिचेष्टासु पञ्चसु तान्त्रिकीयं संज्ञा, गोपनं गुप्ति· सम्यग्योगनिग्रह· 'तथैव चेति समुच्चये' एताः प्रवचनमातर· । अष्टसङ्ख्यात्वमेव स्पष्टयति 'पंच'त्ति पञ्चैव समितयस्तिस्रो गुप्तय· 'आहिय'त्ति आख्याता कथिता 'तीर्थंकृदादिभिरिति गम्यते' ॥१॥

ता एव नामत आह—

इरियाभासेसणादाणे उच्चारे समिई इय । मणगुत्ती वइगुत्ती कायगुत्ती य अट्ठमा ॥ २ ॥

व्याख्या—ईरणं गमनं ईर्या गति· । भाषण भाषा । एषणा उद्गमैषणाऽऽद्या गवेषणाऽऽहारादे· । आदानं ग्रहण पात्रादेर्निक्षेपोपलक्षणमिदम्, ततो द्वन्द्वस्तस्मिन् । उच्चारशब्देन सूचकत्वादुच्चारादिपरिष्ठापनाया च । समि-

तिरस्य च प्रत्येकसम्बन्धादीर्यासमितिरित्याद्यभिलापः कार्यः, इतिशब्देनैतावत्य एव समितयस्तथा मनसो गुप्तिर्मनोगुप्तिरिति तत्पुरुषः, एवमुत्तरयोरपि कायगुप्तेश्च गुप्त्यपेक्षया तृतीयात्वेऽपि अष्टमीत्वं प्रवचनमात्रपेक्षया ॥ २ ॥

निगमयन्नाह—

एयाओ अट्ठ समिईओ समासेण वियाहिया । दुवालसंगं जिणक्खायं मायं जत्थ उ पवयणं ॥३॥

व्याख्या—एता अनन्तरोक्ता अष्ट समितयो गुप्तीनामपि प्रवचनविधिना सन्मार्गव्यवस्थापनोन्मार्गगमनविनिवारकत्वादात्मनः सचेष्टाऽऽत्मकत्वाच्च समितिशब्दवाच्यत्वमस्त्येवेति । यत् तु भेदेनोपादानं तत् समितीनां प्रवीचारात्मकत्वेन, गुप्तीनां तु प्रवीचाराप्रवीचाररूपत्वेनान्योन्यं कथञ्चिद् भेदात् । तथा चागमः—

"[1]समिओ नियमा गुत्तो गुत्तो समियत्तणंमि भइयव्वो । कुसलवइमुदीरंतो जं वइगुत्तो वि समिओ वि" ॥ १ ॥

ततः समासेन सर्वश्रुतसङ्ग्रहणे व्याख्याताः । अत एव द्वादशाङ्गं जिनाख्यातं मातं 'तुशब्दस्यैवार्थत्वात्' मातमेवान्तर्भूतमेवेति यासु समित्यादिषु प्रवचनमागम इति । किञ्च सर्वा अप्यमूश्चारित्ररूपा, ज्ञान–दर्शनाविनाभावि च चारित्रं, न चैतत्त्रयातिरिक्तमन्यदर्थतो द्वादशाङ्गमिति सर्वमप्येतासु प्रवचनं मातमुच्यते इति ॥ ३ ॥

१ समितो नियमाद् गुप्तो गुप्तः समितत्वे भक्तव्यः । कुशलवच उदीरयन् यद् वचोगुप्तोऽपि समितोऽपि ॥ १ ॥

तत्रेर्यासमितिस्वरूपमाह—

आलंवणेण कालेण मग्गेण जयणाइ य । चउकारणपरिसुद्ध संजए इरिय रिए ॥ ४ ॥

व्याख्या—आलम्बनेन कालेन मार्गेण यतनया च चतु'कारणैरेभिरालम्बनादिभिरेव परिशुद्धा निर्दोषां सयतो यतिरीर्यां गतिं'रीए'त्ति रीयेतानुष्ठानविषयतया प्राप्नुयात् ॥ ४ ॥

आलम्बनादीन्येव व्याचष्टे—

तत्थ आलवण नाण दसणं चरण तहा । काले य दिवसे वुत्ते मग्गे उप्पहवज्जिए ॥ ५ ॥

दव्वओ खित्तओ चेव कालओ भावओ तहा । जयणा चउविहा वुत्ता त मे कित्तयओ सुण ॥ ६ ॥

दव्वओ चक्खुसा पेहे जुगमित्तं च खित्तओ । कालओ जाव रीएज्जा उवउत्ते य भावओ ॥ ७ ॥

इदियत्थे विवज्जित्ता सज्झायं चेव पचहा । तम्मुत्ती तप्पुरक्कारे उवउत्ते रियं रिए ॥ ८ ॥

आसा व्याख्या—तत्र तेष्वालम्बनादिषु मध्ये यदालम्ब्य गम्यते तदालम्बनं, निरालम्बनस्य हि गमनं नानुज्ञातमेव। तत् किम्? इत्याह—ज्ञानं सूत्रार्थोभयावबोधरूपं, दर्शनं तत्त्वार्थश्रद्धानरूपं, चरण चारित्रं, तथाशब्देन ज्ञानादीन्याश्रित्य प्रत्येकं द्विकादिसंयोगे गमनालम्बनमनुज्ञातम् । कालश्चेर्याया दिवस उक्तोऽर्हदादिभि', रात्रौ ह्यचक्षु-

विषयत्वेन पुष्टालम्बनेनैव गतेरनुज्ञातत्वात् । मार्ग उत्पथेनोन्मार्गेण वर्जितः, उत्पथे हि व्रजतः संयमात्मनि विराधना स्यात् ॥ यतनां बुबूर्षुराह–'दव्व०'त्ति स्पष्टा, नवरं तां चतुर्विधां यतनां मे कीर्तयतः सम्यक् स्वरूपेण कथयतः शृणु 'हे शिष्य ! इति गम्यम्' ॥ तामेवाह–'दव्व०'त्ति द्रव्यतो जीवादिद्रव्याण्याश्रित्यैवं यतना यच्चक्षुषा तानि प्रेक्षेत पश्येत्, युगमात्रं च चतुर्हस्तप्रमाणं क्षेत्रं प्रेक्षेतेति क्षेत्रतः, कालतो यतना 'जाव'त्ति यावन्तं कालं 'रीएज्ज' त्ति रीयेत भ्रमति 'तावत्कालमानेति गम्यते,' उपयुक्तश्च सावधानो यद् रीयेत सा भावतो यतना ॥ उपयुक्तत्वमेवाह–'इंदियत्थे०' त्ति इन्द्रियार्थान् शब्दादीन् विवर्ज्य तदध्यवसायं त्यक्त्वा 'एवोऽप्यर्थः' ततः स्वाध्यायं चापि पञ्चधेति वाचनाऽऽदिभेदतः पञ्चप्रकारं गत्युपयोगोपघातित्वात् 'त्यक्त्वेति योज्यम्' । तस्यामेवेर्यायां मूर्तिः शरीरं 'अर्थाद् व्याप्रियमाणा' यस्यासौ तन्मूर्त्तिः । तथा तामेव पुरस्करोति तत्रोपयुक्ततया प्राधान्येनाङ्गीकरोतीति तत्पुरस्कारोऽनेन काय–मनसोस्तत्परतोक्ता । वचसो हि तत्र व्यापार एव नास्ति एवमुपयुक्तः सन्नीर्यां रीयेत 'यतिरिति शेषः' इति गाथाचतुष्टयार्थः ॥ ५–६–७–८ ॥

भाषासमितिमाह—

**कोहे माणे य माया य लोभे य उवउत्तया । हासे भय–मोहरिए विगहासु तहेव य ॥ ९ ॥**

एयाइं अट्ठ ठाणाइ परिवज्जित्तु संजए । असावज्ज मियं काले भासं भासिज्ज पन्नवं ॥ १० ॥

अनयोर्व्याख्या–क्रोधाद्युपयुक्तता हास्ये भये मौखर्ये वाचालतायां विकथासु राजादिचतुर्विधासत्कथासु तथैवो-पयुक्तता ॥ 'एया०' त्ति एतान्युक्तरूपाण्यष्टौ स्थानानि परिवर्ज्य संयतोऽसावद्यां निर्दोषां तामपि मितां स्तोकां काले प्रस्तावे भाषा वाचं भाषेत वदेत् प्रज्ञा बुद्धिस्तद्वानिति गाथाद्वयार्थः ॥ ९–१० ॥

एषणासमितिमाह—

गवेसणाए गहणे य परिभोगेसणा य जा । आहारोवहि–सेज्जाए एए तिन्नि विसोहए ॥ ११ ॥

उग्गमुप्पायणं पढमे बिइए सोहिज्ज एसणं । परिभोगंमि चउक्कं विसोहिज्ज जयं जई ॥ १२ ॥

अनयोर्व्याख्या–गवेषणायां उद्गमोत्पादनालक्षणायां द्वात्रिंशद्विधायामन्वेषणाया, ग्रहणे च शङ्कितादिभेद-भिन्ने दशविधे स्वीकरणे 'उभयत्रैषणेति सम्बध्यते' ततो गवेषणैषणा ग्रहणैषणा, परिभोगे ग्रासे एषणा पञ्चप्रकारा वक्ष्यमाणचतुःप्रकारा वा परिभोगैषणा च या 'आहार'त्ति वचनव्यत्ययादाहारोपधि–शय्यासु प्रतीतास्वेताः पूर्वोक्ता एषणाः तिस्रो विशोधयेत् निर्दोषा विदध्यात् ॥ कथम्? इत्याह—उद्गमोत्पादनं शोधयेदिति सम्बन्धः । कोऽर्थः? आधाकर्मादिदोषत्यागादुद्गमं, धात्र्यादिदोषत्यागादुत्पादनां, 'पढमे'त्ति प्रथमाया गवेषणैषणायां, 'बीइए' त्ति द्विती-

यायां ग्रहणैषणायां शोधयेच्छङ्कितादिदोषत्यागत एषणां ग्रहणकालभाविग्राह्यदोषान्वेषणारूपाम्। 'परिभोगे' इति परिभोगैषणायां चतुष्कं पिण्ड–शय्या–वस्त्र–पात्रात्मकं विशोधयेत् । कोऽर्थः ? उद्गमादिदोषत्यागतः शुद्धमेव परिभुञ्जीत । अथवा संयोजना–प्रमाणाङ्गार–धूमाकारणात्मकचतुष्कं शोधयेदङ्गार–धूमयोर्मोहनीयान्तर्गतत्वेनैकतया विवक्षितत्वात्।'जयं' ति यतमानो यतिरिति। द्विः क्रियाऽभिधानमतिशयख्यापनार्थमिति गाथाद्वयार्थः ॥११–१२॥

आदाननिक्षेपणासमितिमाह—

ओहोवहोवग्गहियं भंडगं दुविहं मुणी । गिण्हंतो निक्खिवंतो य पउंजिज्ज इमं विहिं ॥ १३ ॥

चक्खुसा पडिलेहित्ता पमज्जिज्ज जयं जई । आयए निक्खिविज्जा वा दुहओ वि समिए सया ॥ १४ ॥

अनयोर्व्याख्या–'मध्यवर्त्युपधिशब्दो डमरुकमणिन्यायेनोभयत्र सम्बध्यते' तत ओघोपधिमौपग्रहिकोपधिं च भाण्डकमुपकरणं रजोहरण–दण्डकादि द्विविधं द्विभेदमुक्तनीत्या मुनिर्गृह्णन् निक्षिपंश्च प्रयुञ्जीत व्यापारयेदिमं विधिं न्यायं वक्ष्यमाणं ॥ तमेवाह—चक्षुषा 'पडिलेहित्त'त्ति प्रत्युपेक्ष्यावलोक्य प्रमार्जयेद् रजोहरणादिना विशोधयेत् । यतमानो यतिस्ततः 'आयए'त्ति आददीत गृह्णीयान्निक्षिपेद् वा स्थापयेत् । 'दुहओ वि'त्ति द्वावपि प्रक्रमादौघिकौपग्रहिकोपधी यदि वा द्विधाऽपि द्रव्यतो भावतश्च समितः प्रक्रमादादाननिक्षेपणासमितिमान् सन् सदा नित्य-मिति गाथाद्वयार्थः ॥ १३–१४ ॥

पारिष्ठापनासमितिमाह—

उच्चारं पासवण खेल सिघाण जल्लियं। आहारं उवहि देह अन्नं वा वि तहाविहं ॥ १५ ॥
अणावायमसलोए अणावाए चेव होइ सलोए। आवायमसलोए आवाए चेव सलोए ॥ १६ ॥
अणावायमसंलोए परस्साणुवघाइए। समे अज्झुसिरे वावि अचिरकालकयम्मि य ॥ १७ ॥
विच्छिन्ने दूरमोगाढे नासन्ने बिलवज्जिए। तसपाण—बीयरहिए उच्चाराईणि वोसिरे ॥ १८ ॥

आसां व्याख्या—उच्चार पुरीषं गूथं, प्रस्रवण मूत्रं, खेलं मुखनिर्गतं श्लेष्मादि, सिङ्घानकं नासिकानिःसृतं श्लेष्माणं, जल्लोऽङ्गमलस्तम्, आहारं भोजनं, उपधिं वर्षाकल्पादि, देहं शरीरमन्यद् वा कारणतो गृहीतं गोमयादि 'अपिः पूरणे' तथाविध परिष्ठापनार्हं 'स्थण्डिले व्युत्सृजेदित्युत्तरेण सम्बन्धः' ॥ स्थण्डिलं च दशविशेषणपदविशिष्टम्। तत्राद्यविशेषणपदयोर्भङ्गरचनामाह—न विद्यते आपात स्व—परोभयपक्षपार्श्वागमनरूपोऽस्मिन्निति नापातम् 'असंलोए' त्ति न विद्यते सलोको दूरस्थितस्यापि स्वपक्षादेरालोको दर्शन यस्मिस्तत् तथेति प्रथमो भङ्गः। अनापातं च संलोकं भवतीति द्वितीय। आपातमसंलोक च तृतीयः। आपातं संलोकं च चतुर्थः ॥ यादृशे स्थण्डिले व्युत्सृजेत् तदाह—अनापाते असलोके कस्य? इत्याह—परस्य स्वपक्षादे. १। अनुपघातिके संयमात्मप्रवचनोपघातरहिते २। समे

निम्नोन्नतत्वरहिते ३ । अशुपिरे वाऽपि तृण-पर्णाद्यनाकीर्णे ४ । अचिरकालकृते च दाहादिनाऽल्पकालकृते, चिरकृते सम्मूर्च्छन्ति जीवाः ५ ॥ विस्तीर्णे जघन्यतोऽपि हस्तप्रमाणे ६ । दूरमवगाढे जघन्यतोऽप्यधश्चतुरङ्गुलमचित्तीभूते ७ । नासन्ने ग्रामारामादेः ८ । बिलवर्जिते मूषकादिरन्ध्ररहिते ९ । त्रसप्राण-बीजरहिते त्रसप्राणा द्वीन्द्रियादयो बीजानि च शाल्यादीनि 'सर्वैकेन्द्रियोपलक्षणमिदं' तै रहिते १० । एवंविधे स्थण्डिले उच्चारादीनि साधुर्व्युत्सृजेत् परिष्ठापयेत् पुनरुच्चारादीनीत्यभिधानं स्मरणार्थमदुष्टमिति गाथाचतुष्कार्थः ॥ १५-१६-१७-१८ ॥

अथोक्तार्थमुपसंहरन् वक्तव्यार्थं वक्तुमाह—

एयाओ पंच समिईओ समासेण वियाहिया । इत्तो य तओ गुत्तीओ वुच्छामि अणुपुव्वसो ॥१९॥

व्याख्या—एताः पञ्च समितयः समासेन संक्षेपेण व्याहृताः । 'इत्तो'त्ति अतश्च पञ्चसमित्यनन्तरं 'तओ'त्ति तिस्रो गुप्तीर्वक्ष्ये । 'अणुपुव्वसो'त्ति आर्षत्वादानुपूर्व्याऽनुक्रमेणेत्यर्थः ॥ १९ ॥

तत्राद्यामाह—

सच्चा तहेव मोसा य सच्चामोसा तहेव य । चउत्थी असच्चमोसा य मणगुत्ती चउव्विहा ॥ २० ॥
संरंभ-समारंभे आरंभे य तहेव य । मणं पवत्तमाणं तु नियत्तिज्ज जयं जई ॥ २१ ॥

अनयोर्व्याख्या—सद्भ्योऽर्थात् पदार्थेभ्यो हितो यथावद् विकल्पेन सत्यो मनोयोगस्तद्विषया मनोगुप्तिरपि सत्या १। तथैव मृषा च तद्विपरीतमनोयोगविषया २। सत्यामृषा उभयात्मकमनोयोगगोचरा ३। 'तथैव चेति समुच्चये' असत्याऽमृषा उभयस्वभावविकलमनोयोगगोचरा मनोगुप्तिश्चतुर्थी ४। एव मनोगुप्तिश्चतुर्विधा ॥ अस्या एव स्वरूपं निरूपयन्नाह—संरम्भश्चित्तसङ्कल्पस्तथाऽहं ध्यास्यामि यथाऽसौ मरिष्यतीत्येवंविध.। समारम्भ· परपीडाकरोच्चाटनादिहेतुध्यानम् 'अनयोर्द्वन्द्वे' सरम्भ—समारम्भ तस्मिन्। आरम्भोऽत्यन्तसक्लेशत· परप्राणापहारक्षममशुभध्यानमेव तस्मिन् 'च समुच्चये'। तथैवेति तेनैवाशुभसङ्कल्पनप्रकारेण मनः प्रवर्तमानं 'तुर्विशेषणे' निवर्तयेत् यतमानो यतिरिति गाथाद्वयार्थ ॥ २०–२१ ॥

वाग्गुप्तिमाह—

सच्चा तहेव मोसा य सच्चामोसा तहेव य। चउत्थी असच्चमोसा य वयगुत्ती चउव्विहा ॥ २२ ॥

सरभ—समारभे आरंभे य तहेव य। वय पवत्तमाणं तु नियत्तिज्ज जय जई ॥ २३ ॥

अनयोर्व्याख्या—सत्या वाक् जीवं जीवमिति वदतः, असत्या जीवमजीवमिति, सत्यामृषा क्वचित् समये मनुष्यशतमुत्पन्नमुपरतं चेति, असत्याऽमृषा विधेहि स्वाध्यायं नैतत्सममन्यत् तपोऽस्तीत्यादि ॥ वाचिकः संरम्भः

परव्यापादनक्षमक्षुद्रविद्याऽऽदिपरावर्तनासङ्कल्पसूचको ध्वनिरेव । समारम्भः परपरितापकमन्त्रादिपरावर्तनम् । आरम्भोऽतिसङ्क्लेशतः प्राणिव्यपरोपणक्षममन्त्रादिजपनम् । तस्मिन् प्रवर्तमानं वचो निवर्तयेद् यतमानो यतिरिति पूर्ववत् ॥ २२–२३ ॥

कायगुप्तिमाह—

ठाणे निसीयणे चेव तहेव य तुयट्टणे । उल्लंघण पल्लंघण इंदियाण य जुंजणे ॥ २४ ॥
संरंभ-समारंभे आरंभे य तहेव य । कायं पवत्तमाणं तु नियत्तिज्ज जयं जई ॥ २५ ॥

अनयोर्व्याख्या—स्थाने ऊर्ध्वस्थाने, निषीदने चोपवेशने, तथैव च त्वग्वर्तने स्वापे, उल्लङ्घने कुतोऽपि हेतोर्गर्तादेरुत्क्रमणे, प्रलङ्घने सामान्येन गमने 'उभयत्र सुब्लोपः', इन्द्रियाणां च योजने शब्दादिविषयेषु व्यापारणे सर्वत्र 'वर्तमान इति शेषः' ततः स्थानादिषु वर्तमानः । किम्? इत्याह— इह संरम्भोऽभिघातसङ्कल्पसूचकं दृष्टिमुष्ट्यादिसंस्थानमेव उपचारात् सङ्कल्पार्थं संरम्भशब्दवाच्यम्, समारम्भः परितापकरो मुष्ट्याद्यभिघातस्ततो द्वन्द्वः तस्मिन् । आरम्भे प्राणिवधात्मनि कायं प्रवर्तमानं निवर्तयेत् शेषं पूर्ववत् । इति गाथाद्वयार्थः ॥ २४–२५ ॥

समिति-गुप्त्योर्विशेषमाह—

एयाओ पंच समिईओ चरणस्स य पवत्तणे । गुत्ती नियत्तणेऽवुत्ता असुभत्थेसु सव्वसो ॥ २६ ॥

व्याख्या—एता. पूर्वोक्ता· पञ्च समितयश्चरणं चारित्रं सचेष्टेति यावत् तस्य प्रवर्तने 'चस्यावधारणार्थत्वात्' प्रवर्तने एव । को भावः ? सचेष्टासु प्रवृत्तावेव समितय । तथा गुप्तयो निवर्तनेऽप्युक्ता, अशुभार्थेभ्योऽशोभनमनोयोगादिभ्य· 'सूत्रत्वात् पञ्चम्यर्थे सप्तमी' 'सव्वसो'त्ति सर्वेभ्य·, अपिशब्दाच्चरणप्रवर्तने च 'उपलक्षणमेतत् शुभार्थेभ्योऽपि निवृत्ते' वाक्–काययोर्निर्व्यापारताया अपि गुप्तिरूपत्वात् । को भावः ? रक्तद्विष्टस्य वाक्–काय–मनोव्यापाराव्यापाररूपा गुप्तिरिति ॥ २६ ॥

अध्ययनार्थोपसंहारेणैतदाचरणफलमाह—

एया पवयणमाया जे सम्मं आयरे मुणी । सो खिप्प सव्वसंसारा विप्पमुच्चइ पंडिए ॥ २७ ॥

त्ति बेमि ॥

व्याख्या—एता· प्रवचनमातृर्य· सम्यगवैपरीत्येन, न तु दम्भादिनाऽऽचरेन्मुनिः स क्षिप्रं सर्वसंसाराद् विप्रमुच्यते पण्डित इति ब्रवीमीति प्राग्वत् ॥ अत्रार्थे पुण्यसारदृष्टान्तः—

गोपाचलश्रियाऽऽकीर्णे श्रीगोपाचलपत्तने । भूप· समरसिंहोऽभूद् द्विपत्समरसिंहत ॥ १ ॥

समरश्रीरभूत् कान्ता स्मरश्रीरिव पण्डिता । स वागीशोऽप्यवागीशो यद्रूपादिगुणस्तुतौ ॥ २ ॥

धनसारो धनसारश्रेष्ठी श्रेष्ठोऽस्ति तत्र हि । धनश्रीस्तस्य जायाऽऽस्ते धन्या श्रीमूर्त्तिमत्यहो ! ॥ ३ ॥
तयोर्भुञ्जानयोर्भोगान् प्रीत्यैकीभूतयोरिव । अनेहा व्यतिचक्राम कियानपि यथासुखम् ॥ ४ ॥
अभूतामन्यदाऽपत्यचिन्तान्यञ्चितचेतसौ । तावथाराद्धया गोत्रदेव्योचे धर्मतो हि तत् ॥ ५ ॥
यदाशाविषयं नैव लोकेऽस्मिन् यच्च दुर्घटम् । हस्तसात् कुरुते क्षिप्रं प्राक्पुण्यं प्राणिनां हि तत् ॥ ६ ॥
ततः श्रीदेव-गुर्वर्चाऽभयदानादितत्परौ । समधार्मिकवात्सल्योपकारकरणोद्यतौ ॥ ७ ॥
तस्थतुस्तौ तयोः पुण्यप्रभावादभवत् सुतः । स पुण्यसार इत्याख्यां लब्धवान् लब्धवर्णतः ॥ ८ ॥
पितुः प्रमोदेन समं वर्धमानोऽष्टवार्षिकः । जज्ञे पित्रा स विद्यार्थं प्रैषि पाठकसन्निधौ ॥ ९ ॥
सोऽधीयानोऽपि दुस्सङ्गाद् द्यूतादिव्यसनोऽजनि । यथाऽऽम्रोऽरिष्टसंसर्गादनिष्टरसभाग् भवेत् ॥ १० ॥
पुण्यसारो दिवा रात्रौ विटपेटकसङ्गतः । वसन् क्रीडन् हसन्नश्नन् बम्भ्रमीति स सर्वतः ॥ ११ ॥
द्यूतव्यसनिनाऽनेन जह्रे मातुर्महाऽर्थकः । मुक्ताहारः सहस्रेण दीनारेण सहान्यदा ॥ १२ ॥
वृत्तान्तमेतं मत्वाऽभूद् धनसारोऽतिदुःखभाक् । तत्क्षणात् पुत्रमाहूयानुशासितुमिदं जगौ ॥ १३ ॥
कलाऽभ्यासे समारब्धे चौर्याभ्यासं करोषि रे ! । सुतव्याजाद् रिपुर्जातो विटैः साकं परिभ्रमन् ॥ १४ ॥
पूज्यायाः स्वजनन्याः किं हरन् हारं न लज्जितः ? । हारे दत्ते त्वयैतव्यं मम वेश्मनि नान्यथा ॥ १५ ॥

दध्यावनुतपन् सोऽथ पितृवैर्यहमञ्जज' । अथ देशान्तर गत्वा दास्येऽसौ हारमार्जितम् ॥ १६ ॥
ततोऽकथितहृद्भावोऽभिमानी गुरुसाहसी । प्रतीचीमपराह्ने स प्रतस्थे पुण्यसारक. ॥ १७ ॥
द्विगव्यूर्ती गते तस्मिन् रविरस्त गत क्षणात् । ध्वान्ते प्रसृमरे विष्वक् स तस्थौ वटकोटरे ॥ १८ ॥
इतस्तत्र वटे काऽपि कामाक्षाऽऽख्याऽस्ति यक्षिणी । सङ्गन्तुमेतया देवी कमलाक्षाऽऽगताऽन्यत. ॥ १९ ॥
अप्राक्षीत् ता च कामाक्षा त्वं कुत. कथमागम' ? । सख्याख्याहि यदद्राक्षी. कुतुक तन्मदग्रतः ॥ २० ॥
स्वर्णद्वीपादह व्योम्नाऽत्रागम त्वहिदृक्षया । सुराष्ट्रायां यदद्राक्षं वलभीपुरि तच्छृणु ॥ २१ ॥
तत्रास्ते कामदेवाभ कामदेवाभिधो धनी । श्रेष्ठी तस्य प्रिया लक्ष्मीर्लक्ष्मीरिव हरे प्रिया ॥ २२ ॥
सदा वैपयिकं सौख्यं तयोरासेवमानयो. । अष्टाभीष्टाः सुता जाता नामतस्तु क्रमादिमा. ॥ २३ ॥
धनश्रीश्च सारश्रीश्च नागश्री–विमलश्रियौ । सोमश्री कमलश्रीश्च सुन्दरश्री–गुणश्रियौ ॥ २४ ॥
कलाकमलिनीहसो रूपेणास्तामराङ्गनाः । लसल्लावण्यतारुण्यास्ता अवर्धन्त सुभ्रुव. ॥ २५ ॥
कामदेवोऽथ कन्याऽनुरूपोत्तमवरार्थिकः । सम्यगाराधयामास गणेशं गुरुगौरवात् ॥ २६ ॥
प्रत्यक्षीभूय सोऽभाणीत् तुष्टोऽस्मीष्टं हि मार्गय । श्रेष्ठ्यूचे मेऽष्टपुत्रीणां समादिश वरान् वरान् ॥ २७ ॥
यक्षः स ऊचिवान् भद्र ! श्रेष्ठिसूनुर्वरोत्तमः । अष्टाना पुत्रिकाणा ते एक एव भविष्यति ॥ २८ ॥

पूर्वं विवाहसामग्रीं त्वं विधेहि यथाविधि । स्वरूपं वरं लब्ध्वे आनयिष्येऽहमागते ॥ २९ ॥
कामदेवस्ततः प्रेष्यैर्नव्यं वैवाहमण्डपम् । खाद्याद्यष्टादशप्रष्ठभेदभक्ष्याण्यचीकरत् ॥ ३० ॥
हारार्धहार–केयूरमुख्यान्याभरणानि च । चीनांशुकदुकूलानि नेपथ्यानि व्यदीधपत् ॥ ३१ ॥
यवाङ्कुरेषु चोप्तेषु माङ्गल्यध्वनिपूर्वकम् । तेन चिक्षिपिरे कन्याः सर्वास्ता वर्णके मुदा ॥ ३२ ॥
संस्थाप्य सर्वाः सम्भूष्य बद्धा पाणौ च कङ्कणम् । श्रेष्ठी तु मण्डपद्वारे वरमार्गं विलोकते ॥ ३३ ॥
वरं विनाऽपि वैवाहसामग्री क्रियतेऽमुना । वलभ्यामेतदाश्चर्यं दृष्ट्वाऽऽगामत्र सत्यवाक् ॥ ३४ ॥
कामाक्षाऽऽख्यत् सखीदं तद् वीक्षेऽहमपि कौतुकम् । प्रत्याह साऽपि यद्येवं तर्ह्यागच्छ मया सह ॥ ३५ ॥
पुण्यसारस्तदाकर्ण्य तं वटं दृढमग्रहीत् । ततो देव्यौ वटेन द्राक् जग्मतुर्वलभीपुरीम् ॥ ३६ ॥
तदुद्याने वटं मुक्त्वा देव्यौ कौतुकमीक्षितुम् । विवाहमण्डपेऽगातां पुण्यसारोऽपि चान्वगात् ॥ ३७ ॥
लग्नक्षणे गणेशेन पुण्यसारोऽथ दर्शितः । कामदेवाय योग्योऽयं वरस्तेऽङ्गभुवामिति ॥ ३८ ॥
श्रेष्ठी संस्नाप्य तं भद्रं कङ्कणाभरणान्वितम् । विधाप्य कन्याऽधिष्ठानं मातृमन्दिरमानयत् ॥ ३९ ॥
तं कुमारं कुमाराभं श्रेष्ठ्याद्याः कन्यका अपि । निरीक्ष्याङ्गेन दीव्यं तं स्वं स्वं धन्यममंसत ॥ ४० ॥
अचिन्तयंश्च ताः सर्वा महद्भाग्यादयं पतिः । प्राप्तोऽस्माभिरपुण्यैः किं कामकुम्भो ह्यवाप्यते ? ॥ ४१ ॥

कुमारस्ता॰ कनीरष्टौ यथानीति व्यवाहयत् । कामदेवस्तदा तस्मै भूरि रत्नादिकं ददौ ॥ ४२ ॥
वधूभिरष्टभि सोऽथ भुञ्जान शर्म तस्थिवान् । तत्र सिद्धिभिरष्टाभिर्महासिद्ध पुमानिव ॥ ४३ ॥
अन्यदोपान्तयामे स प्रबुद्ध इति दध्यिवान् । एकाकी निरगा नि स्वो गेहात् पित्राऽपमानित॰ ॥ ४४ ॥
क्व स गोपगिरिः क्वाहं वटयोग क्व दिव्यक ? । क्वैपा च वलभी श्रेष्ठिकन्यका यद् व्यवाहयम् ॥ ४५ ॥
एताभि सह यद् भुञ्जे स्वर्ण–रत्नादिसम्पदः । तत् सर्वं कटरे ! पुण्यमाहात्म्यं वलवद्धि तत् ॥ ४६ ॥
इतोऽम्ना पुण्यसारस्य पित्रा निर्भर्त्सित सुतम् । मत्वा चक्रन्द सा मन्दं पति चाह सगद्गदा ॥ ४७ ॥
स्वामिंस्तवेयं का बुद्धिर्यत् पुत्र प्राणवल्लभ॰ । गृहान्निर्वास्यते कि तत् सन्तति॰ किल दुर्लभा ॥ ४८ ॥
किं च नश्वरवित्तार्थे पुत्ररत्न हि कस्त्यजेत् ? । न मन्दोऽप्यारकूटार्थे काञ्चन त्यजति क्वचित् ॥ ४९ ॥
हारापहारकृद् बाल॰ शिक्ष्य स्यात् त्याज्य एव न । तद् याह्यानय तं सद्यो भोक्ष्ये तन्मुखदर्शनात् ॥ ५० ॥
धनसार॰ प्रगे श्रेष्ठी प्रेष्यान् प्रेष्य दिशो दिशम् । पुत्रं विलोकितुं स्वीय बम्भ्रमीति पुरे स्वयम् ॥ ५१ ॥
ततस्तद्बान्धवा सर्वे तद्भृत्याश्चापि सर्वत । नष्टवस्त्विव निष्पुण्यास्तद्वार्तामपि नाप्नुवन् ॥ ५२ ॥
कियत्यपि गते काले तत्कुटुम्बे तु शोचति । वलभीत॰ पुमानेको दक्षस्तत्र समागमत् ॥ ५३ ॥
तेनोचे तत्र वैदेशी कश्चिदेक पुमानगात् । श्रेष्ठिना कामदेवेन सोऽष्टपुत्रीर्विवाहित॰ ॥ ५४ ॥

धनसारस्तमप्राक्षीत् किमभिज्ञानवान् स तु । ततस्तदुक्तचिह्नेन निश्चिकाय तमात्मजम् ॥ ५५ ॥
श्रेष्ठी प्रैषीत् ततो वेगाद् दूतमाप्तं हितैषिणम् । पुत्रपार्श्वे वलभ्यां च तल्लेखेऽलिखदित्यसौ ॥ ५६ ॥
अतुच्छागच्छ वत्स ! त्वं स्वच्छधीः पितृवत्सल ! । नाश्नाति त्वत्प्रसूः शून्यमिवास्ते त्वां विना गृहम् ॥५७॥
दूतः प्राह पुनर्धीमन् ! स्वजनान् विरहस्तव । शरदादित्यवद् बाढं तापयत्युष्णतापतः ॥ ५८ ॥
सद्यस्तत्र त्वमागत्य कारुण्यैकनिधे ! ततः । उपशामय तत्तापं पुष्करावर्तमेघवत् ॥ ५९ ॥
ततः स पुण्यसारोऽथ पितुरामन्त्रणं निजम् । श्रेष्ठिनः कामदेवस्य दूतेनाचीकथल्लघु ॥ ६० ॥
तच्च श्रुतिकटु श्रुत्वा श्रेष्ठ्यसौ विव्यथेतराम् । इष्टप्रस्थानकालोक्तेः कस्याधिर्न भवेन्ननु ? ॥ ६१ ॥
रत्नखचितानि हैमाभरणानि सुनिर्मितानि विविधानि । वासांसि दुकूलानि च तेभ्यः स तु यौतकानि ददौ ॥ ६२ ॥
ततः प्रातिष्ठपच्छ्रेष्ठी स सत्कृत्य सुतापतिम् । अशिक्षयदिदं सम्यगभीष्टास्ताश्च नन्दिनीः ॥ ६३ ॥
स्वप्रिये तात्त्विकी प्रीतिर्भक्तिः श्वशुरयोस्तथा । ननान्दरि विनीतत्वं स्नेहवृद्धिं कुटुम्बके ॥ ६४ ॥
देव–गुर्वादिपूपास्तिः कुकर्मविरतिः सदा । दानादिषु रतिः क्षान्तिर्मार्दवं चार्जवं पुनः ॥ ६५ ॥
त्रपा प्रियोक्तिः सर्वेषु सपत्नीष्वप्यदुष्टता । प्रवर्तितव्यमेतासु शिक्षास्वेव सुपुत्रिकाः ! ॥ ६६ ॥

एवं कुलवधूधर्मं विदधाना यथाविधि । पुत्र्यो भवित्र्यः शर्मिण्य कीर्त्तिं चाप्स्यथ निर्मलाम् ॥ ६७ ॥
(चतुर्भि. कुलकम्)

जामातरं मुत्कलाप्य कियद् दूरं तु सप्रियम् । प्रियंवदं तत श्रेष्ठी न्यवर्तिष्ट कथञ्चन ॥ ६८ ॥
पुण्यसार स्वकान्तास्ता. स्वपित्रादिवियोगिनीः । तत्तत्कथाविनोदेन प्रतस्थे प्रीणयन् पथि ॥ ६९ ॥
क्रमश' स पुण्यसार. सपरिकर' परिसरं पुर' । प्राप गोपाचलस्य मातापित्रोर्मुखदर्शनोत्कण्ठ' ॥ ७० ॥
श्रेष्ठिना धनसारेण महोत्सवपुर.सरम् । सुत. स्वसद्मन्यानिन्येऽगण्यनैपुण्यबन्धुर' ॥ ७१ ॥
मातु क्रमं ववन्दे स त साऽप्यालिङ्ग्य निर्भरम् । अभ्यनन्ददमन्दोद्यदानन्दस्रवदश्रुका ॥ ७२ ॥
बह्वहर्विरहोत्तप्त शश्वत् सिञ्चन् कुटुम्बकम् । अकृत्रिमप्रेमरसै' स तस्थौ सुखमाश्रित' ॥ ७३ ॥
अन्यदा तत्पुरोद्याने केवली मुनिपुङ्गव । साधुभि साधुभिर्युक्तो बहुभिः समवासरत् ॥ ७४ ॥
तदाऽगुर्धार्मिका. पौरास्त विवन्दिषवो भृशम् । धनसार' सपुत्रोऽपि तत्र तं नन्तुमागमत् ॥ ७५ ॥
तत' सुधामुचा वाचा श्रीगुरुर्धर्मदेशनाम् । प्रारब्धवान् भवाम्भोधेस्तारिणीं सुखकारिणीम् ॥ ७६ ॥
व्याख्याऽन्ते श्रीगुरु नत्वा पुण्यसारो व्यजिज्ञपत् । सयोजितकराम्भोजो भक्त्याऽवनतमस्तकः ॥ ७७ ॥
भदन्त ! केन पुण्येन दिव्यसाहाय्यतो ह्यहम् । समं प्रभूतया लक्ष्म्या पर्यणैषं प्रियाष्टकम् ॥ ७८ ॥

भगवानाह भो भद्र ! भद्रकापुरि भद्रकः । भानुभूपोद्भवो भीमाभिधोऽभूत् प्राग्भवे भवान् ॥ ७९ ॥
सकर्णो धर्ममाकर्ण्य जीर्णतार्णकुटीमिव । जहौ गेहं स निर्वेदात् करिकर्णचलां श्रियम् ॥ ८० ॥
प्रव्रज्य तद्गुरोः पार्श्वे द्विधा शिक्षासु शिक्षितः । चारित्रमाचचारोच्चैः स वैराग्यतरङ्गितः ॥ ८१ ॥
अष्टप्रवचनमातृषु यतमानो निर्जितेन्द्रियग्रामः । दुर्जयभावारिजयी जातः स जगत्त्रये ख्यातः ॥ ८२ ॥
प्रवचनमातृभिरष्टभिरनिशं शुशुभेतरां स माहात्म्यात् । परमेष्ठिनमस्कारसम्पद्भिरिवाष्टभिः शुद्धः ॥ ८३ ॥
एवं स भीमसाधुर्विधिनाऽऽराध्य त्रिधा विशुद्ध्या ताः । प्रान्ते चाराधनया समाधिनाऽध्यास्त सौधर्मम् ॥८४॥
तत्र दिव्यसुखं भुक्त्वा च्युत्वा श्रेष्ठिकुलेऽमले । पुण्यानुभावतः पुण्यसारोऽत्र त्वमवातरः ॥ ८५ ॥
अष्टप्रवचनमात्राराधनसंशुद्धधर्मसाधनतः । युगपत् त्वमष्ट कन्याः सम्पदुपेताः परिणिनीषे ॥ ८६ ॥
स निशम्य गुरोर्वाक्यमीहापोहान्सुमूर्छ च । जाते क्षणाच्च चैतन्ये स्वीयां प्राग्जातिमस्मरत् ॥ ८७ ॥
गुरूदितं तथाभूतं दृष्ट्वा हृष्टोऽतिविस्मितः । स उवाचोचितं पुण्यं प्रसद्यादिश मे प्रभो ! ॥ ८८ ॥
केवल्याह भवे चातुर्गतिके जन्तवोऽखिलाः । एहिरेयाहिरां चक्रुररघट्टघटीनिभाः ॥ ८९ ॥
मनुष्यत्वादिसामग्रीमवाप्यात्महिते कुधीः । यः प्रमाद्यति पीयूषपाने स ह्यलसायते ॥ ९० ॥
ततः प्रबुद्धः पुण्यात्मा पुण्यसारः प्रमोदभाक् । संवेगतस्तस्य गुरोः पादान्ते व्रतमाददे ॥ ९१ ॥

स शिक्षाद्वयनिष्णात' सत्तप शोपिताङ्गक॰ । शुद्धं चरणमाचर्य प्रान्ते चासेदिवान् दिवम् ॥ ९२ ॥
ततश्च्युतो विदेहेपु नृत्वं प्राप्यार्यवशजम् । दीक्षया केवलं लब्ध्वा स गमिष्यति निर्वृतिम् ॥ ९३ ॥
एव श्रीपुण्यसार॰ प्रवचनजननीसम्यगाराधनेन सोऽभ्यास्ताध्यात्मशुद्धो दलितकलिमलाशो यथा सिद्धिसौधम् ।
एतासूच्चैर्यतध्वं सुविहितयतयो भोस्तथा सयमश्रीजुषा येनाक्षय तत् परमपदसुख यूयमप्याश्रयध्वम् ॥ ९४ ॥

॥ इति अष्टप्रवचनमात्राराधनफले पुण्यसारकथा ॥ २७ ॥ ॥ ग्र० २६० ॥

इति श्रीखरतरगच्छे श्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचिताया सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकाया प्रवचनमात्रीय चतुर्विंशमध्ययनं समाप्तम् ॥ २४ ॥

# अथ पञ्चविंशं यज्ञीयाख्यमध्ययनम् ।

अनन्तराध्ययने प्रवचनमातर उक्तास्ताश्च ब्रह्मगुणस्थितस्यैव स्युरिति जयघोषचरितवर्णनाद्वारेण ब्रह्मगुणाभिधायकं पञ्चविंशमध्ययनमारभ्यते । जयघोषचरितं च यथा—

वाराणसीनगर्यां जज्ञाते युग्मिनौ द्विजौ द्वौ तु । जयघोष–विजयघोषाभिधानकौ बान्धवौ प्रीतौ ॥ १ ॥
अन्यदा जयघोषस्तु स्नातुं सुरनदीं गतः । तत्र प्रैक्षिष्ट सर्पेण गृहीतं दर्दुरं जवात् ॥ २ ॥
मार्जारेण च सर्पोऽपि समाक्रान्तो हठादपि । तथाप्यहिस्तु मण्डूकं चीत्कुर्वाणं स खादति ॥ ३ ॥
मार्जारोऽपि च तं सर्पं तडत्फडन्तं तु खादितुं लग्नः । मिथ एवं ग्रसमानान् दृष्ट्वाऽसौ दध्यिवान् जीवान् ॥४॥
अहो ! ह्यसारता नूनं संसारस्याप्यनित्यता । यो यं प्रभवितुं शक्तः स तकं ग्रसतेतराम् ॥ ५ ॥
कृतान्तः पुनरत्युच्चैर्ग्रसितुं प्रभविष्णुकः । विश्वं विश्वमतो धर्मो रक्षको ह्यस्त्यपायतः ॥ ६ ॥
ध्यात्वेति प्रतिबुद्धोऽसौ जयघोषद्विजोत्तमः । गङ्गामुत्तीर्य संवेगात् साधुपार्श्वे व्रतं ललौ ॥ ७ ॥

शेषचरितं सूत्रकृदेवाह—

**माहणकुलसंभूओ आसि विप्पो महायसो । जायाई जमजन्नंमि जयघोसित्ति नामओ ॥ १ ॥**

इंदियगामनिग्गाही मग्गगामी महामुणी । गामाणुगामं रीयंतो पत्तो वाणारसिं पुरिं ॥ २ ॥

वाणारसीइ बहिया उज्जाणंमि मणोरमे । फासुए सिज्जसथारे तत्थ वासमुवागए ॥ ३ ॥

आसां व्याख्या—ब्राह्मणकुलसम्भूत आसीदभूत्, ईदृशोऽपि जननीजात्यन्यथात्वे ब्राह्मणो न स्यादत आह विप्रो द्विजन्मा महायशा विख्यात इत्यर्थ.। 'जायाई' त्ति यायाजी अत्यर्थं यागकर्ता, क? इत्याह—यमा· पञ्च प्राणातिपातविरत्यादि रूपास्त एव यज्ञो भावपूजाऽऽत्मकत्वाद् भावयज्ञस्तस्मिन्, हिंसाऽऽत्मकं द्रव्ययज्ञ परित्यज्य महाव्रतात्मकभावयज्ञसुस्थित इत्यर्थो जयघोष इति नामक. ॥ स च कीदृश. किं कृतवान्? इत्याह—'इंदिय' त्ति इन्द्रियग्रामं निगृह्णाति स्वस्वविषयनिवर्तनेन नियमयतीत्येवंशील इन्द्रियग्रामनिग्राही मार्गगामी मुक्तिपथयायी महामुनिर्ग्रामानुग्राम 'रीयंत' त्ति रीयमाणो विहरन् प्राप्तो वाराणसीं नगरीम् ॥ ततश्च वाराणस्या बहिर्यदुद्यान मनोरमं तस्मिन् प्रासुके शय्याया वसतौ संस्तारक. शिलादिर्यत्र तादृशे तत्र वासमवस्थानमुपागत इति गाथात्रयार्थः ॥ १–२–३ ॥

इतश्च—

अह तेणेव कालेणं पुरीए तत्थ माहणे । विजयघोसित्ति नामेण जन्नं जयइ वेयवी ॥ ४ ॥

व्याख्या–अथ 'सुव्व्यत्ययात्' तस्मिन्नेव काले पुर्यां तत्र ब्राह्मणो विजयघोष इति नाम्ना जयघोषभ्रातेत्यर्थः यज्ञं द्रव्ययज्ञं यजति वेदवित् ॥ ४ ॥

अह से तत्थ अणगारे मासक्खमणपारणे । विजयघोसस्स जन्नंमि भिक्खमट्ठा उवट्ठिए ॥ ५ ॥

व्याख्या–अथ 'से' इति स जयघोषोऽनगारस्तत्र यागे 'मकारस्यालाक्षणिकत्वाद्, दीर्घश्च प्राकृतत्वात्' भिक्षाऽर्थ-मुपस्थितः प्राप्तः । शेषं स्पष्टम् ॥ ५ ॥

तदा च याजकः किं कृतवान् ? इत्याह—

समुवट्ठियं तहिं संतं जायगो पडिसेहए । न हु दाहामि ते भिक्खं भिक्खू ! जायाहि अन्नओ ॥ ६ ॥

व्याख्या–समुपस्थितमुपागतं भिक्षाऽर्थं 'तहिं संतं' ति तत्र सन्तं जयघोषमुनिं याजको यागकारको विजयघोषो विप्रः प्रतिषेधति निराकुरुते । यथा 'न हु' नैव दास्यामि 'ते' तुभ्यं भिक्षां भिक्षो ! 'जायाहि' त्ति याचस्वान्यतोऽ-स्मद्व्यतिरिक्तात् ॥ ६ ॥

किम् ? इत्यत आह—

जे य वेयविऊ विप्पा जन्नट्ठा य जे दिया । जोइसंगविऊ जे य जे य धम्माण पारगा ॥ ७ ॥

व्याख्या–ये च वेदविदो विप्रा जातितः, यज्ञार्थाश्च यज्ञप्रयोजना ये तत्र व्याप्रियन्ते ये द्विजाः संस्कारतो

द्विजन्मान. । ज्योतिषं ज्योति.शास्त्रमङ्गानि शिक्षाऽऽदीनि तानि विदन्तीति ज्योतिषाङ्गविदो ये, ज्योतिषोऽप्यङ्गत्वे यत् पृथगुपादानं तद् विप्रेषु तत्प्राधान्यख्यापनार्थम् । ये च धर्माणामर्थाद् धर्मशास्त्राणां पारगा', चतुर्दशविद्यास्थानानां पारगामिन इत्यर्थ' ॥ ७ ॥

जे समत्था समुद्धत्तु परमप्पाणं एव य । तेसि अन्नमिणं देय भो भिक्खू ! सव्वकामिय ॥ ८ ॥

व्याख्या—ये समर्था समुद्धर्तुं 'भवाम्भोधेरिति गम्यते' परमन्यमात्मानमपि च 'तेसि' ति 'सुब्व्यत्ययात्' तेभ्यो द्विजेभ्यो देयं दातव्यमन्नमिदं भो भिक्षो ! सर्वकामिकं षड्रसोपेतमित्यर्थ. ॥ ८ ॥

स साधु. किं कृतवान् ?—

सो तत्थ एव पडिसिद्धो जायगेण महामुणी । नवि रुट्ठो नवि तुट्ठो उत्तमट्ठगवेसओ ॥ ९ ॥

व्याख्या—स जयघोषमुनिस्तत्र यज्ञे एवं प्रतिषिद्धो याजकेन यागकर्त्रा विजयघोषविप्रेण महामुनिर्नापि रुष्टो नापि तुष्टः 'किन्तु समतया स्थित इति भाव.' यतोऽसौ उत्तमार्थो मोक्षस्तद्गवेषको मुक्तिं विनाऽन्यत्र निःस्पृह इत्यर्थ ॥ ९ ॥

नन्नट्ठं पाणहेउं वा नवि निव्वाहणाय वा । तेसि विमोक्खणट्ठाए इमं वयणमब्बवी ॥ १० ॥

व्याख्या—न नैवान्नार्थं, नापि पानहेतुं वा, नापि निर्वाहणाय वा वस्त्र–तैलाभ्यङ्गादिना यापनार्थं 'सर्वत्रात्मन इति गम्यते' तर्हि किमर्थम्? इत्याह–तेषां याज्ञिकानां विमोक्षणार्थाय यथा कथममी मुक्तिमाप्नुयुरित्यर्थमिदं वक्ष्यमाणं वचनमब्रवीदिति ॥ १० ॥

तदेवाह—

नवि जाणसि वेयमुहं नवि जन्नाण जं मुहं। नक्खत्ताण मुहं जं च जं च धम्माण वा मुहं ॥ ११ ॥

व्याख्या—अपरेवार्थत्वान्नैव जानासि वेदानां मुखमिव मुखं यत् तेषु प्रधानम्। नापि यज्ञानां मुखमुपायः। नक्षत्राणां मुखं प्रधानं यच्च धर्माणां मुखमुपायस्तदनेन तस्य वेदाद्यनभिज्ञत्वमुक्तम् ॥ ११ ॥

पात्रानभिज्ञत्वमाह—

जे समत्था समुद्धत्तुं परं अप्पाणमेव य। न ते तुमं वियाणासि अह जाणासि तो भण ॥ १२ ॥

व्याख्या—ये समर्थाः समुद्धर्तुं परमात्मानमेव च न तांस्त्वं विशेषेण जानासि। अथ जानासि ततो भणेत्याक्षेप उक्तः ॥ १२ ॥

एवमाक्षिप्ते मुनौ स किं कृतवान्? इत्याह—

तस्सक्खेव–पमोक्खं च अचयंतो तहिं दिओ। सपरिसो पंजलीहोउं पुच्छई तं महामुणिं ॥ १३ ॥

व्याख्या–तस्य जयघोषमुनेराक्षेप. प्रश्नस्तस्य प्रमोक्षः प्रत्युत्तर 'चः पूरणे' 'अचयंतो' त्ति अशक्नुवन् 'दातुमिति गम्यते' तस्मिन् यज्ञे द्विज. सपरिषत् सभान्वितः प्राञ्जलिर्योजितकरसम्पुटो भूत्वा पृच्छति तं महामुनिम् ॥१३॥

किं पृष्टवान् ? इत्याह—

वेयाण च मुह बूहि बूहि जन्नाण ज मुहं । नक्खत्ताण मुहं बूहि बूहि धम्माण वा मुहं ॥ १४ ॥

व्याख्या–वेदानां च मुखमङ्ग ब्रूहि व्यक्तमभिधेहि, ब्रूहि कथय यज्ञानां यन्मुखं, नक्षत्राणां मुखं ब्रूहि, ब्रूहि धर्माणा वा मुखं । पुन पुनर्ब्रूहीति कथनमत्यादरख्यापनार्थम् ॥ १४ ॥

जे समत्था समुद्धत्तुं परमप्पाणमेव य । एयं मे संसयं सव्वं साहू ! कहसु पुच्छिओ ॥ १५ ॥

गतार्था नवरमेतदुक्तरूपं मे मम संशयं वेदमुखादि हे साधो ! कथय पृष्ट. सन् ॥ १५ ॥

एवं पृष्टो मुनिराह—

अग्गिहोत्तमुहा वेया जन्नट्ठी वेयसां मुहं । नक्खत्ताण मुहं चंदो धम्माणं कासवो मुहं ॥ १६ ॥

व्याख्या–अग्निहोत्रमग्निकारिका सा चेह

"कर्मेन्धन समाश्रित्य दृढा सद्भावनाहुति । धर्मध्यानाग्निना कार्या दीक्षितेनाग्निकारिका" ॥ १ ॥

इत्यादिरूपा परिगृह्यते । तदेव मुखं प्रधानं येषां तेऽग्निहोत्रमुखा वेदाः । वेदानां हि दध्यादेरिवं नवनीतमारण्यकमेव प्रधानम् । उक्तं च—

"नवनीतं यथा दध्नश्चन्दनं मलयादिव । औषधिभ्योऽमृतं यद्वद् वेदेष्वारण्यकं तथा" ॥ १ ॥

तत्र च—"सत्यं तपश्च सन्तोषः क्षमा चारित्रमार्जवम् । श्रद्धा धृतिरहिंसा च संवरश्च तथा परः" ॥ २ ॥

इति दशप्रकारधर्मोऽग्निहोत्रं, तथा यज्ञः प्रस्तावाद् भावयज्ञः संयमरूपस्तदर्थी 'वेयस' त्ति वेदेन हेतुना अस्यन्ति क्षिपन्त्यशुभकर्माणीति निरुक्त्या वेदसो भावयागास्तेषां मुखमुपायस्ते हि सत्येव यज्ञार्थिनि प्रवर्तन्ते, भावयागानां भावयागार्थी मुनिरेव मुखमित्यर्थः । नक्षत्राणां मुखं प्रधानं चन्द्रस्तस्यैव तदधिपतित्वात् । धर्माणां काश्यपो भगवान् ऋषभदेवो मुखमुपायस्तस्यैवादितस्तत्प्ररूपकत्वात्, तथा चारण्यकम्—ऋषभ एव भगवान् ब्रह्मा तेन भगवता ब्रह्मणा स्वयमेवाऽऽचीर्णानि प्रणीतानि ब्रह्माणीत्यादि । किञ्च सकलपुराणमुख्यं ब्रह्माण्डपुराणं तत्राप्युक्तम्—"इह हि इक्ष्वाकुकुलवंशोद्भवेन नाभिसुतेन मरुदेव्या नन्दनेन महादेवेन ऋषभेण दशप्रकारो धर्मः स्वयमेव चीर्णः केवलज्ञानलम्भाच्च निर्ग्रन्थादिमहर्षीणां प्रणीतस्त्रेतायामादौ" इत्याह ॥ १६ ॥

काश्यपस्यैव माहात्म्यख्यापनतो धर्ममुखत्वमाह—

जहा चंदं गहाईया चिट्ठंती पंजलीउडा । वंदमाणा नमंसंता उत्तमं मणहारिणो ॥ १७ ॥

व्याख्या—यथा चन्द्रं ग्रहादिकाः 'आदिशब्दान्नक्षत्रादिग्रहः' प्राञ्जलयो योजितकरसम्पुटा वन्दमानाः स्तुवन्तो

नमस्यन्तो नमस्कुर्वन्त उत्तमं प्रधानं 'मणहारिणो' त्ति मनोहारिणो विनीततया प्रभुचित्ताऽऽक्षेपकारिणस्तिष्ठन्तीति सम्बन्ध. 'तथैनमपि भगवन्त देवेन्द्रप्रमुखा इत्युपस्कार ' ॥ १७ ॥

चतु.प्रश्नोत्तरमभिधाय पञ्चममाह—

**अजाणगा जन्नवाई विज्जामाहणसंपया। गूढा सज्झायतवसा भासच्छन्ना इवग्गिणो ॥ १८ ॥**

व्याख्या–अज्ञा न तत्त्ववेदिन के ते ? यज्ञवादिनो ये भवत पात्रत्वेनाभिमता । कासाम् ? इत्याह 'विज्जामाहणसंपय' त्ति 'सूत्रत्वात् सुव्यत्यय.' विद्याब्राह्मणसम्पदां विद्याश्चारण्यकब्रह्माण्डपुराणाख्यधर्मशास्त्रात्मिकास्ता एव ब्राह्मणसम्पदस्तासा, तात्त्विकब्राह्मणाना हि निष्किञ्चनत्वेन विद्या एव सम्पदस्तद्विज्ञत्वे च कथमेते बृहदारण्यकाद्युक्तदशविधधर्मवेदिनो द्रव्ययागमेवं कुर्यु । तथा गूढा बहि सवृतिमन्त. स्वाध्यायतपसा वेदाध्ययनोपवासादिना भस्मच्छन्ना अग्नय इव बहि शान्ता इवाभान्त्यन्तश्च कषायवत्तया ज्वलन्ति । एवं च न तत्त्वतो भवदभिमतं ब्राह्मण्यं तदभावाच्चात्मपरोद्धरणेन पात्रत्वं दूरापास्तमेवेति भाव ॥ १८ ॥

तर्हि कस्य ब्राह्मणस्य पात्रत्वम् ? इत्याह—

**जो लोए बंभणो वुत्तो अग्गी वा महिओ जहा। सया कुसलसंदिट्ठं त वयं बूम माहण ॥ १९ ॥**

व्याख्या–यो लोके ब्राह्मण उक्तः 'कुशलैरिति गम्यते' 'वेति पूरणे' यथेत्यौपम्ये भिन्नक्रमश्च' । ततो यथाऽग्निः

'यत्–तदोर्नित्याभिसम्बन्धात्' तथा महितः सन्, सदा कुशलैस्तत्त्वाभिज्ञैः सन्दिष्टः कथितः कुशलसन्दिष्टस्तं, तं वयं ब्रूम ब्राह्मणम् । यदेव हि लोके विज्ञोपदिष्टं तदेव वस्त्वङ्गीकारार्हमिति भावः ॥ १९ ॥

कुशलसन्दिष्टस्वरूपब्राह्मणमाह—

जो न सज्जइ आगंतुं पव्वयंतो न सोयई । रमइ अज्जवयणंमि तं वयं बूम माहणं ॥ २० ॥

व्याख्या—यो न स्वजते नाऽभिष्वङ्गं करोति आगन्तुं प्राप्तुं 'स्वजनादिस्थानमितिगम्यते' । आगतो वा तत एव प्रव्रजन् स्थानान्तरं गच्छन्न शोचते यथा—कथमहममुना विना भविष्यामि ? अत एव रमते आर्याणामर्हतां वचनमागमस्तस्मिन् । को भावः ? सर्वत्र निःस्पृहत्वेनागमोक्तानुष्ठान एव रतिमान् भवति तं वयं ब्रूमो ब्राह्मणम् ॥ २० ॥

तथा—

जायरूवं जहामट्ठं निद्धंतमलपावगं । राग–द्दोस–भयाईयं तं वयं बूम माहणं ॥ २१ ॥

व्याख्या—जातरूपं स्वर्णं 'जहामट्ठं' ति 'यथेत्यौपम्ये' आमृष्टं तेजःप्रकर्षारोपणाय मनःशैलादिना परामृष्टं, अनेनास्य बाह्यो गुण उक्तः । 'निद्धंत' त्ति 'सूत्रत्वात् पदव्यत्यये' पावकेन वह्निना निध्मातं दग्धं मलं किट्टमस्येति पावकनिध्मातमलमित्यनेन चान्तरस्ततो जातरूपवद् बाह्याभ्यन्तरगुणान्वितोऽत एव राग–द्वेष–भयातीतश्च यस्तं वयं ब्रूमो ब्राह्मणम् ॥ २१ ॥

किञ्च—

तसपाणे वियाणित्ता संगहेण य थावरे । जो न हिंसइ तिविहेणं तं वय बूम माहणं ॥ २२ ॥

व्याख्या–त्रसप्राणिनो विज्ञाय सङ्ग्रहेण सङ्क्षेपेण 'चशब्दाद् विस्तरेण च' तथा स्थावरान् यो न हिनस्ति न व्यापादयति त्रिविधेन 'मनो–वाक्–काययोगेनेति गम्यम्' तं वयं ब्रूमो ब्राह्मणम् । यदुक्तमारण्यके—

"यदा न कुरुते पाप सर्वभूतेषु दारुणम् । कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा" ॥ १ ॥ २२ ॥

तथा—

कोहा वा जइ वा हासा लोभा वा जइ वा भया । मुसं न वयई जो उ तं वय बूम माहणं ॥ २३ ॥

व्याख्या–क्रोधादिभ्यो मृषा न वदति यस्तं वयं ब्रूमो ब्राह्मणमिति । इह च मानस्य क्रोधो मायायाश्च लोभ उपलक्षणं प्रायस्तत्सहचरितत्वात् तयो. । इदमप्यारण्यकेऽभिहितम्—

"यदा सर्वानृतत्यक्त मिथ्याभाषाविवर्जितम् । अनवद्य च भाषेत ब्रह्म सम्पद्यते तदा" ॥ १ ॥ २३ ॥

तथा—

चित्तमंतमचित्तं वा अप्पं वा जइ वा बहु । न गिण्हइ अदत्तं जो तं वयं बूम माहणं ॥ २४ ॥

व्याख्या–चित्तवद् द्विपदादि, अचित्तं वा सुवर्णादि, अल्पं वा सङ्ख्यया प्रमाणेन च स्तोकं यदि वा बहु ताभ्यामेव प्रचुरं न गृह्णात्यदत्तं यस्तं वयं ब्रूमो ब्राह्मणम् । इदमप्युक्तमारण्यके—

"परद्रव्यं यदा दृष्ट्वा आकुले ह्यथवा रहे । धर्मकामो न गृह्णाति ब्रह्म सम्पद्यते तदा" ॥ १ ॥ २४ ॥

तथा—

दिव्व–माणुस्स–तेरिच्छं जो न सेवइ मेहुणं । मणसा काय–वक्केणं तं वयं बूम माहणं ॥ २५ ॥

व्याख्या–दिव्यविषयत्वाद् दिव्यं, मानुषं, तैरश्चम् 'एषां द्वन्द्वे' दिव्य–मानुष–तैरश्चं यो न सेवेत मैथुनं मनः–काय–वाक्यैस्तं वयं ब्रूमो ब्राह्मणम् । तथोक्तम्—

"देव–मानुष–तिर्यक्षु मैथुनं वर्जयेद् यदा । कामरागविरक्तश्च ब्रह्म सम्पद्यते तदा" ॥ १ ॥ २५ ॥

अपि च—

जहा पोमं जले जायं नोवलिप्पइ वारिणा । एवं अलित्तो कामेहिं तं वयं बूम माहणं ॥ २६ ॥

व्याख्या–यथा पद्मं कमलं जले जातमुत्पन्नं तत्परित्यागेनोपरि व्यवस्थानतोऽपि नोपलिप्यते न श्लिष्यति वारिणा जलेन । एवं पद्मवदलिप्तोऽश्लिष्टः कामैरेव शब्दादिभिस्तन्मध्योत्पन्नोऽपि तैरेव वृद्धिं नीतोऽपि यस्तं वयं ब्रूमो ब्राह्मणम् । तथा च तत्रोक्तम्—

"यदा सर्वं परित्यज्य नि सङ्गो निष्परिग्रह । निश्चिन्तश्च चरेद् धर्मं ब्रह्म सम्पद्यते तदा" ॥ १ ॥ २६ ॥

इत्थं मूलगुणयोगात् तात्त्विक ब्राह्मणमुक्त्वोत्तरगुणयोगतस्तमाह—

अलोलुयं मुहाजीवी अणगार अकिंचण । असंसत्त गिहत्थेसु त वय बूम माहण ॥ २७ ॥

व्याख्या—अलोलुपमाहारादिष्वलम्पट 'सुब्व्यत्ययात्' मुधाजीविनमज्ञातोञ्छवृत्तिमनगारमकिञ्चनमसंसक्तमसम्बद्ध के. ? गृहस्थैः 'तृतीयाऽर्थे सप्तमी' तमेवंविधमपि वय ब्रूमो ब्राह्मणम् ॥ २७ ॥

क्वचिदत्र पाठान्तरम्—

जहित्ता पुव्वसंजोग नाइसंगे य बंधवे । जो न सज्जइ एएसु तं वय बूम माहण ॥ २८ ॥

व्याख्या—त्यक्त्वा पूर्वसंयोगं मात्रादिसम्बन्धं ज्ञातिसंयोगान् स्वस्रादिसम्बन्धांश्च तथा बान्धवांश्च यो न सजति नाभिष्वङ्ग करोति यस्तमित्यादि स्पष्टम् । अनेन चातिनि स्पृहतोक्तोत्तरगुणा अप्याक्षिप्ता. ॥ २८ ॥

वेदाध्ययन—यागादिकृत पात्रत्व—ब्राह्मणत्वनिषेधमाह—

पसुबंधा सव्ववेया जट्ठं च पावकम्मुणा । न त तायंति दुस्सील कम्माणि बलवंतिह ॥ २९ ॥

व्याख्या—पशूनां छागानां बन्धो विनाशाय नियमन यैर्हेतुभिस्तेऽमी पशुबन्धा 'श्वेत छागमालभेत वायव्या भूतिकामः' इत्यादिवाक्योपलक्षिता', न तु ये 'आत्मा रे ज्ञातव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिवाक्योपलक्षिताः । सर्व-

वेदा ऋग्वेदादयः 'जट्ठं'ति इष्टं यजनं 'चः समुच्चये' पापकर्मणा पापहेतुभूतपशुबन्धाद्यनुष्ठानेन । न नैव तं वेदाध्यातारं यष्टारं वा त्रायन्ते रक्षन्ति 'भवादिति गम्यम्' । किं विशिष्टं? दुःशीलं ताभ्यामेव हिंसादिप्रवर्तनेन दुराचारं यतः कर्माणि बलवन्ति दुर्गतिनयनं प्रति समर्थानीह भवदागमाभिहिते वेदाध्ययने यजने च 'भवन्तीति गम्यते' पशुवधप्रवर्तकत्वेन तयोः कर्मपोषकत्वादिति भावः । ततो नैतद्योगात् पात्रभूतो ब्राह्मणः किन्तु पूर्वोक्तगुण एवेति भावः ॥ २९ ॥

किञ्च—

नवि मुंडिएण समणो न ॐकारेण बंभणो । न मुणी रन्नवासेणं कुसचीरेण न तावसो ॥ ३० ॥

व्याख्या–नापि मुण्डितेन स्वकेशापनयनेन समं मनोऽस्येति निरुक्त्या श्रमणो निर्ग्रन्थः । न चोङ्कारेण 'उपलक्षत्वात् 'ॐभूर्भुवस्वः' इत्याद्युच्चारणरूपेण ब्राह्मणः । तथा न मुनिररण्यवासेन । कुशो दर्भविशेषस्तन्मयं चीवरं कुशचीवरं 'वल्कलोपलक्षणमेतत्' तेन न तापसो 'भवतीति सर्वत्र योज्यम्' ॥ ३० ॥

तर्हि ते कथं भवन्ति ? इत्याह—

समयाए समणो होइ बंभचेरेण बंभणो । नाणेण य मुणी होइ तवेण होइ तावसो ॥ ३१ ॥

व्याख्या–समतया राग–द्वेषाभावरूपया श्रमणो भवति । ब्रह्मणश्चरणं ब्रह्मचर्यं ब्रह्म च द्विधा । यदुक्तम्—

"द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" ॥ १ ॥

इह च प्रागुक्ताहिंसाविरत्यादिरूपं परं ब्रह्म गृह्यते, तेन ब्राह्मण· । ज्ञानेन हितावबोधरूपेण मुनि· । तपसा बाह्याभ्यन्तरभेदभिन्नेन भवति तापस· ॥ ३१ ॥

तथा—

कम्मुणा बम्भणो होइ कम्मुणा होइ खत्तिओ । वइसो कम्मुणा होइ सुद्दो हवइ कम्मुणा ॥ ३२ ॥

व्याख्या—कर्मणा क्रियया भवति ब्राह्मण । उक्तं हि—

"क्षमा दान दमो ध्यान सत्य शौच धृतिर्घृणा । ज्ञान—विज्ञानमास्तिक्यमेतद् ब्राह्मणलक्षणम्" ॥ १ ॥

कर्मणा क्षतत्राणलक्षणेन क्षत्रिय· । वैश्य· कर्मणा कृषि—पशुपाल्यादिना भवति । शूद्रो भवति कर्मणा शोचनादिहेतुप्रैपादिसम्पादनरूपेण । कर्माभावे हि ब्राह्मणव्यपदेशोऽसद्रूप एव । ब्राह्मणप्रक्रमेऽपि शेपाभिधान व्याप्तिदर्शनार्थम् ॥ ३२ ॥

सर्वज्ञोपज्ञतामाह—

एए पाउकरे बुद्धे जेहिं होइ सिणायओ । सव्वकम्मविणिमुक्कं तं वयं बूम माहणं ॥ ३३ ॥

व्याख्या—एताननन्तरोक्तानहिंसाद्यर्थान् प्रादुरकार्षीत् प्रकटितवान् बुद्धोऽवगततत्त्वो यैर्भवति स्नातक· केवली सर्वकर्मविनिर्मुक्त· प्रत्यासन्नमुक्तितया 'सुव्व्यत्ययादत्र प्रथमाऽर्थे द्वितीया' तत्त्वतः स्नातक तमुक्तगुणं वा वयं ब्रूमो ब्राह्मणम् ॥ ३३ ॥

उपसंहर्तुमाह—

एवं गुणसमाउत्ता जे भवंति दिउत्तमा । ते समत्था उ उद्धत्तुं परं अप्पाणमेव य ॥ ३४ ॥

व्याख्या–एवं पूर्वोक्तप्रकारेण गुणैरहिंसाऽऽदिभिः समायुक्ताः सहिता ये भवन्ति द्विजोत्तमास्ते समर्था उद्धर्तुं 'भवादिति गम्यम्' अर्थान्मुक्तिपदे व्यवस्थापयितुं परमन्यमात्मानमेव चेति ॥ ३४ ॥

इत्युक्त्वा स्थिते मुनौ—

एवं तु संसए छिन्ने विजयघोसे य माहणे । समुदाय तओ तं तु जयघोसं महामुणिं ॥ ३५ ॥

व्याख्या–एवं पूर्वोक्तप्रकारेण 'तुर्वाक्यान्तरोपन्यासे' संशये छिन्नेऽपनीते विजयघोषो ब्राह्मणः 'समुदाय'त्ति 'आर्षत्वात्' समादाय सम्यग् गृहीत्वाऽवधार्येत्यर्थः । 'तओ' त्ति ततः संशयच्छेदानन्तरं 'तं तु' त्ति तं जयघोषं महामुनिं एष मम भ्राता एष एव महामुनिरित्यवधार्येत्यर्थः ॥ ३५ ॥

किं कृतवान् ? इत्याह—

तुट्ठे य विजयघोसे इणमुदाहु कयंजली । माहणत्तं जहाभूयं सुट्ठु मे उवदंसियं ॥ ३६ ॥

व्याख्या–तुष्टः परितोषवान् 'चः पूरणे' विजयघोष इदं वक्ष्यमाणं 'उदाहु' त्ति उदाह ब्रूते कृताञ्जलिः ।

तदेवाह-ब्राह्मणत्व यथाभूत यथाऽवस्थितं सुष्ठु शोभन यथा स्यान्मे ममोपदर्शितं प्रकटितम् ॥ ३६ ॥

किञ्च—

तुब्भे जईया जन्नाण तुब्भे वेयविऊ विऊ । जोइसंगविऊ तुब्भे तुब्भे धम्माण पारगा ॥ ३७ ॥

व्याख्या-यूयं 'जईय'त्ति यष्टारो यज्ञानाम् । यूयं वेदविदो वेदज्ञा' 'विऊ' त्ति विद्वांस. । ज्योतिषाङ्गविदो यूयम् । यूयं धर्माणा सदाचाराणा पारगा । भवतामेव निर्वाहितसदाचारत्वादिति भाव ॥ ३७ ॥

तथा—

तुब्भे समत्था उद्धत्तु परं अप्पाणमेव य । तमणुग्गहं करेहम्हं भिक्खेण भिक्खुउत्तमा ! ॥ ३८ ॥

व्याख्या-यूयं समर्था उद्धर्तुं परमात्मानमेव च युष्माकमेव तात्त्विकगुणोपेतत्वात् । 'तं'ति तस्मादनुग्रहमुपकारं कुरुतास्माक 'भिक्खेणं'ति भिक्षाग्रहणेन हे भिक्षूत्तम यतिप्रधान ! ॥ ३८ ॥

मुनिराह—

न कज्जं मज्झ भिक्खेणं खिप्प निक्खमसू दिया ! । मा भमिहिसि भयावत्ते घोरे संसारसागरे ॥ ३९ ॥

व्याख्या-न कार्यं न प्रयोजनं मम भिक्षया, किन्तु क्षिप्रं शीघ्रं निष्काम प्रव्रज- द्विज ! भवन्निष्क्रमणेनैव मम

कार्यमिति भावः। किम्? इत्यत आह—मा भ्रमिष्यसि भयानीहलोकभयादीन्यावर्ता यस्मिन् स तथा तत्र तथाविधे घोरे संसारसमुद्रे ॥ ३९ ॥

उवलेवो होइ भोगेसु अभोगी नो विलिप्पई। भोगी भमइ संसारे अभोगी विप्पमुच्चई ॥ ४० ॥

व्याख्या—उपलेपः कर्मोपचयरूपो भवति भोगेषु शब्दादिषु 'भुज्यमानेष्विति गम्यते'। अभोगी शब्दादिभोगनिर्मुक्तौ नोपलिप्यते कर्मणोपदिह्यते। अत एव भोगी भ्रमति संसारे। अभोगी विप्रमुच्यते मुक्तिं प्राप्नोतीत्यर्थः ॥४०॥

एतदेव दृष्टान्तद्वारेणाह—

उल्लो सुक्को य दो छूढा गोलया मट्टियामया। दो वि आवडिया कुड्डे जो उल्लो सो त्थ लग्गई ॥ ४१ ॥

व्याख्या—'उल्ल'त्ति आर्द्रः, शुष्कश्चानार्द्रो द्वावुभौ 'छुढ'त्ति क्षिप्तौ गोलकौ पिण्डौ मृत्तिकामयौ द्वावप्यापतितौ प्राप्तौ कुड्ये भित्तौ। ततः किम्? इत्यत आह—य आर्द्रः सोऽत्रेत्यनयोर्द्वयोर्मध्ये लगति श्लिष्यति 'प्रक्रमात् कुड्ये' ॥४१॥

दार्ष्टान्तिकयोजनामाह—

एवं लग्गंति दुम्मेहा जे नरा कामलालसा। विरत्ता उ न लग्गंति जहा से सुक्कगोलए ॥ ४२ ॥

व्याख्या—एवं लगन्ति 'प्रस्तावात् कर्मणा' दुर्मेधसो दुर्बुद्धयो ये नराः कामलालसा विषयलम्पटाः, विरक्तास्तु पुनः कामभोगपराङ्मुखा न लगन्ति न कर्मणा श्लिष्यन्ते यथा शुष्को गोलक इति ॥ ४२ ॥

इत्थमुक्तो यदसौ कृतवांस्तदाह—

एवं सो विजयघोसो जयघोसस्स अतिए । अणगारस्स निक्खंतो धम्मं सोच्चा अणुत्तरं ॥ ४३ ॥

व्याख्या—एवं स विजयघोषो ब्राह्मणो जयघोषस्यान्तिके समीपे अनगारस्य यतेर्निष्क्रान्तः प्रव्रजितो धर्ममहिंसादिरूपं श्रुत्वा अनुत्तरं प्रधानम् ॥ ४३ ॥

अध्ययनार्थोपसंहारेणानयोर्निष्क्रमणफलमाह—

खवित्ता पुव्वकम्माइं संजमेण तवेण य । जयघोस—विजयघोसा सिद्धिं पत्ता अणुत्तरं ॥ ४४ ॥ ति बेमि ॥

व्याख्या—क्षपयित्वा पूर्वकर्माणि संयमेन तपसा च जयघोष—विजयघोषौ सिद्धिं प्राप्तावनुत्तरामिति ब्रवीमीति पूर्ववत् ॥ ४४ ॥

॥ इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां यज्ञीयाख्यं पञ्चविंशमध्ययनं समाप्तम् ॥ २५ ॥

# अथ षड्विंशं सामाचार्याख्यमध्ययनम् ।



प्रागध्ययने ब्रह्मगुणा उक्तास्तद्वांश्च यतिरेव । तेन चावश्यं सामाचारी कार्येति तदभिधायकं षड्विंशमध्ययनमारभ्यते । तस्यादिमां गाथामाह—

सामायारिं पवक्खामि सव्वदुक्खविमोक्खणिं । जं चरित्ता ण निग्गंथा तिन्ना संसारसागरं ॥ १ ॥

व्याख्या—सामाचारीं यतीतिकर्तव्यतारूपां प्रवक्ष्यामि कथयिष्यामि । किं लक्षणां ? सर्वदुःखविमोक्षिणीं शारीर—मानसानां सर्वदुःखानां विशेषेण मोचनीयां दूरीकरणयोग्यामत एव यां सामाचारीं चरित्वाऽऽसेव्य 'णमित्यलङ्कारे'निर्ग्रन्था बाह्याभ्यन्तरभेदभिन्नग्रन्थान् छेत्तारः साधवः संसारसागरं भवसमुद्रं तीर्णा मुक्तिं प्राप्ता इत्यर्थः 'उपलक्षणत्वात् तरन्ति तरिष्यन्ति चेति' ॥ १ ॥

पढमा आवस्सिया नामं बिइया य निसीहिया । आपुच्छणा य तइया चउत्थी पडिपुच्छणा ॥ २ ॥
पंचमा छंदणा नाम इच्छाकारो य छट्ठओ । सत्तमो मिच्छकारो य तहक्कारो य अट्ठमो ॥ ३ ॥
अब्भुट्ठाणं नवमं दसमा उवसंपया । एसा दसंगा साहूणं सामायारी पवेइया ॥ ४ ॥

आसां व्याख्या—एषाऽनन्तरोक्ता दशाङ्गाऽऽवश्यिक्यादिदशावयवा दशधा सा साधूनां सामाचारी प्रकर्पेण वेदिता प्रवेदिता कथिताऽर्हद्भिस्तीर्थकरैर्गणधरैर्वा। तत्र प्रथमाऽऽवश्यिकी, ततो नैपेधिकी, आप्रच्छना, प्रतिप्रच्छना, छन्दना, इच्छाकार , मिथ्याकार., तथाकार , अभ्युत्थानम्, उपसम्पच्चेति शेपं स्पष्टमिति गाथात्रयार्थः ॥२-३-४॥

एतामेव प्रत्यवयव विपयप्रदर्शनपूर्वकं कर्तव्यतया वक्तुमाह—

गमणे आवस्सियं कुज्जा ठाणे कुज्जा निसीहिय । आपुच्छणा सयं करणे परकरणे पडिपुच्छणा ॥ ५॥
छद्णा द्व्वजाएण इच्छाकारो य सारणे । मिच्छाकारो य निदाए तहक्कारो य पडिस्सुए ॥ ६ ॥
अब्भुट्ठाणं गुरूपूया अच्छणे उवसंपया । एव दुपंचसंजुत्ता सामायारी पवेइया ॥ ७ ॥

आसां व्याख्या—गमने तथाविधालम्बनत उपाश्रयात् गुर्ववग्रहाद् वा बहिर्निःसरणे, आवश्यकेष्ववश्यकर्तव्येषु भवाऽऽवश्यिकी ता कुर्यात्। ततो निर्गत्य स्थाने पुनरुपाश्रयादौ 'प्रविशन्निति शेपः' कुर्यात् पापानुष्ठाननिपेधात्मिका नैपेधिकीमेता कृत्वैव प्रवेष्टव्यमिति। तत्र च तिष्ठतो भिक्षाऽटनादिकार्योत्पत्तावहमिदं कुर्यां ? नवेत्येवं गुर्वादे' 'आङिति' सर्वकृत्याभिव्याप्त्या प्रच्छना आपृच्छना स्वयमित्यात्मनः करणे कार्यस्येति। गुर्वादिष्टेन परस्यान्यस्य कार्यकरणे पुन प्रवृत्तिकाले गुर्वादेः प्रच्छना प्रतिप्रच्छना, स हि कदाचित् कार्यान्तरमप्यादिशेदन्यतो

वा कार्यं सिद्धं स्यादिति प्रतिपृच्छ्यते, किञ्चोच्छ्रास-निश्वासौ मुक्त्वा स्व-परसम्बन्धिषु कार्येषु पूर्वं प्रच्छना, प्रवृत्तिकाले पुनः प्रच्छनेति प्रतिप्रच्छना ॥ छन्दना शेषयतिनिमन्त्रणात्मिका निस्तितीर्षुणा कार्या । यदागमः—

"साहवो तो वि यत्तेणं निमंतिज्ज जहक्कमं । जइ मे अणुग्गहं कुज्जा साहू हुज्जामि तारिओ" ॥ १ ॥ इति

केन? इत्याह—द्रव्यजातेनाशनादिना 'प्राग्गृहीतेनेति गम्यम्' । तस्यामपि प्रयोज्य इच्छाकार इच्छा स्वाभिप्रायस्तया करणं कार्यस्येच्छाकारः, सारणे स्वपरयोरौचित्येन कार्यप्रवर्तने, तत्र स्वसारणे यथेच्छाकारेण मद्भिक्षाऽटितलब्धमन्नं संविभजत भवच्चिकीर्षितं कार्यमहं करोमीत्यादि; परसारणे मम पात्रलेपादीच्छाकारेण कुरुत, न बलाभियोगादिनेति । मिथ्याकारो मिथ्येदमिति प्रतिपत्तिः, स चात्मनो निन्दायां वितथाचरणे हि धिगिदं मिथ्या मया कृतमिति । अस्मिन् कृतेऽपि बृहत्तरदोषसम्भवे गुर्वादिष्टालोचनायां तथाकरणं तथाकार इदमित्थमेवेत्यभ्युपगमः, क्व? इत्याह—प्रतिश्रवणे गुरौ आलोचनं वाचनादिकं वा यच्छत्येवमेतदित्यभ्युपगम इति ॥ अभीत्याभिमुख्येनोत्थानमुद्यमनमभ्युत्थानं तच्च गुरुपूजायाम्, सा च गौरवार्हाणामाचार्यादीनामुचिताहारभेषजादिसम्पादनम् ; अत्र चाभ्युत्थानं निमन्त्रणारूपमेव गृह्यते, अभ्युत्थानस्थाने निर्युक्तिकृता निमन्त्रणाया एवोक्तत्वात्; गृहीतेऽन्नादौ छन्दना, अगृहीते तु निमन्त्रणेत्यनयोर्भेदः । 'अच्छणे'त्ति आसने प्रक्रमादाचार्यान्तरादिपार्श्वावस्थाने उपसम्पत् इयन्तं कालं मया भव-

१ साधूंस्ततोऽपि यत्नेन निमन्त्रयेद् यथाक्रमम् । यदि मेऽनुग्रहं कुर्यात् साधुर्भवामि तारितः ॥ १ ॥

दन्तिके आसितव्यमित्येवरूपा ज्ञानाद्यर्थं गच्छान्तरे उपसम्पद् ग्राह्येति । एव 'दुपंचसंजुत्त'त्ति आर्षत्वाद् द्विपञ्चकसंयुक्ता दशसङ्ख्यासहिता सामाचारी प्रवेदितोपदिष्टा 'गुरुभिः शिष्यायेति शेषः' इति गाथात्रयार्थ ॥ ५–६–७ ॥

'इच्छा–मिच्छा–तहकारो' इत्यादि सामाचारीक्रमप्रसिद्धावपि सूत्रे क्रमोल्लङ्घनं सामाचार्या यथाविषयं सर्वदा सर्वेषां कृत्यत्वेन पूर्वापरभावस्याभाव इति प्रदर्शनार्थमिति दशविधसामाचारीमभिधायौघसामाचारीं विवक्षुराह—

पुव्विल्लंमि चउब्भागे आइच्चंमि समुट्ठिए । भंडयं पडिलेहित्ता वंदित्ता य तओ गुरुं ॥ ८ ॥
पुच्छिज्जा पजलिउडो किं कायव्व मए इह । इच्छं निओइउं भंते ! वेयावच्चे व सज्झाए ॥ ९ ॥
वेयावच्चे निउत्तेणं कायव्वमगिलायओ । सज्झाए वा निउत्तेणं सव्वदुक्खविमोक्खणे ॥ १० ॥

आसां व्याख्या—'पुव्विल्लमि'त्ति पूर्वस्मिन् प्रथमे बुद्ध्या विभक्तपूर्वदिक्सम्बद्धनभश्चतुर्थभागे सूर्ये समुद्गते । यथा किल दशाविरहितोऽपि पटः पट एवोच्यते न त्वन्यः । तथा किञ्चिदूनचतुर्भागे पादोनपौरुष्यामित्यर्थः । भाण्डकं पात्रकाद्युपकरणं प्रतिलिख्य चक्षुषा निरीक्ष्य 'उपलक्षणात् प्रमृज्य च' वन्दित्वा च ततो गुरुम् ॥ किम् ? इत्याह–पृच्छेत् पर्यनुयुञ्जीत गुरु यमग्रयायिनं कृत्वा याति तमेवं प्राञ्जलिपुटो योजितकरपुटो भोः ! गुरो ! किं कर्तव्यं मया इहास्मिन् समये ? इच्छामि वाञ्छामि 'निओइउं' त्ति 'अन्तर्भूतणयर्थत्वात्' नियोजयितुं 'युष्मा-

भिरात्मानमिति गम्यम्' भदन्त ! वैयावृत्त्ये ग्लानादीनां 'वाशब्दस्य भिन्नक्रमत्वात्' स्वाध्याये वा ॥ कृत्यमाह– वैयावृत्ये नियुक्तेन व्यापारितेन कर्तव्यं 'प्रक्रमाद् वैयावृत्यं' 'अगिलायओ'त्ति अग्लान्यैव शरीरश्रममविचिन्त्यैवेत्यर्थः । स्वाध्याये वा नियुक्तेन सर्वदुःखविमोक्षणे 'स्वाध्यायोऽग्लान्यैव कर्तव्य इति प्रक्रमः' इति गाथात्रयार्थः ॥ ८–९–१० ॥

औत्सर्गिकं दिनकृत्यमाह—

दिवसस्स चउरो भाए कुज्जा भिक्खू वियक्खणो। तओ उत्तरगुणे कुज्जा दिणभागेसु चउसु वि ॥११॥
पढमं पोरिसिं सज्झायं बीयं ज्झाणं ज्झियायई। तइयाए भिक्खायरियं पुणो चउत्थीइ सज्झायं ॥१२॥

अनयोर्व्याख्या—दिवसस्य चतुरो भागान् कुर्याद् 'बुद्ध्येति गम्यम्' ततश्चतुर्भागकरणानन्तरमुत्तरगुणान् मूलगुणापेक्षया स्वाध्यायादीन् कुर्याच्चतुर्ष्वपि दिनभागेषु ॥ क दिनभागे कमुत्तरगुणं कुर्याद् ? इत्याह—प्रथमां पौरुषीं 'आश्रित्येति शेषः' स्वाध्यायं वाचनाऽऽदिकं सूत्रपौरुषीत्वादस्याः 'कुर्यादिति क्रिया प्राक्तनाऽत्र योज्या'। द्वितीयां 'अर्थात् पौरुषीं' ध्यानं 'ज्झियायइ'त्ति ध्यायेत्, अर्थपौरुषीत्वादस्या ध्यानं चेहार्थविषय एव मनोव्यापारणं ध्यायेदिति च 'अनेकार्थत्वाद् धातूनां' कुर्यादित्यर्थः । इह च प्रतिलेखनाकालोऽल्पत्वान्न विवक्षितः 'उभयत्रापि 'कालाध्वनोरत्यन्तसंयोगे' इत्यनेन द्वितीया'। तृतीयायां भिक्षाचर्याम् 'उपलक्षणाद् भोजन–बहिर्गमनादि'।

चतुर्थ्यां स्वाध्यायम् 'उपलक्षणात् प्रतिलेखना स्थण्डिलप्रत्युपेक्षाऽऽदि' । कालापेक्षयैव सकलानुष्ठानस्य सफलत्वादिति गाथाद्वयार्थ ॥ ११-१२ ॥

प्रथमपौरुषीपरिज्ञानार्थमाह—

आसाढे मासे दुपया पोसे मासे चउप्पया । चित्तासोएसु मासेसु तिपया हवइ पोरिसी ॥ १३ ॥
अगुल सत्तरत्तेण पक्खेण य दुअंगुल । वड्ढए हायए वा वि मासेणं चउरगुलं ॥ १४ ॥

अनयोर्व्याख्या—आषाढे मासे पौरुषी प्रहरमान द्विपदा भवति । पौपे मासे चतुष्पदप्रमाणा छाया भवति तदा पौरुषी । चैत्रमासेऽथवाऽऽश्विनमासे त्रिपदा पौरुषी भवति ॥ सप्तरात्रेण 'दिनाविनाभावित्वाद् रात्रीणा' सप्ताहोरात्रेण 'सार्धेनेति शेप ' अङ्गुल, पक्षेण च द्व्यङ्गुल, मासेन च चतुरङ्गुलं वर्धते दक्षिणायने, हीयते चोत्तरायणे । किञ्च यदा केपुचिन्मासेपु चतुर्दशदिनै पक्ष स्यात् तदा सप्तरात्रेणाप्यङ्गुलवृद्धि-हान्या न कश्चिद् विरोधः ॥ १३-१४ ॥

दिनचतुर्दशकपक्षसम्भवमाह—

आसाढबहुलपक्खे भद्दवए कत्तिए य पोसे य । फग्गुण-वइसाहेसु य नायव्वा ओमरत्ताओ ॥१५॥

व्याख्या-सुगमैव, नवरं बहुलपक्षे इति भाद्रपदादिष्वपि सम्बध्यते।'ओम'त्ति अवमा न्यूना 'एकेन अहोरात्रेणेति शेप'' 'रत्त'त्ति पदैकदेशे पददर्शनादहोरात्रा एवं चैकैकदिनहान्या दिनचतुर्दशकेनैव कृष्णपक्ष एतेष्विति भावः ॥१५॥

पादोनपौरुष्याः प्रागुक्तायाः परिज्ञानोपायमाह—

जिट्ठामूले आसाढ—सावणे छहिं अंगुलेहिं पडिलेहा । अट्ठहिं बीयतइयंमी तइए दस अट्ठहिं चउत्थे ॥ १६ ॥

व्याख्या—ज्येष्ठमूले इति ज्येष्ठे आषाढे श्रावणे च षड्भिरङ्गुलैः प्रत्यहं प्रागुक्तपौरुषीमाने 'प्रक्षिप्तैरिति चेहोत्तरत्र च गम्यते' 'पडिलेह' त्ति पादोनपौरुषी प्रतिलेखनाकाल एवमाद्यत्रिके । तथाऽष्टभिः 'अङ्गुलैरिति सर्वत्रानुवर्तनीयम्' द्वितीयत्रिके भाद्रपदाश्वयुक्—कार्तिकलक्षणे । तृतीये त्रिके मार्गशीर्ष—पौष—माघात्मनि दशभिः । तथा अष्टभिश्चतुर्थे त्रिके फाल्गुन—चैत्र—वैशाखस्वरूपे 'प्रतिलेखनाकालः' इति सर्वत्र योज्यम् ॥ १६ ॥

पौरुष्याः स्थापना चेयम्—

| | | | | | |
|---|---|---|---|---|---|
| ज्येष्ठे | पद २ | अं० ४ | मार्गशीर्षे | पद ३ | अं० ८ |
| आषाढे | पद २ | | पौषे | पद ४ | |
| श्रावणे | पद २ | अं० ४ | माघे | पद ३ | अं० ८ |
| भाद्रपदे | पद २ | अं० ८ | फाल्गुने | पद ३ | अं० ४ |
| आश्विने | पद ३ | | चैत्रे | पद ३ | |
| कार्तिके | पद ३ | अं० ४ | वैशाखे | पद २ | अं० ८ |

पादोनपौरुष्याः स्थापना चेयम्—

| | | | | | |
|---|---|---|---|---|---|
| ज्येष्ठे | पद २ | अं० १० | मार्गशीर्षे | पद ४ | अं० ६ |
| आषाढे | पद २ | अं० ६ | पौषे | पद ४ | अं० १० |
| श्रावणे | पद २ | अं० १० | माघे | पद ४ | अं० ६ |
| भाद्रपदे | पद ३ | अं० ४ | फाल्गुने | पद ४ | |
| आश्विने | पद ३ | अं० ८ | चैत्रे | पद ३ | अं० ८ |
| कार्तिके | पद ४ | | वैशाखे | पद ३ | अं० ४ |

दिनकृत्यमुक्त्वा रात्रिकृत्यमाह—

रत्तिं पि चउरो भाए भिक्खू कुज्जा वियक्खणो । तओ उत्तरगुणे कुज्जा राइभागेसु चउसु वि ॥ १७ ॥
पढमं पोरिसि सज्झायं विइयं ज्झाणं झियायई । तइयाए निद्दमुक्खं तु चउत्थी भुज्जो वि सज्झायं ॥१८॥

गाथाद्वयमपि स्पष्टम्, नवरं रात्रिमपि न केवलं दिनमित्यपेरर्थः ॥ द्वितीया पौरुषीमाश्रित्येति प्राग्वत् । ध्यानं सूक्ष्मसूत्रार्थलक्षणं क्षितिवलयद्वीप–सागरादि वा । 'झियायइ'त्ति ध्यायेत् चिन्तयेत् । तृतीयायां प्रामिरुद्धाया निद्राया मोक्षो मुत्कलता निद्रामोक्षः स्वाप इत्यर्थः तं 'कुर्यादिति सर्वत्र योज्यम्' । चतुर्थ्यां पुनः स्वाध्यायं । वृषभापेक्ष चैतत् । सामस्त्येन तु प्रथम–चरमयामजागरणमेव सर्वेषाम् । यदागमः—

"सेंवेसि पढमजामे दोण्णि उ वसभाण आदिमा जामा । तईओ होइ गुरूण चउत्थओ होइ सव्वेसिं" ॥ १ ॥

शयनविधिश्चागमादवसेयः ॥ १७–१८ ॥

रात्रिचतुर्भागज्ञानोपायमाह—

जं नेइ जया रत्तिं नक्खत्तं तंमि नहचउब्भाए । संपत्ते विरमेज्जा सज्झायं पओसकालंमि ॥ १९ ॥

---

१ सर्वेषा प्रथमयामो द्वौ तु वृषभाणामाद्यौ यामौ । तृतीयो भवति गुरूणां चतुर्थको भवति सर्वेषाम् ॥ १ ॥

तम्मेव य नक्खत्ते गयण चउब्भागसावसेसंमि । वेरत्तियं पि कालं पडिलेहित्ता मुणी कुज्जा ॥ २० ॥

अनयोर्व्याख्या—यन्नयति प्रापयति 'समाप्तिमिति गम्यम्' यदा रात्रिं नक्षत्रं तस्मिन्नभश्चतुर्भागे सम्प्राप्ते विरमेन्निवर्तेत स्वाध्यायात् प्रदोषकाले रजनीमुखे 'प्रारब्धादिति शेषः' ॥ तस्मिन्नेव नक्षत्रे 'प्रक्रमान्नीते' क्व ? इत्याह—'गयण' त्ति 'लुप्तविभक्तिकत्वात्' गगने कीदृशे ? चतुर्भागेन गन्तव्येन सावशेषं सोद्धरितं चतुर्थभागसावशेषं तस्मिन्, वैरात्रिकं तृतीयमपि कालं प्रत्युपेक्ष्य प्रतिजागर्य मुनिः कुर्यात् । अपिशब्दात् स्वस्वसमये प्रादोषिकादि च कालं कुर्यात् 'करोतेः सर्वधात्वर्थत्वाद्' गृह्णीयात् । प्रथमादिषु नभश्चतुर्भागेषु सम्प्राप्ते नेतरि नक्षत्रे रात्रेः प्रथमादयः प्रहरा इति भाव इति गाथाद्वयार्थः ॥ १९–२० ॥

सामान्येन दिन–रजनिकृत्यमुक्त्वा विशेषतो दिनकृत्यमाह—

पुव्विल्लंमि चउब्भागे पडिलेहित्ता ण भंडगं । गुरुं वंदित्तु सज्झायं कुज्जा दुक्खविमोक्खणं ॥ २१ ॥

व्याख्या—पूर्वस्मिंश्चतुर्भागे प्रथमपौरुषीलक्षणे 'प्रक्रमाद् दिनस्य' प्रत्युपेक्ष्य भाण्डकं वर्षाकल्पाद्युपधिम् 'आदित्योदयसमये इति शेषः' गुरुं वन्दित्वा स्वाध्यायं कुर्याद् दुःखविमोक्षणम् ॥ २१ ॥

तथा—

पोरिसीए चउब्भागे वंदित्ता ण तओ गुरुं । अपडिक्कमित्ता कालस्स भायणं पडिलेहए ॥ २२ ॥

व्याख्या—पौरुष्या प्रथमपौरुष्याश्चतुर्थभागे 'अवशिष्यमाणे इति गम्यते' पादोनपौरुष्यामित्यर्थ । गुरून् वन्दित्वा भाजन प्रतिलेखयेदिति सम्बन्ध ॥ २२ ॥

अथ प्रतिलेखनाविधिमाह—

**मुहपोत्ति पडिलेहित्ता पडिलेहिज्ज गोच्छय । गोच्छगलइयंगुलिओ वत्थाइं पडिलेहए ॥ २३ ॥**

व्याख्या—मुखवस्त्रिका प्रतिलेख्य प्रतिलेखयेत् गोच्छकं पात्रकोपरिवर्त्युपकरणम् । ततश्च 'गोच्छगलइयंगुलिओ'त्ति 'प्राकृतत्वात्' अङ्गुलिभिर्लातो गृहीतो गोच्छको येन सोऽङ्गुलिलातगोच्छको वस्त्राणि पटलकरूपाणि प्रतिलेखयेत् प्रस्तावात् प्रमार्जयेदित्यर्थ ॥ २३ ॥

इत्थ तथावस्थितान्येव पटलकानि गोच्छकेन प्रमृज्य पुनर्यत् कुर्यात्, तदाह—

**उड्ढ थिरं अतुरियं पुव्व ता वत्थमेव पडिलेहे । तो बिइय पप्फोडे तइयं च पुणो पमज्जिज्जा ॥ २४ ॥**

व्याख्या—ऊर्ध्वं कायतो वस्त्रतश्च तत्र कायत उत्कुटुकत्वेन स्थितो वस्त्रतश्च तिर्यक्प्रसारितवस्त्र । स्थिरं दृढग्रहणेन । अत्वरितमद्रुत यथा स्यादेवं पूर्वं प्रथमं 'ता' इति तावद् वस्त्रं पटलकरूपं प्रत्युपेक्षेतैव, आरतः परतश्च निरीक्षेतैव, न तु प्रस्फोटयेत् । वस्त्राभिधानेन वर्षाकल्पादिप्रत्युपेक्षणायामप्ययमेव विधिरिति ख्यापितम् । ततश्च यदि जन्तून् पश्यति, ततो यतनयाऽन्यत्र सङ्क्रमयति, तददर्शने च 'तो' इति तत प्रत्युपेक्षणाऽनन्तरं द्वितीयमिदं

कुर्याद् यदुत शुद्धं सत् प्रस्फोटयेत्। तृतीयं च पुनरिदं यदुत प्रमृज्यात्। कोऽर्थः ? प्रत्युपेक्ष्य प्रस्फोट्य च हस्तगतान् प्राणिनः प्रमृज्यादिति ॥ २४ ॥

कथं पुनः प्रस्फोटयेत् प्रमृज्याद् वा ? इत्याह—

**अणच्चावियं अवलियं अणाणुबंधिं अमोसलिं चेव। छप्पुरिमा नव खोडा पाणीपाणिविसोहणं ॥ २५ ॥**

व्याख्या—अनर्तितं प्रस्फोटनं प्रमार्जनं वा कुर्वतो वस्त्रं वपुर्वा यथा नर्तितं न स्यात् तथा। अवलितं यथाऽऽत्मनो वस्त्रस्य च वलितमिति मोटनं न भवति। 'अणाणुबंधिं'ति अननुबन्धि, अनुबन्धेन नैरन्तर्यलक्षणेन युक्तमनुबन्धि न तथा अननुबन्धि कोऽर्थः ? लक्ष्यमाणविभागं यथा भवति। 'अमोसलिं'ति 'सूत्रत्वात्' वस्त्रादेरूर्ध्वाधस्तिर्यग्घट्टनं मोसली तेन रहितमूर्ध्वमधो वा कुड्यादिपरामर्शवद् यथा न स्यात् तथेत्यर्थः। एवं च किम् ? इत्याह—'छप्पुरिम'त्ति षट् पूर्वाः पूर्वं क्रियमाणतया तिर्यक्कृतवस्त्रप्रस्फोटनात्मकाः क्रियाविशेषा येषु ते षट्पूर्वाः 'नव' त्ति नवसङ्ख्याः 'खोड'त्ति खोटकाः श्रुतप्रतीताः स्फोटनात्मकाः 'कर्तव्या इति शेषः'। पाणौ पाणितले प्राणिनां कुन्थ्वादिसत्त्वानां विशोधनं प्रस्फोटनं त्रिकत्रिकोत्तरकालं त्रिकत्रिकसङ्ख्यं पाणिप्राणिविशोधनं कर्तव्यम् ॥ २५ ॥

प्रतिलेखनादोषत्यागमाह—

**आरभडा संमद्दा वज्जेयव्वा य मोसली तइया। पप्फोडणा चउत्थी विक्खित्ता वेइया छट्ठी ॥ २६ ॥**

पसिढिल—पलंब—लोला एगामोसा अणेगरूवधुणा । कुणइ पमाणि पमायं संकिए गणणोवगं कुज्जा ॥२७॥

अनयोर्व्याख्या—आरभटा विपरीतकरणं त्वरितं वाऽन्यान्यवस्त्रग्रहणेन । संमर्दा वस्त्रान्तकोणसञ्चलनमुपधेरुपरि निपदनं वा 'वर्जयितव्येति सम्बद्ध्यते' । मोसली तिर्यगूर्ध्वमधो वा घट्टना तृतीया । प्रस्फोटना रेणुगुण्डितस्येव वस्त्रस्य प्रकर्षेण झाटना चतुर्थी । विक्षेपण विक्षिप्ता 'पञ्चमीति गम्यते' सा च प्रत्युपेक्षितवस्त्रस्यान्यत्राप्रत्युपेक्षिते क्षेपणेन । वेदिका षष्ठी, अस्या भेदाः पञ्च; जानूपरि हस्तौ १, जान्वधः हस्तौ २, जानुमध्ये च हस्तौ ३, हस्तमध्ये जानुद्वयं ४, एकं जानु हस्तमध्येऽपरं वहि. ५ । 'सर्वत्र स्त्रीलिङ्गता रूढत्वात्' एवमेते षड् दोषाः प्रतिलेखनायां त्याज्याः ॥ तथा प्रशिथिलमदृढमनिरायतं वस्त्रग्रहणम् । प्रलम्बो विषमग्रहणेन प्रत्युपेक्ष्यमाणवस्त्रकोणानां लम्बनम् । लोला यद् भूमौ करे वा वस्त्रस्य लोलनम् । एतेऽपि त्रयो दोषा वर्जयितव्या इति योज्यम् । एकामर्शा मध्ये लात्वा ग्रहणदेश यावदुभयतो वस्त्रस्य यदेककाल सङ्घर्षणमाकर्षणं 'रूढित्वात् स्त्रीत्वम्' । 'अणेगरूवधुण'त्ति अनेकरूपा सङ्ख्यात्रयातिक्रमणतो वा युगपदनेकवस्त्रग्रहणतो वा धुनना प्रकम्पना अनेकरूपधुनना । तथा यत् कुरुते प्रमाणे प्रस्फोटादिसङ्ख्यालक्षणे प्रमाद यच्च शङ्किते प्रमादत. प्रमाणशङ्कायां गणनां कराङ्गुलिरेखास्पर्शादिनैकादिसङ्ख्यारूपामुपागच्छतीति गणनोपग यथा स्यादेव प्रस्फोटनादि कुर्यात् सोऽपि दोषः 'वर्जनक्रिया सर्वत्र पूर्वसूत्रादनुवर्त्या' एव चोक्तदोषाभावे प्रत्युपेक्षणा निर्दोषेत्युक्तं भवतीति गाथाद्वयार्थ. ॥ २६–२७ ॥

एतामेव भङ्गकद्वारेण सदोषां निर्दोषां चाह—

अणूणाइरित्तपडिलेहा अविवच्चासा तहेव य । पढमं पयं पसत्थं सेसाणि उ अप्पसत्थाणि ॥ २८ ॥

व्याख्या—अन्यूनातिरिक्ता न न्यूनाधिका प्रतिलेखा, इह च न्यूनताऽऽधिक्ये स्फोटना-प्रमार्जने वेलां चाश्रित्य वाच्ये । 'अविवच्चास'त्ति विविधो व्यत्यासो वैपरीत्यं यस्यां सा विव्यत्यासा न तथा अविव्यत्यासा पुरुषोपधिविपर्यासरहिता 'कर्तव्येति शेषः' । अत्र च त्रिभिर्विशेषणपदैरष्टौ भङ्गाः सूचिताः । स्थापना चेयम्—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ऽऽऽ | ।ऽऽ | ऽ।ऽ | ॥ऽ | ऽऽ। | ।ऽ। | ऽ॥ | ।।। |

एतेषु च प्रथमं पदमन्यूना अनतिरिक्ता अविपर्यासा इत्येवं प्रथमभङ्गरूपं प्रशस्तं निर्दोषतया शुद्धं शेषाणि तु पदानि द्वितीयादिभङ्गरूपाण्यप्रशस्तानि तेषु न्यूनताऽऽद्यन्यतमदोषसम्भवात् । ततः प्रथमभङ्गानुपातिन्येव प्रतिलेखना कार्येति भावः ॥ २८ ॥

एवंविधामप्येनां कुर्वता यत् त्याज्यं तदाह—

पडिलेहणं कुणंतो मिहो कहं कुणइ जणवयकहं वा । देइ व पच्चक्खाणं वाएइ सयं पडिच्छइ वा ॥२९॥

व्याख्या—प्रतिलेखनां कुर्वन्मिथः कथां परस्परसम्भाषणात्मिकां करोति जनपदकथां वा 'स्त्र्यादिकथोपल-

क्षणमिदम्' । ददाति वा प्रत्याख्यानमन्यस्मै, वाचयति पाठयत्यपरं, स्वयं प्रतीच्छति गृह्णात्यालापकादिकं 'य इति गम्यम्' ॥ २९ ॥

स किम्? इत्याह—

पुढवी आउक्काए तेऊ–वाऊ–वणस्सइ–तसाणं । पडिलेहणापमत्तो छण्ह पि विराहगो होइ ॥ ३० ॥

व्याख्या—स्पष्टा । नवरं पृथिव्यादीनां प्रतिलेखनाप्रमत्तो मिथ· कथाऽऽदिना षण्णामप्यास्तामेकादीनामित्यपे- रर्थ. । विराधकश्चैवम्–प्रमत्तो हि कुम्भकारशालाया स्थितो जलघटादिकं प्रलोठयेत् । ततस्तज्जलेन मृदग्नि–बीज–कुन्थ्वादयः प्लाव्यन्ते । प्लावनातश्च विराध्यन्ते । यत्र चाग्निस्तत्रावश्यं वायुः 'वाऊतेऊसहगया'[1] इत्युक्तत्वात् । एवं षण्णामपि द्रव्यतो विराधकत्वम् । भावतस्तु प्रमत्ततया अन्योऽपि विराधको भवति । जीवरक्षाहेतुत्वात् प्रति- लेखनाया , हिंसाहेतुत्वान्मिथ· कथाऽऽदीनां त्याज्यतोक्तेति भावः । इत्थं प्रथमपौरुषीकृत्यमुक्तम् । ततः 'बीए झाण झियायइ'[2] इति वचनेन ध्यानमप्युक्तमुभय चैतदवश्यं कर्तव्यम् ॥ ३० ॥

अथ तृतीयपौरुषीकृत्यमाह—

तइयाए पोरिसीए भत्त–पाणं गवेसए । छण्हमण्णयरायंमि कारणंमि उवट्ठिए ॥ ३१ ॥

---

१ वायुतेज सहगतौ । २ द्वितीये ध्यान ध्यायति ।

व्याख्या—सुगमा। नवरमौत्सर्गिकमेतदन्यथा स्थविरकल्पिकानां यथाकालमेव भक्तादिगवेषणम्। तथाऽऽह—'सइ काले चरे भिक्खू'त्ति षण्णां कारणानां 'अण्णयरायंमि'त्ति अन्यतरस्मिन् कारणे समुत्थिते सञ्जाते, न तु कारणं विनेति भावः। इह कारणग्रहणं 'भोजनोपलक्षणम्'। गुर्वाद्यर्थं उक्तकारणव्यतिरेकेणापि तद्ग्रहणस्य सम्भवात्। किं चान्यत्र भोजने एवैतानि कारणान्युक्तानि ॥ ३१ ॥

तान्येव कारणान्याह—

**वेयण–वेयावच्चे इरियट्ठाए य संजमट्ठाए। तह पाणवत्तियाए छट्ठं पुण धम्मचिंताए ॥ ३२ ॥**

व्याख्या—वेदनायै क्षुत्–पिपासोत्पन्नवेदनोपशमनायेत्यर्थः। तथा क्षुत्–पिपासाभ्यां बाधितो गुरुवैयावृत्त्यादौ न क्षमः स्यादिति वैयावृत्त्याय। तथा ईर्यायेर्यासमित्यर्थाय तदाकुलितस्य निर्जराऽर्थिनोऽपि चक्षुर्भ्यामपश्यतः तस्याः पालयितुमशक्यत्वात्। तथा संयमार्थाय तदार्तत्वेन महाव्रतावश्यकादेर्दुःपाल्यत्वात्। तथा 'पाणवत्तिय'त्ति प्राणप्रत्ययं जीवितनिमित्तम्। अविधिना ह्यात्मनोऽपि प्राणोपक्रमे हिंसा स्यात्। उक्तं च—

"भोवियजिणवयणाणं ममत्तरहियाण णत्थि हु विसेसो। अप्पाणंमि परंमि य तो वज्जे पीडमुभओ त्ति" ॥ १ ॥



---

१ सति काले चरेद् भिक्षुः। २ भावितजिनवचनानां ममत्वरहितानां नास्ति हु विशेषः। आत्मनि परस्मिंश्च तद् वर्जयेत् पीडमुभय इति ॥ १ ॥

तथा षष्ठं पुनरिद यदुत धर्मचिन्तायै धर्म्मध्यान—श्रुताभ्यासरूपार्थे "भक्तपानं गवेषयेदिति सर्वत्रानुवर्तनीयम्' इयं च तदाकुलितचेतसो न स्यादार्तध्यानसम्भवात्। किञ्चैभिः कारणैर्यथा स्वार्थं तथा गुर्वाद्यर्थमपि भक्तपानं गवेषयेदिति भावः ॥ ३२ ॥

एभिः कारणै. किमवश्यं भक्तादि गवेषयेद्? उत नेत्याह—

निग्गंथो धिइमंतो निग्गंथी वि न करिज्ज छहि चेव। ठाणेहिं तु इमेहिं अणइक्कमणा य से होइ ॥३३॥

व्याख्या—निर्ग्रन्थो यतिर्धृतिमान् धर्माचरणं प्रति तथा निर्ग्रन्थ्यपि न कुर्याद् 'भक्त–पानगवेषणामिति प्रक्रम.' षड्भिश्चैव स्थानैस्तु पुनरेभिर्वक्ष्यमाणैरेव च किम्? इत्याह–'अणइक्कमणा'त्ति अनतिक्रमणं संयमयोगानामनुल्लङ्घन 'चशब्दो यस्मादर्थे' यस्मात् 'से' तस्य तस्या वा निर्ग्रन्थ्या भवति। अन्यथा तदतिक्रमणसम्भवात् ॥ ३३ ॥

षट् स्थानान्येवाह—

आयंके उवसग्गे तितिक्खया बंभचेरगुत्तीसु। पाणिदया–तवहेउं सरीरवुच्छेयणट्ठाए ॥ ३४ ॥

व्याख्या—आतङ्के ज्वरादिरोगे, उपसर्गे 'उन्निष्क्रमणार्थं' स्वजनादिकृते दिव्यादौ चोभयत्र 'तन्निवारणार्थमिति गम्यम्'। तथा तितिक्षा सहनं तया हेतुभूतया क्व? ब्रह्मगुप्तिषु, ता हि नान्यथा सोढु शक्यते। प्राणिदयाहेतोर्व-

र्पादौ निपतदप्कायादिजीवरक्षायै तपश्चतुर्थादिरूपं तद्धेतोः । तथा शरीरस्य व्युच्छेदः परिहारस्तदर्थं चोचितकाले संलेखनामनशनं वा कुर्वन् 'भक्तपानं न गवेषयेदिति सर्वत्र योज्यम्' ॥ ३४ ॥

तद्गवेषणायां विधिं क्षेत्रावधिं चाह—

अवसेसं भंडगं गिज्झ चक्खुसा पडिलेहए । परमद्धजोयणाओ विहारं विहरए मुणी ॥ ३५ ॥

व्याख्या—अवशेषं समस्तं भाण्डमुपकरणं गृहीत्वा चक्षुषा प्रत्युपेक्षेत 'उपलक्षणत्वात् प्रतिलेखयेच्च' । ततस्तदादाय परमुत्कृष्टमर्धयोजनादर्धयोजनमाश्रित्य 'क्यब्लोपे पञ्चमी' परतो हि क्षेत्रातीतमशनादि स्यात् । विहारं विहरेद् विचरेन्मुनिः ॥ ३५ ॥

इत्थं विहृत्योपाश्रयं चागत्य भुक्त्वा यत् कुर्यात् तदाह—

चउत्थीए पोरिसीए निक्खिवित्ता ण भायणं । सज्झायं च तओ कुज्जा सव्वभावविभावणं ॥ ३६ ॥

व्याख्या—चतुर्थ्यां पौरुष्यां निक्षिप्य प्रत्युपेक्ष्य बद्धा च भाजनं पात्रं स्वाध्यायं ततः कुर्यात् सर्वे भावा जीवादयस्तेषां विभावनं प्रकाशकम् ॥ ३६ ॥

पोरिसीए चउब्भाए वंदित्ता ण तओ गुरुं । पडिक्कमित्ता कालस्स सिज्जं तु पडिलेहए ॥ ३७ ॥

व्याख्या—पौरुष्या' 'प्रक्रमाच्चतुर्थ्यां.' चतुर्भागे 'शेषे इति गम्यते', वन्दित्वा ततः स्वाध्यायादनन्तरं गुरुं, प्रतिक्रम्य कालस्य, शय्यां वसतिं 'तु पूरणे' प्रतिलेखयेत् ॥ ३७ ॥

ततश्च—

पासवणुच्चारभूमिं च पडिलेहिज्ज जय जई । काउसग्गं तओ कुज्जा सव्वदुक्खविमुक्खणं ॥ ३८ ॥

व्याख्या—भूमिशब्दस्य प्रत्येकमभिसम्बन्धात् प्रस्रवणभूमिमुच्चारभूमिं च प्रत्येक द्वादशस्थण्डिलात्मिकां 'चशब्दात् कालभूमिं च स्थण्डिलत्रयात्मिका' प्रतिलेखयेत् । 'जय'ति यतमानो यतिरेवं सप्तविंशति' स्थण्डिलानीत्थं विशेषतो दिनकृत्यमुक्त्वोत्तरार्धेन रात्रिकृत्यमारभते । कायोत्सर्गं ततो भूमिप्रतिलेखनानन्तर कुर्यात् सर्वदुःखविमोक्षणम् । तथात्व चास्य कर्मापचयहेतुत्वात् । यत —

"काउस्सग्गे जह सुट्ठियस्स भज्जंति अगमगाइ । तह भिंदति सुविहिया अट्ठविह कम्मसघाय" ॥ १ ॥

किञ्च कायोत्सर्गस्य फल द्विधा ऐहिकमामुष्मिकं च । तत्रैहिकं यशः-सुराकृष्ट्यादि, आमुष्मिकं च स्वर्गादि, परम्परया सिद्धिश्च । तत्रैहिकफले दृष्टान्त —

१ कायोत्सर्गे यथा सुस्थितस्य भज्यन्तेऽङ्गोपाङ्गानि । तथा भिन्दन्ति सुविहिता अष्टविध कर्मसङ्घातम् ॥ १ ॥

चम्पायां गतकम्पायामनन्ताद्भुतसम्पदि । आसीत् सुदर्शनश्रेष्ठी सुदर्शने सुदर्शनः ॥ १ ॥
सर्वज्ञोपज्ञधर्मज्ञा शीलप्रोल्लसदुज्ज्वला । मनोरमा गुणैस्तस्य जाया जाता मनोरमा ॥ २ ॥
कायोत्सर्गं सदाऽऽदत्ते श्रेष्ठी सद्ध्यानलीनहृत् । शून्यगेह–स्मशानादौ चतुर्दश्यादिपर्वसु ॥ ३ ॥
दधिवाहनराज्ञस्तं पट्टदेव्यभयाऽऽह्वया । शुद्धान्ते प्रतिमाव्याजाद् दूत्याऽऽनाययदन्यदा ॥ ४ ॥
ततोऽभयाऽभणच्छ्रेष्ठिन् ! मत्संसर्गं करोषि चेत् । करोमि राज्यसर्वस्वस्वामिनं त्वां तु निश्चितम् ॥ ५ ॥
तथापि नाङ्गीचक्रेऽसौ तद्वचो दृढमानसः । सा पुनः क्षोभयामास हाव–भावादिभिस्तकम् ॥ ६ ॥
सुदर्शनो न चुक्षोभ स्वयम्भूरमणाब्धिवत् । पूच्चकाराथ सा बाढं क्षणाद् भृत्यास्ततोऽमिलन् ॥ ७ ॥
राज्ञः सोऽदर्शि तैस्तेनाचिन्ति शीलकलङ्ककृत् । नायं कदापि दान्तात्मा सर्वदा स्ववशेन्द्रियः ॥ ८ ॥
श्रेष्ठिन्नत्रासमे स्थाने केनानीतस्त्वमै कथम् ?। इति पृष्टोऽपि भूपेन स क्षमी मौनमाश्रयत् ॥ ९ ॥
दुष्टोऽयमिति रुष्टेनादिष्टो वध्यः स भूभुजा । वध्यभूमौ समानिन्ये तलारक्षैर्विडम्बितम् ॥ १० ॥
मा कुप्य क्वाप्यरे जीव ! दैन्यं मेहि क्षमां भज । स्वकर्मोपार्जितं ह्येतत् स शुद्धात्मेत्यभावयत् ॥ ११ ॥
इतश्च तत्प्रिया श्रुत्वा प्रियोदन्तं श्रवःकटुम् । निदध्याविति दुःखार्ता कलङ्को मत्प्रिये नहि ॥ १२ ॥
विधोर्यदि ज्वलज्ज्वाला वह्नेर्ज्वालाश्च शीतलाः । जायन्ते तर्हि मे भर्ता स्वीयं शीलं स दूषयेत् ॥ १३ ॥

तत. साऽर्हन्तमभ्यर्च्य कायोत्सर्गेण तस्थुषी । पतिव्यसनशान्त्यर्थं स्मृत्वा शासनदेवताम् ॥ १४ ॥
सा चागत्यावदद् वत्से ! किं कुर्वेऽहं त्वदीप्सितम् ? । तयोचे मत्प्रियालीककलङ्कं त्वमपाकुरु ॥ १५ ॥
चकार तत्र गत्वा द्राक् शूलं सौवर्णविष्टरम् । प्रहारान् हार–केयूराद्यलङ्कारांश्च तस्य सा ॥ १६ ॥
कैश्चिदुक्तं नृपस्याग्रे दृष्ट्वा तं सोऽपि तादृशम् । विस्मित क्षमयामास स्वागोऽज्ञानविजृम्भितम् ॥ १७ ॥
सन्तोऽर्हद्धर्ममाहात्म्यसाक्षात्फलचमत्कृताः । धर्मो जयति नाधर्म इत्युज्जुघुपुरुच्चकै. ॥ १८ ॥
एवं शुभायते कायोत्सर्गस्योदर्कमद्भुतम् । मत्वैतस्य घना पौरा आदृता धर्ममार्हतम् ॥ १९ ॥
ततः पट्टेभमारोप्य वस्त्राद्यैरतिसत्कृत । ध्रियमाणातपत्रः स भूपेन प्रापितो गृहम् ॥ २० ॥
ततो मनोरमा हृष्टा प्रिये निर्दोषमागते । कायोत्सर्गं पारयित्वा वर्धापनमहो व्यधात् ॥ २१ ॥
यथा सुदर्शनश्रेष्ठी कायोत्सर्गप्रभावत. । निष्कलङ्को यश. सौख्यं चाप्तवानिह निर्भरम् ॥ २२ ॥
तथा भवत भो भव्याः ! कायोत्सर्गे तु सादराः । यथेह प्राप्य कीर्त्यादि क्रमात् सिद्धिमवाप्नुत ॥ २३ ॥

॥ इति कायोत्सर्गस्यैहिकफले सुदर्शन–मनोरमोदाहरणम् ॥ ३८ ॥

तत्र कायोत्सर्गे यच्चिन्तयेत्, तदाह—

देसियं च अईयारं चिंतिज्ज अणुपुव्वसो । नाणंमि दंसणे चेव चरित्तंमि तहेव य ॥ ३९ ॥

व्याख्या—'देसियं' ति 'प्राकृतत्वाद् वकारलोपे' दैवसिकं च सकलदिवसकृतं 'चः पूरणे' अतिचारमतिक्रमं चिन्तयेद् ध्यायेत । 'अणुपुव्वसो' त्ति आनुपूर्व्या क्रमेण । किं विषयं तं चिन्तयेद् ? इत्याह—ज्ञाने दर्शने चारित्रे तथैव च ॥ ३९ ॥

पारियकाउसग्गो वंदित्ता ण तओ गुरुं । देसियं तु अईयारं आलोइज्ज जहक्कमं ॥ ४० ॥

व्याख्या—पारितः समापितः कायोत्सर्गो येन स तथा । वंदित्वा 'प्रस्तावाद् द्वादशावर्तवन्दनेन' ततोऽतीचारचिन्तनानन्तरं गुरुम् । 'देसियं' ति प्राग्वद् दैवसिकमतीचारमालोचयेत् प्रकाशयेद् गुरूणामेव यथाक्रममालोचनाऽऽसेवनक्रमानतिक्रमेण ॥ ४० ॥

पडिक्कमित्ता निस्सल्लो वंदित्ता ण तओ गुरुं । काउस्सग्गं तओ कुज्जा सव्वदुक्खविमोक्खणं ॥ ४१ ॥

व्याख्या—प्रतिक्रम्यापराधस्थानेभ्यः प्रतीपं निवृत्य निःशल्यो मायादिशल्यरहितः 'सूचकत्वात् सूत्रस्य' वन्दनकपूर्वकं क्षमयित्वा, वन्दित्वा द्वादशावर्तवन्दनेन तत इत्युक्तविधेरनन्तरं गुरुमाचार्यादिकम् । कायोत्सर्गं 'जातावेकवचनम्' चारित्र—दर्शन—ज्ञानविशुद्ध्यर्थं व्युत्सर्गत्रयरूपं ततो गुरुवन्दनानन्तरं कुर्यात् सर्वदुःखविमोक्षणं प्राग्वत् ॥ ४१ ॥

पारियकाउस्सग्गो वंदित्ता ण तओ गुरुं । थुइमंगलं च काउं कालं संपडिलेहए ॥ ४२ ॥

व्याख्या–पूर्वार्धं स्पष्टम् । स्तुतिमङ्गलं च स्तुतित्रयात्मकसिद्धस्तवरूप कृत्वा कालं संप्रत्युपेक्षेत कोऽर्थः ? प्रतिजागर्ति 'उपलक्षणाद् गृह्णाति च' कालविधिश्चागमादवसेय ॥ ४२ ॥

पढमं पोरिसि सज्झायं बिइयं झाणं झियायई । तइयाए निद्दमोक्खं तु सज्झाय तु चउत्थीए ॥ ४३ ॥

प्राग् व्याख्यातैव । नवरमयमर्थो गुरुभि· पुनःपुनरुपदेष्टव्य एव, न प्रयासो मन्तव्य इति पुनरस्याभिधानमिति ॥ ४३ ॥

कथ चतुर्थपौरुषीकृत्यं कर्तव्यम्? इत्याह—

पोरिसीए चउत्थीए कालं तु पडिलेहिया । सज्झायं तु तओ कुज्जा अबोहतो असंजए ॥ ४४ ॥

व्याख्या–पौरुष्यां चतुर्थ्यां काल वैरात्रिकं 'तुः पूरणे' प्रत्युपेक्ष्य प्रतिजागर्य प्राग्वद् गृहीत्वा च स्वाध्याय तत·कुर्यात् । अबोधयन्ननुत्थापयन्नसंयतान् गृहिणस्तदुत्थापने तेषा तत्तत्पापस्थानप्रवृत्तिसम्भवात् ॥ ४४ ॥

पोरिसीए चउब्भाए वदिऊ ण तओ गुरुं । पडिक्कमित्ता कालस्स कालं तु पडिलेहए ॥ ४५ ॥

व्याख्या–पौरुष्याश्चतुर्थ्याश्चतुर्थभागे 'अवशिष्यमाणे इति शेषः' । तत्र हि कालवेलासम्भवान्न कालस्य ग्रहणम् । वन्दित्वा ततो गुरु, प्रतिक्रम्य कालस्य वैरात्रिकस्य, काल प्राभातिक 'तुर्विशेषार्थे' 'पडिलेहए' त्ति प्रत्युपेक्षेत गृह्णीयाच्च,

मध्यमप्रक्रमापेक्षं च कालत्रयग्रहणमुक्तमन्यथा ह्युत्सर्गत उत्कर्षेण चत्वारो जघन्येन त्रयोऽपवादतस्तु द्वावुत्कर्षतो जघन्यतस्त्वेक इति ॥ ४५ ॥

आगए कायवुस्सग्गे सव्वदुक्खविमोक्खणे। काउस्सग्गं तओ कुज्जा सव्वदुक्खविमोक्खणं ॥ ४६ ॥

व्याख्या–आगते कायव्युत्सर्गे प्राप्ते कायोत्सर्गसमये इत्यर्थः । सर्वदुःखविमोक्षणे। शेषं प्राग्वत्। यच्चेह पुनः पुनः सर्वदुःखविमोक्षणविशेषणाभिधानं तत् कायोत्सर्गस्यात्यन्तनिर्जराहेतुत्वख्यापनार्थम् । तथेह कायोत्सर्गग्रहणेन चारित्र–दर्शन–ज्ञानशुध्यर्थं कायोत्सर्गत्रयं ग्राह्यम्। तत्र च तृतीये कायोत्सर्गे रात्रिकोऽतीचारश्चिन्त्यः ॥ ४६ ॥

एतदेवाह—

राइयं च अइयारं चिंतिज्ज अणुपुव्वसो। नाणंमि दंसणंमि चरित्तंमि तवंमि य ॥ ४७ ॥

व्याख्या–रात्रौ भवं रात्रिकं 'चः पूरणे' अतीचारं चिन्तयेत् आनुपूर्व्या क्रमेण। ज्ञाने दर्शने चारित्रे तपसि 'चशब्दाद् वीर्ये च' शेषं कायोत्सर्गेषु च चतुर्विंशतिस्तवश्चिन्त्यतया प्रतीतः साधारणश्चेति नोक्तः ॥ ४७ ॥

ततश्च—

पारियकाउस्सग्गो वंदित्ता ण तओ गुरुं। राईयं तु अईयारं आलोएज्ज जहक्कमं ॥ ४८ ॥

पडिक्कमित्तु निस्सल्लो वंदित्ता ण तओ गुरु। काउस्सग्गं तओ कुज्जा सव्वदुक्खविमोक्खणं ॥ ४९ ॥

गाथाद्वयमपि व्याख्यातप्रायमेव ॥ ४८–४९ ॥

कायोत्सर्गे स्थितः किं चिन्तयेद् ? इत्याह—

किं तवं पडिवज्जामि एव तत्थ विचिंतए। काउसग्गं तु पारित्ता वंदई य तओ गुरुं ॥ ५० ॥

व्याख्या–किमिति किंरूप तपो नमस्कारसहितादि प्रतिपद्येऽहमेवं तत्र विचिन्तयेत्। भगवान् श्रीवीरः षण्मासं यावन्निरशनो विहृतवान् तत् किमहमपि स्थातुं शक्तो नवेति ?। एवं पञ्चमासाद्यपि यावन्नमस्कारसहितं तावत् परिभावयेत्। उत्तरार्धं स्पष्टम् ॥ ५० ॥

पारियकाउसग्गो वंदित्ता ण तओ गुरुं। तवं संपडिवज्जित्ता करिज्ज सिद्धाण संथवं ॥ ५१ ॥

सुगमम्। नवरं तपो यथाशक्ति चिन्तितमुपवासादि सम्प्रतिपद्याङ्गीकृत्य कुर्यात् सिद्धानां संस्तवं स्तुतित्रयरूपं तदनु चैत्यसद्भावे तद्वन्दनं कार्यम् ॥ ५१ ॥

अध्ययनोपसंहारमाह—

एसा सामायारी समासेन वियाहिया। जं चरित्ता बहू जीवा तिन्ना संसारसागरं ॥ ति बेमि ॥५२॥

व्याख्या—एषा सामाचारी दशविधौघरूपा च संक्षेपेण 'वियाहिया' त्ति व्याख्याता । पदविभागसामाचारी त्विह नोक्ता धर्मकथाऽनुयोगत्वादस्य ग्रन्थस्य, च्छेदसूत्रान्तर्गतत्वाच्च तस्याः । अत्रास्याः फलमाह—यां सामाचारीं चरित्वाऽऽसेव्य बहवोऽनेके जीवास्तीर्णाः संसारसागरम् । इति ब्रवीमीति प्राग्वदिति ॥ ५२ ॥ ग्रं० ३३१ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां सामाचार्याख्यं षड्विंशमध्ययनं समाप्तम् ॥२६॥

# अथ सप्तविंशं खलुङ्कीयाख्यमध्ययनम् ।

इह पूर्वाध्ययने सामाचार्युक्ता, सा चाशठतयैव पालयितुं शक्या, विपक्षभूतशठताज्ञानत एवासौ जायत इति दृष्टान्तेन शठतास्वरूपनिरूपणेनाशठताऽभिधायकमिदं सप्तविंशमध्ययनमारभ्यते—

थेरे गणहरे गग्गे मुणी आसी विसारए । आइन्ने गणिभावंमि समाहिं पडिसंधए ॥ १ ॥

व्याख्या–स्थविरो धर्मे स्थिरीकरणात्, गणं गुणसमूहं धारयतीति गणधरो गार्ग्यो गर्गगोत्रो मुनिरासीद् विशारद सर्वशास्त्रवेत्ता । आकीर्ण आचार–श्रुतसम्पदादिभिराचार्यगुणैर्व्याप्तो गणिभावे आचार्यत्वे 'स्थित इति गम्यम्' समाधिं ज्ञानाद्युपयोगभावसमाधिं प्रतिसन्धत्ते कर्मोदयात् त्रुटितमपि सङ्घट्टयति 'पर्यन्ते परित्यागत• तथाविधशिष्याणामिति गम्यते' ॥ १ ॥

स च समाधिं सन्दधद् यथा शिष्येभ्य उपदिशति, तथाऽऽह—

वहणे वहमाणस्स कंतारं अइवत्तई । जोए वहमाणस्स संसारं अइवत्तई ॥ २ ॥

व्याख्या–उह्यतेऽनेनेति वहनं शकटादि तस्मिन् 'योक्त्रितस्य इति गम्यते' वहमानस्य अन्तर्भूतणिगर्थतया तं च सम्यक् प्रवर्तयमानस्य 'उत्तरत्र खलुङ्कग्रहणादिह विनीतगवादेरिति गम्यते' अस्य च वाहकाविनाभूतत्वात् वाहकस्य

च पामरादेः कान्तारमरण्यमतिवर्तते सुखातिवर्त्यतया स्वयमेवातिक्रामतीति । उपनयमाह-योगे संयमव्यापारे 'नियुक्तस्य इति शेषः' वहमानस्य 'अन्तर्भूतणिगर्थतया' तं च सम्यक् प्रवर्तयमानस्य शिष्यादेः प्रवर्तकस्य चाचार्यादेः संसारोऽतिवर्तते प्राग्वत् स्वयमेवातिक्रामति । इह च योगवहनमशठतेति ॥ २ ॥

अथाशठतया किल समाधिरतस्तद्विपक्षभूतशठतादोषदुष्ट-असमाधिजनककुशिष्याणां स्वरूपं गुरुनिर्वेदकत्वं च दृष्टान्तेनाह—

खलुंके जो उ जोएइ विहम्माणो किलिस्सई । असमाहिं च वेएइ तोत्तओ य से भज्जई ॥ ३ ॥

व्याख्या-खलुङ्कान् गलिवृषभान् योऽनिर्दिष्टस्वरूपः 'तुर्विशेषणे' योजयति योक्त्रयति 'वहने' इति प्रक्रमः । स किम् ? इत्याह-'विहम्माणो' त्ति विशेषेण घ्नंस्ताडयन् क्लिश्यत एवासमाधिं च चित्तोद्वेगं वेदयतेऽनुभवति तोत्रकः प्राजनकः 'से' तस्य खलुङ्कयोजयितुर्भज्यतेऽतिताडनाद् भङ्गमाप्नोति ॥ ३ ॥

ततश्चातिरुष्टः स यत् कुरुते,तदाह—

एगं डसइ पुच्छंमि एगं विंधइऽभिक्खणं । एगो भंजइ समिलं एगो उप्पहपट्ठिओ ॥ ४ ॥

व्याख्या-एकं दशति दशनैर्भक्षयति पुच्छे, एकमन्यं गलिं विध्यति प्राजनकारया तुदति 'उपलक्षणादश्लीलमशोभनं भाषते, क्रुध्यति च' अभीक्ष्णं पुनः पुनः । अथ किमेते कुर्वन्ति? येन योजयितुरेवं निर्वेदहेतव इत्याह-

एकः कश्चित् खलुङ्को गौर्भनक्ति समिलां युगरन्ध्रकीलिकामेकोऽन्य उत्पथमुन्मार्गं प्रस्थितो 'भवतीति गम्यते' ॥४॥

तथा—

एगो पडइ पासेण निवेसइ निवज्जई । उक्कुद्दइ उप्फिडई सढे वालगवी वए ॥ ५ ॥

माई मुद्धेण पडइ कुद्धे गच्छइ पडिपह । मयलक्खेण चिट्ठाई वेगेण य पहावई ॥ ६ ॥

छिन्नाले छिदई सिल्लि दुद्दते भजई जुगं । से वि य सुस्सुयाइत्ता उज्जुहित्ता पलायई ॥ ७ ॥

आसा व्याख्या–एक पतति पार्श्वेनैकाङ्गविभागेन 'भूमाविति गम्यम्', अन्यस्तु 'निवेसइ' त्ति निविशते उपवि-
शति, अपरश्च 'निवज्जई' त्ति स्वपिति, अपर उत्कूर्दते ऊर्ध्वं गच्छति, 'उप्फिडइ' त्ति मण्डूकवदुत्प्लवतेऽन्यः, शठः शाठ्यवानन्यो 'वालगवी वए' त्ति वालगवी तरुणां गां व्रजेत् तदभिमुख धावेदित्यर्थ॰ ॥ मायी मायावानन्य॰, मूर्ध्ना मस्तकेन पतत्येको 'भुवीति गम्यम्', क्रुद्ध॰ सन् गच्छति प्रतिपथमन्यः पश्चाद् वलतीत्यर्थः, मृतलक्ष्येण मृतमिषेण तिष्ठत्यास्ते चान्य॰, कथञ्चित् प्रगुणीकृतो वेगेन प्रधावति यथाऽन्यो गन्तुं न शक्नोति तथा यातीत्यर्थ॰ ॥ छिन्नालो दुष्टजाति कश्चित् गौ॰ छिनत्ति 'सिल्लि' ति रश्मिं बन्धनरज्जुमित्यर्थः, अन्यो दुर्दान्तो गौः भनक्ति युग झूसरं, सोऽपिच त भङ्क्त्वा 'सुस्सुयाइत्त' त्ति सूत्कारान् कृत्वा 'उज्जुहित्त' त्ति प्रेर्य स्वामिनं शकटं वा पलायतेऽन्यतो धावतीति गाथात्रयार्थ॰ ॥ ५–६–७ ॥

इत्थं दृष्टान्तमुक्त्वा दार्ष्टान्तिकयोजनामाह–

खलुंका जारिसा जोज्जा दुस्सीसा वि हु तारिसा । जोइया धम्मजाणंमि भज्जंती धिइदुब्बला ॥ ८ ॥

व्याख्या–खलुङ्का उक्तरूपा यादृशा गावो योज्या घटनीया दुःशिष्या अपि तादृशा एव । यथा हि खलुङ्का गावः स्वस्वामिनं क्लामयन्ति, असमाधिं च प्रापयन्ति एवमेतेऽपि गुरुमिति। एवं च कुतः? इत्याह–यतो गुरुणा दुःशिष्या योजिता व्यापारिताः क्व? धर्मयाने मुक्तिपुरप्रापकत्वेन धर्मवहने भज्यन्ते न सम्यक् प्रवर्तन्ते 'धिइदुब्बल' त्ति 'प्राकृतत्वाद्' दुर्बलधृतयः 'धर्मं प्रतीति गम्यम्' ॥ ८ ॥

धृतिदुर्बलत्वमेव भावयति—

इड्ढीगारविए एगे एगित्थ रसगारवे । सायागारविए एगे एगे सुचिरकोहणे ॥ ९ ॥
भिक्खालसिए एगे एगे ओमाणभीरुए । थद्धे एगं च अणुसासंमी हेऊहिं कारणेहि य ॥ १० ॥

अनयोर्व्याख्या–ऋद्ध्या गौरवं–समृद्धाः श्राद्धा मे वश्याः, सम्पद्यते च यथेप्सितमित्यात्मबहुमानरूपमस्यास्तीति ऋद्धिगौरविक एकः । एकोऽत्र दुःशिष्याधिकारे रसेषु मधुरादिषु गौरवं गार्ध्यं यस्यासौ रसगौरविको बालाद्याहारदाने तपसि च न प्रवर्तते । साते सुखे गौरवं प्रतिबन्धस्तदस्यास्तीति सातगौरविक एकः, सुखप्रतिबद्धो हि नाप्रतिबद्ध-

विहारे प्रवर्तते । एक. सुचिरक्रोधनो दीर्घरोपतयैव प्रवृत्तत्वात् ॥ भिक्षायामालस्यिक आलस्यवान् भिक्षाऽऽलस्यिक एको विहर्तुं नेच्छति । एकोऽपमानभीरुर्भिक्षा भ्रमन्नपि न यस्य तस्य गृहे प्रविशति । स्तब्धोऽहङ्कारवान् न स्वकदाग्रहात् कस्यापि नमयितु शक्य 'एक इति योज्यम्' । एकं च दु शिष्यं 'अणुसासंमि' त्ति अनुशास्मि शिक्षा दद्मि हेतुभि' कारणैश्चोक्तरूपैरिति चिन्तयित्वा ह्याचार्य आत्मनः समाधि प्रतिसन्धत्त इति गम्यते । इति गाथाद्वयार्थः ॥ ९–१० ॥

स चानुशिष्यमाण. पर किं कुरुते ? इत्याह—

सो वि अतरभासिल्लो दोसमेव पकुव्वई । आयरियाण तं वयणं पडिकूलेइ अभिक्खण ॥ ११ ॥

व्याख्या–सोऽपि दु शिष्योऽन्तरभापावान् गुरुवचनान्तराले एव स्वाभिमतभापको दोपमेवापराधमेव प्रकरोति न त्वनुशिष्यमाणोऽपि दोपविच्छेदमिति भाव. । आचार्याणाम्'उपलक्षणादुपाध्यायादीना' तदित्यनुशिष्टवभिधायक वचन प्रतिकूलयति विपरीतं करोति युक्तिभिरभीक्ष्ण पुन. पुनर्न त्वेकदेति भावः ॥ ११ ॥

यथा प्रतिकूलयति तथाऽऽह—

न सा मम वियाणाइ न य सा मज्झ दाहिई । निग्गया होहिई मन्ने साहू अन्नोऽत्थ वच्चउ ॥१२॥

व्याख्या—न सा श्राविका मां विजानाति, कोऽभिप्रायः? गुरुभिः कदाचिदुक्तो भो आयुष्मन्! ग्लानाद्यर्थममुकस्याः सकाशादमुकमौषधाद्यानय ततः स प्रतिकूलतया प्राह—न सा मां प्रत्यभिजानाति, न च सा मह्यं दास्यति तदिति, यदि वा निर्गता सा भविष्यति गृहादिति मन्ये, अथवा साधुरन्योऽत्र विवक्षितकार्ये व्रजतु किम्? अहमेवैकः साधुरस्मीत्याद्यभिधत्ते ॥ १२ ॥

अन्यच्च—

पेसिया पलिउंचिंति ते परियंति समंतओ । रायवेट्ठिं व मन्नंता करिंति भिउडिं मुहे ॥ १३ ॥

व्याख्या—प्रेषिताः क्वचित् प्रयोजने प्रस्थापितास्तत्कार्यनिष्पादने पृष्टाः सन्तो 'पलिउंचिंति' त्ति अपह्नुवते क्व वयमुक्ताः?, गता वा तत्र वयं न तु सा दृष्टेति। 'परियंति' त्ति पर्यटन्ति समन्ततः सर्वासु दिक्षु न गुरुपार्श्वे कदाचिदासते मा कदाचिदेते कृत्यमादिशन्तीति, कथञ्चित् कर्तुं प्रवृत्तौ च राजवेष्टिमिव मन्यमाना मनस्यवधारयन्तः कुर्वन्ति भृकुटीं भ्रूक्षेपरूपां मुखे 'तदन्यवपुर्विकारोपलक्षणमिदम्' ॥ १३ ॥

अपरं च—

वाइया संगहिया चेव भत्त—पाणे य पोसिया । जायपक्खा जहा हंसा पक्कमंति दिसो दिसिं ॥ १४ ॥

व्याख्या—वाचिता शास्त्राणि पाठिताः 'उपलक्षणादर्थं च ग्राहिता.'। संग्रहीता परिग्रहे कृताश्चशब्दाद् दीक्षिता उपस्थापिताश्च 'स्वयमिति गम्यम्'। भक्तपानेन च स्निग्धमधुरादिना 'तृतीयाऽर्थेऽत्र सप्तमी' पोषिता उपचय नीता । तथा जातपक्षा यथा हंसा प्रकर्षेण विप्रकृष्टदेशान्तरगमनलक्षणेन क्रामन्ति प्रक्रामन्ति प्रगच्छन्ति दिशि दिशि यदृच्छाविहारिणो भवन्तीत्यर्थः । प्रागेकप्रक्रमेऽपि यदिह बह्वभिधानं तदीदृशां भूयस्त्वख्यापनार्थम् ॥ १४ ॥

इत्थ कुशिष्यस्वरूप परिभाव्य तैरेव प्रापितक्रमाऽसमाधिर्गुरुर्यदचेष्टत तदाह—

अह सारही व चितेइ खलुंकेहि समागओ । किं मज्झ दुट्ठसीसेहि अप्पा मे अवसीयई ॥ १५ ॥

व्याख्या—अथ पूर्वोक्तचिन्ताऽनन्तर सारथिरिव सारथि 'धर्मयान इति प्रक्रम.' गर्गाचार्यो विचिन्तयति खलुङ्कैरिव खलुङ्कै' शिष्यै समागत. सहित. । किं ? न किञ्चिन्मम 'ऐहिकमामुष्मिकं वा प्रयोजनं सिध्यतीति गम्यम्' दुष्टशिष्यै 'प्रक्रमात् प्रेरितै'। केवलमात्मा मे ममावसीदति, एतत्प्रेरणादिव्यग्रतया स्वकृत्यहानेस्तत एतत्त्यागाद् वरमुद्यतविहारेणैव विहृतमिति भाव ॥ १५ ॥

अथैतत्प्रेरणाऽन्तराले स्वकृत्यमपि किं न क्रियते ? इत्याह—

जारिसा मम सीसा उ तारिसा गलिगद्दहा । गलिगद्दहे चइत्ता णं दढ पगिन्हई तव ॥ १६ ॥

व्याख्या—यादृशा मम शिष्या 'तु. पूरणे' तादृशा गलिगर्दभा. 'यदि परमिति गम्यते' गर्दभग्रहणं कुत्साख्या-

पकम्, ते हि स्वरूपतोऽप्यतिप्रेरणयैव प्रवर्तन्ते ततस्तथैव कालो याति कुतस्तदन्तरालसम्भवः? इति भावः । यतश्चैवमतो गलिगर्दभानिव गलिगर्दभान् दुःशिष्यांस्त्यक्त्वा दृढं प्रगृह्णाति स्वीकुरुते गर्गनामाऽऽचार्यस्तपोऽनशनादि ॥१६॥

ततः किमसौ कुरुते? इत्याह—

**मिउ मद्दवसंपन्ने गंभीरे सुसमाहिए। विहरई महिं महप्पा सीलभूएण अप्पणा ॥१७॥ त्ति बेमि ॥**

व्याख्या—मृदुर्बहिर्वृत्त्या विनयवान् मार्दवसम्पन्नोऽन्तःकरणतोऽपि तादृगेव । तत एव गम्भीरोऽलब्धमध्यः सुसमाहितः सुष्ठु समाधिवान् विहरत्यप्रतिबद्धविहारेण महीं पृथ्वीं महात्मा शीलं चारित्रं भूतः प्राप्तः शीलभूतस्तेनात्मनोपलक्षितः । यतः खलुङ्कताऽऽत्मनो गुरूणां चेहैव दोषहेतुरतस्तत्त्यागतोऽशठतैव सेव्येत्यध्ययनान्वयार्थः । इति ब्रवीमीति पूर्ववत् ॥ १७ ॥ ग्रं० ८४ अ० २६ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां खलुङ्कीयाख्यं सप्तविंशतितममध्ययनं समाप्तम् ॥ २७ ॥

# अथाष्टाविंशतितमं मोक्षमार्गीयाख्यमध्ययनम् ।

अथानन्तराध्ययनोक्ताऽशठताव्यवस्थितस्य मोक्षमार्गगतिप्राप्तिरिति तदभिधायकमिदमष्टाविंशमध्ययनमारभ्यते—

मोक्खमग्गगइ तच्चं सुणेह जिणभासियं । चउकारणसंजुत्तं नाण–दंसणलक्खणं ॥ १ ॥

व्याख्या—मोक्षोऽष्टकर्मोच्छेदस्तस्य मार्गो ज्ञानादिस्तेन गतिः सिद्धिगमनरूपा मोक्षमार्गगतिस्ताम् 'कथ्यमानामिति गम्यम्' 'तच्चं' ति तथ्यां सत्यां शृणुत जिनभाषिताम् । चत्वारि कारणानि वक्ष्यमाणलक्षणानि तैः संयुक्ता चतुः-कारणसंयुक्ता ताम् । इह च चतुःकारणसाध्यस्य कर्मक्षयरूपमोक्षस्यानन्तरभाविन्या गतेश्चतुःकारणवतीत्वं व्यवहा-रतः, यतः 'कारणकारणस्यात्र कारणत्वाभिधानम्' अतोऽनन्तरकारणस्य मोक्षस्य कारणं मार्गस्तस्यापि मार्गस्य गति-कारणत्वमेतद्विशेषणेनोक्तम् । ननु मोक्षमार्गेण गतिरिति विग्रहेण मार्गस्य गतिकारणत्वमुक्तमेवेति किं पुनरनेन विशेषणेनेति चेन्नानन्तरकारणस्यैव कारणत्वमिति निश्चयनिराकरणार्थत्वादस्य । तथा ज्ञान–दर्शने लक्षणं चिह्नं यस्याः सा तथा ताम् । यस्य हि ज्ञान–दर्शनसत्ता तस्यावश्यं भाविनी सिद्धिगतिरिति निश्चीयते । एतयोश्चतुष्कारणान्त-र्गतत्वेऽपि मूलकारणता दर्शयितुमित्थमुपन्यासः ॥ १ ॥

मोक्षमार्गमाह—

नाणं च दंसणं चेव चरित्तं च तवो तहा । एस मग्गो त्ति पन्नत्तो जिणेहिं वरदंसिहिं ॥ २ ॥

व्याख्या—ज्ञानं यथास्थितवस्तुतत्त्वावबोधरूपं तच्च सम्यग्ज्ञानमेव। दर्शनं सम्यग्दर्शनमेव। चरित्रमपि सम्यक्-चारित्रमेव। तपो वाह्याभ्यन्तरभेदभिन्नं 'तथा चः समुच्चये' ततः समुदितान्येवैतानि मोक्षमार्गगतेः कारणम्। एष एव मार्गः प्रज्ञप्तो मुक्तिप्रापकत्वेन प्ररूपितो जिनैर्वरमव्यभिचारितया सर्वं वस्तु द्रष्टुं शीलमेषां ते तथा तैः। इह चारित्रभेदत्वेऽपि तपसः पृथगुपादानं कर्मक्षपणं प्रत्यसाधारणहेतुत्वख्यापकम् ॥ २ ॥

एतदनुवादद्वारेण फलमाह—

नाणं च दंसणं चेव चरित्तं च तवो तहा। एयं मग्गमणुप्पत्ता जीवा गच्छंति सोग्गइं ॥ ३ ॥

पूर्वार्धं व्याख्यातमेव। एतमुक्तरूपं मार्गमनुप्राप्ता आश्रिता जीवा गच्छन्ति सुगतिमर्थाद् मुक्तिमिति ॥ ३ ॥

ज्ञानभेदानाह—

तत्थ पंचविहं नाणं सुयमाभिणिवोहियं। ओहिनाणं तइयं मणनाणं च केवलं ॥ ४ ॥

व्याख्या—तत्र ज्ञानादिषु मध्ये पञ्चविधं पञ्चप्रकारं ज्ञानम्। प्रकारानेवाह—श्रुतमिहाक्षरारूपितं भावश्रुतं गृह्यते। अभिमुखो नियतः स्वस्वविषयस्य बोधोऽभिनिबोधः स एवाभिनिबोधिकम्। अव इत्यधोऽधो विस्तृतविषयतया धावतीत्यवधिः, तदुपलक्षितं ज्ञानमप्यवधिः, ततोऽवधिश्चासौ ज्ञानं चावधिज्ञानं तृतीयम्। मनःशब्देन मनोद्र-

न्यपर्यायास्तेषु तत्तत्सञ्ज्ञिविकल्पहेतुषु ज्ञानं मनोज्ञानम् । केवलमेकं सकलमनन्त च ज्ञानं केवलज्ञानम् । किञ्च नन्द्यादिषु सूत्रेषु मतिज्ञानस्य पूर्वोक्तत्वेऽपि यदिहादित. श्रुतग्रहणं तच्छेषज्ञानस्वरूपाववोधस्य प्रायस्तदधीनत्वेन प्राधान्यख्यापनार्थमिति ॥ ४ ॥

अथैषा ज्ञेयविशेषसम्बद्धतामाह—

एय पंचविहं नाण दव्वाण य गुणाण य । पज्जवाणं च सव्वेसिं नाणं नाणीहिं देसियं ॥ ५ ॥

व्याख्या—एतत् पञ्चविध ज्ञान द्रव्याणां गुणानां पर्यवाणा च सर्वेषा ज्ञानमवबोधकं ज्ञानिभिरर्थात् केवलिभिर्देशितं कथितमिति ॥ ५ ॥

द्रव्यादीनां लक्षणान्याह—

गुणाणमासओ दव्व एगदव्वस्सिया गुणा । लक्खणं पज्जवाण तु उभओ अस्सिया भवे ॥ ६ ॥

व्याख्या—गुणानामाश्रयो द्रव्यम्, अनेन रूपादय एव वस्तु न तदतिरिक्तमन्यदिति सौगतमतमपास्तम् । तथैकस्मिन् द्रव्ये आधारभूते आश्रिता. स्थिता एकद्रव्याश्रिता गुणा , एतेन च ये द्रव्यमेवेच्छन्ति न तद्व्यतिरिक्तान् रूपादींस्तन्मतं निराकृतम् । लक्षणं पर्यवाणा 'तुर्विशेषणे' उभयोर्द्वयोर्द्रव्यगुणयोराश्रिता. 'भवे' त्ति भवेयुः । तथा गुणेष्वपि नव—पुराणादिपर्याया. प्रत्यक्षप्रतीता एव ॥ ६ ॥

द्रव्यस्य भेदानाह—

**धम्मो अहम्मो आगासं कालो पुग्गल जंतवो । एस लोगो त्ति पन्नत्तो जिणेहिं वरदंसिहिं ॥ ७ ॥**

व्याख्या—धर्म इति धर्मास्तिकायः । अधर्म इत्यधर्मास्तिकायः । आकाशमित्याकाशास्तिकायः । कालः समयादिरूपः । 'पुग्गल' त्ति पुद्गलास्तिकायः । जन्तव इति जीवास्तिकायः । 'एतानि द्रव्याणि इति शेषः' । एष इति सामान्यतो लोक इतीत्येवंस्वरूपोऽनन्तरोक्तद्रव्यपञ्चात्मको देशितो जिनैर्वरदर्शिभिरिति पूर्ववत् ॥ ७ ॥

धर्मादिभेदानाह—

**धम्मो अहम्मो आगासं दव्वं इक्किक्कमाहियं । अणंताणि य दव्वाणि कालो पुग्गल जंतवो ॥ ८ ॥**

व्याख्या—धर्म अधर्म आकाशं 'द्रव्यं' इति धर्मादिभिः प्रत्येकं योज्यन्ते । एकैकमेकसङ्ख्याया एवैतेषु भावादाख्यातम् 'अर्हद्भिरिति गम्यते' । अनन्तान्यनन्तसङ्ख्यानि स्वगतभेदानन्त्याच्च कालादीनि द्रव्याणि कालः पुद्गला जन्तवश्चोक्तरूपाः । कालस्य चानन्त्यमतीताद्यपेक्षयेति ॥ ८ ॥

एषां लक्षणभेदानाह—

**गइलक्खणो उ धम्मो अहम्मो ठाणलक्खणो । भायणं सव्वदव्वाणं नहं ओगाहलक्खणं ॥ ९ ॥**

व्याख्या–गमनं गतिर्देशान्तरप्राप्तिर्लक्ष्यतेऽनेनेति लक्षणं ततश्च सा गतिर्लक्षणमस्येति गतिलक्षणस्तु धर्मो धर्मास्तिकाय । तथा अधर्म अधर्मास्तिकाय स्थिति स्थानं गतिनिवृत्तिरित्यर्थस्तल्लक्षणमस्येति स्थानलक्षण , स्थिति-परिणताना जीवपुद्गलाना स्थितिलक्षणकार्येण लक्ष्यते । भाजनमाधार, सर्वद्रव्याणां जीवादीनां नभ आकाशमवगाह अवकाश स लक्षणमस्येत्यवगाहलक्षणम्, तथावगाढु प्रवृत्तानामालम्बनीभवत्यनेनावगाहकारणत्वं नभस इति ॥ ९ ॥

वत्तणालक्खणो कालो जीवो उवओगलक्खणो । नाणेणं दंसणेण च सुहेण य दुहेण य ॥ १० ॥

व्याख्या–वर्तन्ते भवन्ति भावास्तेन तेन रूपेण तान् प्रति प्रयोजकत्व वर्तना सा लक्षणमस्येति वर्तनालक्षण क. काल ? सर्वथा वर्तनया लक्ष्यमाणत्वादस्ति काल इति भाव । जीव उपयोगो मतिज्ञानादि लक्षणं रूपमस्यासावुपयोगलक्षणोऽत एव ज्ञानेन विशेषग्राहिणा, दर्शनेन च सामान्यविषयेण, सुखेन दु खेन च 'लक्ष्यते इति गम्यते'। न हि ज्ञानादीन्यजीवेषु कदाचिदुपलभ्यन्त इति ॥ १० ॥

जीवस्यैव लक्षणमनूद्य लक्षणान्तरमाह—

नाण च दंसण चेव चरित च तवो तहा । वीरिय उवओगो य एय जीवस्स लक्खणं ॥ ११ ॥

स्पष्ट । नवरं वीर्यं वीर्यान्तरायक्षय–क्षयोपशमसमुत्थं सामर्थ्यम् । उपयोगश्चावहितत्वम् । एतत् ज्ञानादि जीवस्य लक्षणम् । एतैर्हि जीवोऽनन्यसाधारणतया लक्ष्यते ॥ ११ ॥

पुद्गलानां लक्षणमाह—

सद्दंधयार उज्जोओ पहा छायातवे इ वा । वन्न–रस–गंध–फासा पुग्गलाणं तु लक्खणं ॥ १२ ॥

व्याख्या–शब्दोऽन्धकारः 'उभयत्र सुपो लुप्' । उद्योतो रत्नादेः प्रकाशः । प्रभा चन्द्रादेः । छाया शैत्यगुणा । आतपो रवेरुष्णप्रकाशः 'इतिराद्यर्थस्ततश्च सम्बन्धभेदादीनां परिग्रहः, वा समुच्चये' वर्ण–गन्ध–रस–स्पर्शास्तु पुनः पुद्गलानां लक्षणम् । एभिरेव तेषां लक्ष्यत्वात् ॥ १२ ॥

पर्यायलक्षणमाह—

एगत्तं च पुहत्तं च संखा संठाणमेव य । संयोगा य विभागा य पज्जवाण तु लक्खणं ॥ १३ ॥

व्याख्या–एकस्य भाव एकत्वम्, भिन्नेष्वपि परमाण्वादिषु यदेकोऽयं घटादिरिति प्रतीतिहेतुः । 'चशब्द उत्तरापेक्षया समुच्चयार्थः' । पृथक्त्वं चायमस्मात् पृथगिति प्रत्ययहेतुः । सङ्ख्या एको द्वौ वेत्यादिरूपा । संस्थानं परिमंडलोऽयमित्यादिधीनिबन्धनम् 'एवेति पूरणे' संयोगा अयमङ्गुल्योः संयोग इति व्यपदेशहेतवः । विभागाश्चायमितो विभक्त इति बुद्धिहेतवः । उभयत्र सम्बन्धिभेदापेक्षया बहुत्वम् 'चशब्दो नव–पुराणाद्युपलक्षकः' । पर्यवाणां 'तुः पूरणे' लक्षणमसाधारणरूपम् । गुणानां रूपादिरूपाणां पर्यवत्वमतिप्रतीतत्वान्नोक्तम् ॥ १३ ॥

दर्शनं वक्तुमाह—

जीवाजीवा य वधो य पुन्नं पावासवो तहा । संवरो निजरा मोक्खो सतेए तहिया नव ॥ १४ ॥

व्याख्या—जीवाश्चैतन्यलक्षणा. । अजीवा धर्मास्तिकायादयः । बन्धश्च जीव—कर्मणोः सश्लेपः । पुण्यं शुभप्रकृतिरूपम् । पापमशुभं मिथ्यात्वादि । आश्रव कर्मबन्धहेतुर्हिंसाऽऽदि । तथा संवरो गुप्त्यादिभिराश्रवनिरोध. । निर्जरा विपाकात् तपसो वा कर्मपरिशाटः । मोक्ष कृत्स्नकर्मक्षयात् स्वस्वरूपावस्थानम् । सन्त्येते तथ्या सत्या निरुपचरितवृत्तयो नवसङ्ख्या 'भावा इति शेप '। मध्यमापेक्ष चेदम् । जघन्यतो जीवाजीवयोरेव बन्धादीनामन्तर्भावाद् द्विसङ्ख्यैव । उत्कृष्टतस्तु तदुत्तरोत्तरभेदविवक्षयाऽऽनन्त्यमेव स्यादिति ॥ १४ ॥

तत किम् ? इत्याह—

तहियाणं तु भावाण सब्भावे उवएसण । भावेण सद्दहतस्स सम्मत्त त वियाहियं ॥ १५ ॥

व्याख्या—तथ्याना तु भावाना जीवादिस्वरूपाणां सद्भावे सद्भावविपयमवितथसत्ताऽभिधायकमुपदेशनं गुर्वाद्युपदेश भावेन मनसा श्रद्दधतस्तथेति प्रतिपद्यमानस्य सम्यग् भाव सम्यक्त्वं दर्शनमित्यर्थः । तदिति भावश्रद्धानं मोहनीयकर्माणुक्षयक्षयोपशमसमुत्थात्मपरिणामरूप विशेपेणाख्यातं कथितम् 'अर्हदादिभिरिति गम्यम्' ॥ १५ ॥

सम्यक्त्वभेदानाह—

निस्सग्गुवएसरुई आणारुई सुत्त—बीयरुइमेव । अभिगम—वित्थाररुई किरिया—संखेव—धम्मरुई ॥ १६ ॥

व्याख्या—रुचिशब्दः प्रत्येकं योज्यते । निसर्गः स्वभावस्तेन रुचिरभिलापरूपाऽस्येति निसर्गरुचिः । उपदेशेन गुर्वादिवचनेन रुचिरस्येत्युपदेशरुचिः । आज्ञया सर्वज्ञवचोरूपया रुचिरस्य स तथा । सूत्रेणागमेन रुचिरस्य सूत्ररुचिः । बीजमिव बीजं यदेकमप्यनेकार्थबोधकं वचस्तेन रुचिर्यस्य स बीजरुचिः 'अनयोर्द्वन्द्वे रुचिशब्दोऽपि योज्यः' 'एवेति समुच्चये' । अभिगमो ज्ञानं विस्तारो व्यासस्ताभ्यां प्रत्येकं रुचिशब्दयोजनादभिगमरुचिर्विस्ताररुचिश्चेति । तथा क्रिया धर्मानुष्ठानं, संक्षेपः संग्रहः, धर्मः श्रुतधर्मादिः, तेषु रुचिरस्येति प्रत्येकं रुचिशब्दसम्बन्धात् क्रियारुचिः, संक्षेपरुचिर्धर्मरुचिश्चेति 'विज्ञेय इति शेषः' । इह सम्यक्त्वस्य जीवानन्यत्वेन यदभिधानं गुण—गुणिनोः कथञ्चिदभेदख्यापनार्थमिति संक्षेपार्थः ॥ १६ ॥

व्यासार्थमाह—

भूयत्थेणाहिगया जीवाजीवा य पुन्न—पावं च । सहसंमइयासव—संवरो य रोएइ उ निसग्गो ॥ १७ ॥

व्याख्या—भूतः सद्भूतः सत्योऽर्थो विषयो यस्य तद् भूतार्थं 'ज्ञानमिति गम्यते' तेन सद्भूता अमी अर्था इत्येवं-

रूपेणाधिगताः परिच्छिन्ना 'येनेति गम्यते' । जीवाजीवाश्च पुण्य-पापं च । कथमधिगता· ? इत्याह-'सहसंमइय' त्ति 'सोपस्कारत्वात्' सहात्मना सगता मति सहसंमति· कोऽर्थः ? परोपदेशनिरपेक्षा जातिस्मरण-प्रतिभाऽऽदि-रूपा बुद्धि· सहसमतिस्तया आश्रव-संवरौ 'चशब्दाद् बन्धादिपरिग्रह', तुरेवार्थे' रोचत एव श्रद्धत्ते एव योऽधिगताननन्तरोक्तान् जीवादीनेव स निसर्गरुचि· 'ज्ञेय इति शेषः' ॥ १७ ॥

अमुमेवार्थं पुन स्पष्टयन्नाह—

जो जिणदिट्ठे भावे चउव्विहे सद्दहइ सयमेव । एमेव नन्नह त्ति य स निसग्गरुइ त्ति नायव्वो ॥ १८ ॥

व्याख्या-यो जिनदृष्टानर्हदुपदिष्टान् भावान् जीवादींश्चतुर्विधान् द्रव्य-क्षेत्र-काल-भावभेदतो नामादिभेदतो वा चतुष्प्रकारान् श्रद्धाति तथेति प्रतिपद्यते स्वयमेवान्योपदेशं विना । श्रद्धानमेवोल्लेखयति 'एमेव' त्ति एवमेतद् यथा जिनैर्दृष्ट जीवादि नान्यथेति 'च· समुच्चये' स निसर्गरुचिरिति ज्ञातव्य· ॥ १८ ॥

उपदेशरुचिमाह—

एए चेव उ भावे उवइट्ठे जो परेण सद्दहई । छउमत्थेण जिणेण व उवएसरुइ त्ति नायव्वो ॥ १९ ॥

व्याख्या-एतांश्चैव 'तुः पूरणे' भावान् जीवादीनुपदिष्टान् परेणान्येन श्रद्धाति, कीदृशेन परेण ? छद्मस्थेनानुत्पन्न-केवलेन जिनेन वोत्पन्नकेवलज्ञानेनार्हदादिना स उपदेशरुचिरिति ज्ञातव्य· ॥ १९ ॥

आज्ञारुचिमाह—

रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ । आणाए रोयंतो सो खलु आणारुई नाम ॥ २० ॥

व्याख्या—रागोऽभिष्वङ्गो द्वेषोऽप्रीतिर्मोहः शेषमोहनीयप्रकृतयोऽज्ञानं मिथ्याज्ञानरूपं यस्यापगतं नष्टं भवति 'सर्वथाऽस्यैतदपगमासम्भवाद् देशत इति गम्यते' 'अपगतशब्दो रागादिभिः प्रत्येकं सम्बध्यते'। एतदपगमाच्च 'आणाए रोयंतो' त्ति आज्ञयाऽऽचार्यादिसम्बन्धिन्या रोचमानस्तथेति प्रतिपद्यमानो जीवादि मापतुपादिवत् स 'खलुर्निश्चये' आज्ञारुचिः 'नामेत्यभ्युपगमे ज्ञेयः' । अत्र दृष्टान्तः—

भन्दकन्दवसन्ताभे श्रीवसन्तपुरेऽभवत् । धर्मघोषगुरोः शिष्यः शिक्षाद्वयसुशिक्षितः ॥ १ ॥
तप्यमानस्तपस्तीव्रं व्रतकर्मसु कर्मठः । योगोद्वहनपूर्वं सोऽधीयानः श्रुतमादरात् ॥ २ ॥
अन्येद्युरुदयात् ज्ञानावरणीयस्य कर्मणः । एकमप्यक्षरं नागात् प्राक्कृतस्याशुभायतेः ॥ ३ ॥
नित्यं पुनः पुनस्तस्य समुद्घोषयतः श्रुतम् । सुगुरूनाह किं कुर्वे सर्वेऽप्युपहसन्ति माम् ॥ ४ ॥
गुरुणोचे महाभाग ! मा रुषो मा तुषश्च भोः ! । एतदेव पदं शश्वत् त्वमुद्घोषय भावतः ॥ ५ ॥
प्रमाणं मेऽस्तु गुर्वाज्ञा गुरूक्तं तत्पदं पठन् । गुरूदितपदस्थाने मौग्ध्यान्मा तुषेत्यवक् ॥ ६ ॥

प्राख्यद् गुरुः पुनर्भद्र ! मा रुषेत्यादिकं पठ । तत्कर्मदोषतो मापेत्याद्येव स पठेन्मुहुः ॥ ७ ॥
आज्ञाश्रद्ध स सद्ध्यानो मापेत्यादि पठन् मुहु । केवलं प्राप्य सक्षीणकृत्स्नकर्माऽऽप निर्वृतिम् ॥ ८ ॥

॥ इत्याज्ञारुचौ मापतुषमुनिकथा ॥ २० ॥

सूत्ररुचिमाह—

जो सुत्तमहिज्जतो सुएण उगाहई उ सम्मत्तं । अंगेण बाहिरेण वा सो सुत्तरुइ त्ति नायव्वो ॥ २१ ॥

व्याख्या–यः सूत्रमागममधीयानः पठन् श्रुतेनाधीयमानेनावगाहते प्राप्नोति 'तु पूरणे' सम्यक्त्वम् । अङ्गेनाचारादिना बाह्येन वाऽनङ्गप्रविष्टेनोत्तराध्ययनादिना वा स गोविन्दवाचकवत् सूत्ररुचिर्ज्ञातव्य. ॥ २१ ॥

बीजरुचिमाह—

एगेण अणेगाइ पयाइ जो पसरई उ सम्मत्तं । उदए व्व तेल्लबिंदू सो बीयरुइ त्ति नायव्वो ॥ २२ ॥

व्याख्या–एकेन 'प्रक्रमात् पदेन' जीवादिना 'सुव्व्यत्ययात्' अनेकेषु बहुषु पदेषु जीवादिषु 'तुरेवार्थे' यः प्रसरत्येव व्यापकबुद्धितया 'सम्मत्तं' ति अभेदोपचारात् सम्यक्त्ववान् । क क इव ? उदक इव तैलबिन्दुर्यथोदकैकदेशगतोऽपि तैलबिन्दु सर्वमुदकमाक्रामति तथा तत्त्वैकदेशोत्पन्नरुचिरप्यात्मा तथाविधक्षयोपशमादशेषतत्त्वेषु रुचिमान्

भवति । स एवंविधो वीजरुचिर्ज्ञातव्यो यथा ह्येकमपि वीजं क्रमेणानेकबीजानां जनकमेवमस्यापि रुचिर्विषयभेदतो रुच्यन्तराणामिति ॥ २२ ॥

अभिगमरुचिमाह—

सो होइ अभिगमरुई सुअनाणं जेण अत्थओ दिट्ठं । एक्कारसमंगाइं पइन्नगं दिट्ठिवाओ य ॥ २३ ॥

व्याख्या—स भवत्यभिगमरुचिः श्रुतज्ञानं येनार्थत इति 'क्यब्लोपे पञ्चमी' ततोऽर्थोऽभिधेयस्तमाश्रित्य दृष्टमुपलब्धं । को भावः ? येन श्रुतज्ञानस्यार्थोऽधिगतो भवति । किं ततः श्रुतज्ञानम् ? इत्याह—एकादशाङ्गान्याचाराङ्गादीनि । प्रकीर्णकमिति जातावेकत्वम् । ततः प्रकीर्णकान्युत्तराध्ययनादीनि । दृष्टिवादः परिकर्मसूत्रादिः 'चशब्दादुपाङ्गान्यौपपातिकादीनि' ॥ २३ ॥

विस्ताररुचिमाह—

दव्वाण सव्वभावा सव्वपमाणेहिं जस्स उवलद्धा । सव्वाहिं नयविहीहि य वित्थाररुइ त्ति नायव्वो ॥ २४ ॥

व्याख्या—द्रव्याणां धर्मास्तिकायादीनां सर्वभावा एकत्वपृथक्त्वाद्यशेषपर्यायाः सर्वप्रमाणैः प्रत्यक्षादिभिर्यस्योपलब्धाः 'सव्वाहिं' ति सर्वैर्नयविधिभिर्नैगमादिभेदैः स विस्ताररुचिरिति ज्ञातव्यः ॥ २४ ॥

क्रियारुचिमाह—

दंसण-नाण-चरित्ते तव-विणए सच्चासमिइ-गुत्तीसु। जो किरियाभावरुई सो खलु किरियारुई नाम ॥२५॥

व्याख्या—दर्शन-ज्ञान-चारित्रे, तपो-विनये, सत्या निरुपचरिता या समिति-गुप्तयस्तासु, य क्रियाभावरुचि. को भावः ? दर्शनाद्याचारानुष्ठाने यस्य भावतो रुचिरस्ति स खलु क्रियारुचिर्नामेति प्रकाशभणने। इह चारित्रान्तर्गतत्वेऽपि तप.प्रभृतीना विशेपतो मुक्त्यङ्गत्वख्यापनार्थं पुनरभिधानम् ॥ २५ ॥

सङ्क्षेपरुचिमाह—

अणभिग्गहियकुदिट्ठी संखेवरुइ त्ति होइ नायव्वो। अविसारओ पवयणे अणभिग्गहिओ य सेसेसु ॥२६॥

व्याख्या—अनभिगृहीताऽनङ्गीकृता कुदृष्टि सौगतमतादिरूपा येन स तथा सक्षेपरुचिरिति भवति ज्ञातव्य । अविशारदोऽकुशलः प्रवचने सर्वज्ञशासने, अविद्यमानमभीत्याभिमुख्येन गृहीतं ग्रहणं ज्ञानमस्येत्यनभिगृहीतोऽनभिज्ञ इत्यर्थ.। क्व ? इत्याह—शेपेपु कपिलादिमतेपु। अयं भावो य उक्तविशेपणः संक्षेपेणैव चिलातीपुत्रवदुपशमादिपदत्रयेण तत्त्वरुचिमाप्नोति स सङ्क्षेपरुचिरिति। अत्र दृष्टान्तः—

क्षितिप्रतिष्ठिते द्रङ्गे क्षमाभृत्साधुशालिनि। क्षितिप्रतिष्ठितद्विष्टक्ष्माभृत्साधुमालिनि ॥ १ ॥

विज्ञंमन्यो यज्ञदेवद्विजो मिथ्यात्ववासितः । यज्ञे निन्दन् जिनान् जैनयतिना वादमातनोत् ॥ २ ॥
जितस्य तस्य चादायि दीक्षा तेन महात्मना । स शिष्यो यो जितो जेतुर्भवितेति प्रतिज्ञया ॥ ३ ॥
सोऽथ शासनदेव्योचे भोः ! व्रतं चर भावतः । तेनैव सफलं तच्च तेजसेवाक्षियुग्मकम् ॥ ४ ॥
न सद्व्रतोऽप्यसौ साधुर्निन्दामन्तर्वसन् जहौ । शाड्वलोऽपीक्षुसक्तोऽपि निम्बः किं कटुतां त्यजेत् ? ॥ ५ ॥
तत्प्रेयसी प्रिये रागं नौज्झत् सद्वाग्भिरप्यलम् । कम्बलीवाब्दधाराभिः कृमिरागं सुरञ्जिता ॥ ६ ॥
ततः सा तं वशीकर्तुं व्यधात् कार्मणमुत्कटम् । वशा रक्ता विरक्ताऽपि वह्निज्वालेव तापयेत् ॥ ७ ॥
कार्मणेन क्रमात् सोऽथोष्णेनेव व्रततिव्रजः । सन्ततं शोष्यमाणाङ्गः स्वर्गलोकमवासवान् ॥ ८ ॥
तद्दुःखदुःखिता साऽपि व्रतं लात्वा दिवं ययौ । किन्त्वनालोच्य तत्पापं स्वकृतं पतिकष्टदम् ॥ ९ ॥
च्युत्वा भूदेवजीवोऽभूत् पुरे राजगृहे ततः । पुत्रश्चिलातिकाचेट्या धनसार्थेशवेश्मनि ॥ १० ॥
भद्राया धनभार्याया द्विजजाया दिवश्च्युता । सुंसुमाऽऽख्या सुता जाता रूपादिगुणधारिणी ॥ ११ ॥
चिलातीपुत्रकश्चेटः श्रेष्ठिना बालहारकः । स्वपुत्र्या विहितः सोऽथ सा च रोदिति नित्यशः ॥ १२ ॥
तदवाच्यप्रदेशे तु करस्पर्शं चकार सः । यदा चेटस्तदा साऽपि न्यवर्तत सुरोदनात् ॥ १३ ॥
तच्चिह्ने विक्रियां कुर्वन् स दृष्टः श्रेष्ठिनाऽन्यदा । पापीयानेष इत्युच्चैर्निरवासि गृहात् स्वकात् ॥ १४ ॥

खपट्टे स्नाक् पल्लीशेन मुमूर्षुणा ॥ १५ ॥
ततोऽगात् सिंहपल्लीं स मल्लीमिव मधुव्रतः । ततोऽस्यापि
भिल्लानुवाच सोऽन्येद्युर्मुष्णीमो धनमन्दिरम् । द्रव्यं वः सुंसुमा कन्या मम राजगृहे पुरे ॥ १६ ॥
निश्योकस्तेषु मुष्णत्सु निलीयास्थात् धनो रहः । पञ्चभिः सूनुभिर्युतान् देहे देहीन्द्रियैरिव ॥ १७ ॥
पल्लीशः सुंसुमां लात्वा चौराश्च द्रविणं गताः । पुरारक्षैः सुतां नेतुमन्वगात् ससुतो धनः ॥ १८ ॥
चौरान् जित्वा न्यवर्तन्त तलारक्षाः पुरं प्रति । धनोऽन्वधावत् ससुतो नयन्तं सुंसुमां तु तम् ॥ १९ ॥
यावन्मिलत्यसौ तावत् पल्लीशः सुंसुमाशिरः । पद्मनालमिव च्छित्त्वा काकनाशं ननाश सः ॥ २० ॥
आरुह्यासिररण्यं स प्राविशत् सुंसुमासुखम् । करस्थ रागतः पश्यन् सशम्बल इवाध्वगः ॥ २१ ॥
धनः पुत्र्याः कबन्धं स दृष्ट्वा शोकार्दितोऽरुदत् । ससुतो ववले दैवं निन्दन् राजगृहं प्रति ॥ २२ ॥
क्रमात् प्रापाटवीं श्रेष्ठी क्षुत्-तृट्-शोक-श्रमातपैः । पञ्चाग्निसाधक इवातेपे च सुतसंयुतः ॥ २३ ॥
न खाद्यं नैव पेयं च न तस्या जीवनौषधम् । पश्यन् हिंस्रादिजीवेभ्यो मृत्यूपायं च केवलम् ॥ २४ ॥
आत्मनस्तनयानां च स दृष्ट्वा विषमां दशाम् । गच्छन् विचिन्तयेदेव चित्ते दैवविजृम्भितम् ॥ २५ ॥
यत् सुताऽपहृताऽनेन प्रापिता वयमापदम् । करस्थं नाशयत्येव बलीयान् विधिरुच्चकैः ॥ २६ ॥
प्रसाद्यते न दानेन विनयेन न गृह्यते । सेवयाऽऽवर्ज्यते नैव केयं दुःसाध्यता विधेः ! ॥ २७ ॥

विबुधैर्बोध्यते नैव बलवद्भिर्न रुध्यते । न साध्यते तपस्विभिः प्रतिमल्लोऽस्तु को विधेः ? ॥ २८ ॥
अहो ! दैवं मित्रमिव कदाचिदनुकम्पते । कदाचित् परिपन्थीव निःशङ्कं प्रणिहन्ति च ॥ २९ ॥
विधिः पितेव सर्वत्र कदाचित् परिरक्षति । कदाचित् पीडयत्येव दायाद इव दुर्मदः ॥ ३० ॥
अनुकूले विधौ पुंसां विषमप्यमृतायते । विपरीते पुनस्तत्रामृतमेव विषायते ॥ ३१ ॥
स एवं चिन्तयन्नेव सम्प्राप निजमन्दिरम् । सशोकः सुंसुमापुत्र्या विदधे चौर्ध्वदेहिकम् ॥ ३२ ॥
संसारानित्यतां श्रेष्ठी विरागार्हो विभावयन् । श्रीवीरान्ते परिव्रज्य तपस्तप्त्वाऽगमद् दिवम् ॥ ३३ ॥
चैलातेयः पुरो गच्छन् पश्चात्तापपरः पथि । ध्यानलीनं मुनिं कञ्चित् कायोत्सर्गस्थमैक्षत ॥ ३४ ॥
क्रूराकृतिः क्रूरकर्मा स उवाच महामुने ! । संक्षेपाद् धर्ममाचक्ष्व न चेच्छेत्स्यामि ते शिरः ॥ ३५ ॥
योग्यं मत्वा मुनिः प्राहोपशमः कार्य एव भोः ! । विवेकः संवरश्चैते कृतपातकघातकाः ॥ ३६ ॥
इत्युक्त्वोत्पतिते साधौ मन्त्रवत् तत् पदत्रयम् । ध्यायतस्तस्य तस्यार्थो जागरूकोऽभवद् हृदि ॥ ३७ ॥
क्रोधत्यागो ह्युपशमो हेयोपादेयबोधकः । विवेकः संवरस्तु स्यात् संवृतेन्द्रियचित्तता ॥ ३८ ॥
इत्थं पदत्रयस्यार्थं भावयन् शुभभावतः । एकान्तेऽस्थात् प्रतिमया मुक्तशीर्षाऽसिसङ्ग्रहः ॥ ३९ ॥
सूचिमुख्योऽसृजो गन्धात् तत्र प्राप्ताः पिपीलिकाः । व्यधुरर्तिविधायिन्यस्तद्वपुश्चालिनीनिभम् ॥ ४० ॥

दुष्कर्मनिर्गमद्वारकर्तृत्वेनोपकारिका । ममैता· कीटिका एवं शुद्धध्यानं बभार स· ॥ ४१ ॥
पिपीलिकाकृता पीडा सहमानोऽद्रिनिश्चलः । स्व·सौख्यमाप सद्ध्यान· सार्धाहर्युगलेन स· ॥ ४२ ॥

॥ इति सक्षेपरुचौ चिलातीपुत्रकथा ॥ २६ ॥

धर्मरुचिमाह—

जो अत्थिकायधम्मं सुयधम्म खलु चरित्तधम्मं च । सद्दहइ जिणाभिहिय सो धम्मरुइ त्ति नायव्वो ॥ २७ ॥

व्याख्या–योऽस्तिकायाना धर्मादीनां धर्मो गत्युपष्टम्भादिरस्तिकायधर्मस्तम् 'जातावेकवचनम्', श्रुतधर्ममङ्गप्रविष्टाऽऽदिरूपम्, 'खलुरलङ्कारे' चारित्रधर्मं वा सामायिकादि 'चस्य वाऽर्थत्वात्', श्रद्धाति तथेति प्रतिपद्यते जिनाभिहितं स धर्मरुचिरिति ज्ञातव्य· । शिष्यमतिव्युत्पत्त्यर्थं चेत्थ सम्यक्त्वभेदाभिधानम्, अन्यथा हि निसर्गोपदेशयोरधिगमादौ वा क्वचित् केषाचिदन्तर्भाव इति भाव ॥ २७ ॥

सम्यक्त्वलिङ्गानाह—

परमत्थसंथवो वा सुदिट्ठपरमत्थसेवणा वा वि । वावन्नकुदंसणवज्जणा य सम्मत्तसद्दहणा ॥ २८ ॥

व्याख्या–परमार्था जीवादयस्तेपु संस्तवो गुणोत्कीर्तनम्, तत्स्वरूपपरिभावनाजनितः परिचयो वा परमार्थसंस्तव· ।

तथा सुष्ठु यथावद्दर्शितया दृष्टाः परमार्था जीवादयो यैस्ते सुदृष्टपरमार्था आचार्यादयस्तेषां सेवनम् 'वाशब्दाद् यथा-
शक्ति तद्वैयावृत्यप्रवृत्तिश्च, अपिः समुच्चये'। 'दर्शनशब्दः प्रत्येकमभिसम्बध्यते' व्यापन्नं विनष्टं दर्शनं येषां ते व्याप-
न्नदर्शनास्तादृक्कर्मोदयाद् वान्तसम्यक्त्वा निह्नवादयः तथा कुदर्शनाः शाक्यादयस्तेषां वर्जनं परिहारो व्यापन्नकुद-
र्शनवर्जनम् 'सर्वत्र सूत्रत्वात् स्त्रीत्वम्, चः समुच्चये' सम्यक्त्वं श्रद्धीयते—अस्तीति प्रतिपद्यतेऽनेनेति श्रद्धानं
सम्यक्त्वलिङ्गमित्यर्थः ॥ २८ ॥

सम्यक्त्वमाहात्म्यमाह—

नत्थि चरित्तं सम्मत्तविहूणं दंसणे उ भइयव्वं। सम्मत्त–चरित्ताइं जुगवं पुव्वं व सम्मत्तं ॥ २९ ॥

व्याख्या–नास्ति न विद्यते 'उपलक्षणत्वान्नासीन्न भविष्यति' चारित्रं सम्यक्त्वविहीनम्। को भावः? यावन्न
सम्यक्त्वोत्पादो न तावच्चारित्रम्। दर्शने तु सम्यक्त्वे सति पुनर्भक्तव्यं भजनीयं भवति वा नवा 'अर्थाच्चारित्रम्'।
यतः सम्यक्त्व–चारित्रे युगपदेककालं 'उत्पद्येते इति शेषः'। 'पुव्वं व' त्ति पूर्वं वा चारित्रोत्पादात् सम्यक्त्वोत्प-
त्तिः। ततो यदा युगपदुत्पादस्तदा तयोः सहभावः, यदा तु तथाविधक्षयोपशमाभावतो न तथोत्पादस्तदा सत्यपि
सम्यक्त्वे न चारित्रमिति दर्शने भाज्यमिति ॥ २९ ॥

अन्यच्च—

नादंसणिस्स नाण नाणेण विणा न हुंति चरणगुणा ।

अगुणिस्स नत्थि मोक्खो नत्थि अमोक्खस्स निव्वाण ॥ ३० ॥

व्याख्या–नादर्शनिनो दर्शनरहितस्य ज्ञानमिति सम्यग्ज्ञानम् । ज्ञानेन विना न भवन्ति चरणगुणा , अत्र चरण व्रतादि, गुणाः पिण्डविशुद्ध्यादय. । अगुणिनोऽविद्यमानगुणस्य 'चरणाविनाभावित्वाद् यथोक्तगुणानाम्' अविद्यमान-चरणस्य च नास्ति मोक्ष. कर्मक्षयलक्षण. । नास्त्यमुक्तस्य 'कर्मणेति गम्यते' निर्वाणं निर्वृतिर्मुक्तिपदप्राप्तिरित्यर्थ. ॥ ३० ॥

सम्यक्त्वस्याष्टाचारानाह—

निस्सकिय निक्कखिय निव्वितिगिच्छा अमूढदिट्ठी य । उववूह–थिरीकरणे वच्छल्ल–पभावणे अट्ठ ॥३१॥

व्याख्या–नि.शङ्कित देशत सर्वतश्च शङ्कारहितम् । निष्काङ्क्षित शाक्याद्यन्यान्यदर्शनग्रहात्मककाङ्क्षारहितम् । विचिकित्सा फल प्रति सन्देहो यथा किमियत. क्लेशस्य फल स्यादुत नेति ?, अथवा विदो विज्ञास्ते च तत्त्वत साधव एव तज्जुगुप्सा यथा किममी यतयो मलदिग्धदेहाः ? प्रासुकजलस्नानेन हि कोऽत्र दोष. स्यादित्यादि निन्दा तदभावो निर्विचिकित्सं निर्विजुगुप्सं वा 'आर्षत्वादेव पाठ. सूत्रे' । अमूढा ऋद्धिमत्कुतीर्थिकदर्शनेऽप्यवगीतमस्म-द्दर्शनमिति मोहरहिता दृष्टिर्बुद्धिरूपा अमूढदृष्टि. । अयं चतुर्विधोऽप्याचार आन्तर उक्त । बाह्य त्वाह—'उववूह'

त्ति उपबृंहा दर्शनादिगुणवतां प्रशंसया तत्तद्गुणपरिवर्धनं सा च स्थिरीकरणं चाभ्युपगतधर्मानुष्ठानं प्रति सीदतां स्थैर्याऽऽपादनमुपबृंहा–स्थिरीकरणे । वात्सल्यं साधर्मिकजनस्य भक्त–पानाद्युचितप्रतिपत्तिकरणं तच्च प्रभावना च स्वतीर्थोन्नतिहेतुचेष्टासु प्रवर्तनात्मिका वात्सल्य–प्रभावने । अष्टैते 'दर्शनाचाराः स्युरिति शेषः' । एतच्च ज्ञानाचाराद्युपलक्षकम्, यद्वा दर्शनस्यैव यदाचाराभिधानं तदस्यैवोक्तन्यायेन मोक्षमार्गमूलतासमर्थनार्थम् ॥ ३१ ॥

एवं ज्ञान–दर्शनाख्यं मुक्तिमार्गमुक्त्वा चारित्ररूपं तमेवाह—

सामाइय त्थ पढमं छेओवट्ठावणं भवे बीयं । परिहारविसुद्धीयं सुहुमं तह संपरायं च ॥ ३२ ॥

अकसाय अहक्खायं छउमत्थस्स जिणस्स वा । एयं चयरित्तकरं चारित्तं होइ आहियं ॥ ३३ ॥

अनयोर्व्याख्या–समो राग–द्वेषरहितः 'प्रस्तावाच्चित्तपरिणामः' तस्मिन्नायो गमनं समायो यद्वा समानां ज्ञान–दर्शन–चारित्राणामायो लाभः समायः स एव सामायिकं सर्वसावद्यविरतिरूपम् 'यद्यपि सर्वमपि चारित्रमविशेषतः सामायिकं तथापि च्छेदादिविशेषैर्विशेष्यमाणमर्थतः शब्दान्तरतश्च नानात्वं भजते' प्रथमं पुनरविशेषणात् सामान्यशब्द एवावतिष्ठते । एतच्च द्विधा इत्वरं यावत्कथिकं च । तत्रेत्वरमल्पकालं भरतैरावताद्यान्त्यार्हत्तीर्थयोरुपस्थापनायां छेदोपस्थापनीयचारित्रसद्भावेन तत्र तद्व्यपदेशाभावात् । यावत्कथिकं च भरतैरावतयोर्मध्यमतीर्थकृत्तीर्थेषु महावि-

देहार्हत्तीर्थेषु चोपस्थापनाया अभावात् तद्व्यपदेशस्य यावज्जीवमपि सम्भवात् 'स्थ इति पादपूरणे' तत्प्रथमं चारित्रं सामायिक। तथा च्छेद' पूर्वपर्यायव्यवच्छेदरूपस्तद्युक्तोपस्थापना महाव्रतारोपणरूपा यस्मिंस्तच्छेदोपस्थापनम्। तदपि द्विधा निरतिचार सातिचार च। तत्र निरतिचार यदित्वरसामायिकस्य शैक्षकस्य तीर्थान्तर प्रतिपद्यमानस्य वा व्रतमारोप्यते, सातिचार तु मूलघातिनो यतेर्यत् पुनर्व्रतारोपण तद् भवेद् द्वितीय चारित्रम्। तथा परिहारस्तपोविशेषस्तेन विशुद्धिर्यस्मिंस्तत्परिहारविशुद्धिकं। तद् द्विभेद निर्विशमानक निर्विष्टकायिकं च। तत्राद्यास्तदासेवका द्वितीयास्त्वासेवितविवक्षितचारित्रकास्तदभेदाच्चारित्रमपि तथा। अत्र च नवको गणस्तत्र चत्वार' परिहारका अन्ये तद्वैयावृत्त्यकराश्चत्वारोऽनुपरिहारका एकस्तु कल्पस्थितो वाचनाचार्य। एतेषां चाय परिहारस्तथाहि—एतच्चारित्रवतामारम्भत एव ग्रीष्मे जघन्य चतुर्थं मध्यमं षष्ठमुत्कृष्टमष्टमम्। शिशिरे जघन्यं षष्ठ मध्यममष्टममुत्कृष्टं दशमम्। वर्षासु जघन्यमष्टमं मध्यम दशममुत्कृष्टं द्वादशमम्। पारणके चाचाम्लम्। किञ्च श्रुतोक्तासु सप्तसु भिक्षास्वाद्ययोर्भिक्षयोर्नियमोऽग्रेतनासु पञ्चसु भिक्षाग्रहणं तेषामिति। कास्ता' सप्त? इत्यत्रागम'—

"संसट्ठमसंसट्ठा उद्धड तह अप्पलेवडा चेव। उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया" ॥ १ ॥

कल्पस्थितादय' पञ्च प्रत्यहमाचाम्लमेव कुर्वन्त्येवं षण्मास यावत् तप कृत्वा परिहारका अनुपरिहारका भवन्त्य-

१ संसृष्टाऽसंसृष्टे उद्धृता तथाऽल्पलेपा चैव। उद्गृहीता प्रगृहीता उज्झितधर्मा च सप्तमी ॥ १ ॥

नुपरिहारकाः परिहारकीभूय षण्मासं यावदेवं तपः कुर्वन्ति । ततः कल्पस्थितस्तेनैव विधिना षण्मासं यावत् तत् तपः करोति । शेषेष्वेकः कल्पस्थितः स्थाप्यतेऽन्ये सर्वेऽप्यनुपरिहारकाश्चेत्येवमष्टादशमासप्रमाणः कल्पो ज्ञातव्यः । कल्पसमाप्तौ तु पुनः परिहारविशुद्धिकं जिनकल्पं वा गच्छं वा श्रयन्ते । एतत्कल्पप्रतिपद्यमानका जिनस्य जिनपार्श्वसेवकस्य वा समीपे प्रतिपद्यन्ते नान्यस्य पार्श्वे इति एतेषां यच्चारित्रं तत् परिहारविशुद्धिकं तृतीयम् । 'तथेत्यानन्तर्ये' छन्दोभङ्गभयादेवमुपन्यासः 'बिन्दुश्चार्षत्वात्' सूक्ष्मः किट्टीकरणतः सम्परायो लोभाख्यः कषायो यस्मिंस्तत् सूक्ष्मसम्परायम् । एतच्चोपशमश्रेणि-क्षपकश्रेण्योर्लोभाणुवेदनसमये सम्भवतीति चतुर्थः ॥ अकषायं क्षपितोपशमितकषायावस्थाभावि यथाख्यातमर्हत्कथितस्वरूपानतिक्रमवत् छद्मस्थस्योपशान्तक्षीणमोहाख्यगुणस्थानद्वयवर्तिनो जिनस्य वा केवलिनस्तत् पञ्चमं चारित्रम् । एतत् सामायिकादि चयस्य राशेः 'प्रस्तावात् कर्मणां' रिक्तं विरेकोऽभाव इत्यर्थस्तत् करोतीत्येवंशीलं चयरिक्तकरं चारित्रं भवत्याख्यातं कथितं 'अर्हदादिभिरिति गम्यते' इति गाथाद्वयार्थः॥ ३३॥

तपोरूपं मार्गमाह—

तवो य दुविहो वुत्तो बाहिरब्भिंतरो तहा । बाहिरो छव्विहो वुत्तो एवमब्भिंतरो तवो ॥ ३४ ॥

व्याख्या–तपश्च द्विविधमुक्तं बाह्यमाभ्यन्तरं तथा । तत्र बाह्यं षड्विधमेवमाभ्यन्तरमपीति ॥ ३४ ॥

# अथैकोनत्रिंशं सम्यक्त्वपराक्रमाख्यमध्ययनम् ।

अनन्तराध्ययने मोक्षमार्गगतिरुक्ता । सा च वीतरागत्वपूर्विकेति यथा तत् स्यात् तथाऽभिधायकमेकोनत्रि-
शमध्ययनमारभ्यते । तत्रादिसूत्रम्—

सुय मे आउसं ! तेण भगवया एवमक्खाय। इह खलु सम्मत्तपरक्कमे नामज्झयणे समणेणं
भगवया महावीरेण कासवेण पवेइए । ज सम्म सद्दहित्ता पत्तियाइत्ता रोयइत्ता फासित्ता
पालइत्ता तीरइत्ता किट्टइत्ता सोहइत्ता आराहित्ता आणाए अणुपालइत्ता बहवे जीवा सिज्झंति
बुज्झति मुच्चति परिनिव्वायंति सव्वदुक्खाणमत करेति ॥

व्याख्या—श्रुतं मे मया आयुष्मन्निति सुधर्मस्वामी जम्बूस्वामिनं प्रत्याह । तेन भगवता 'प्रक्रमाद् वीरेण' एव-
मिति वक्ष्यमाणप्रकारेणाख्यात कथितम् । तमेवाह-इहास्मिन् जगति प्रवचने वा खलु निश्चित सम्यक्त्वे सति
पराक्रम उत्तरोत्तरगुणप्रतिपत्त्या कर्मारिजयसामर्थ्यलक्षणोऽर्थाज्जीवस्यास्मिन्निति सम्यक्त्वपराक्रमं नामाध्ययनं
श्रमणेन भगवता महावीरेण काश्यपेन काश्यपगोत्रोद्भवेन प्रवेदितं स्वतः प्रवेदितमेव भगवता ममेदमाख्यातमिति
भाव. । यदिस्येतदध्ययन सम्यक् श्रद्धाय शब्दार्थोभयरूपं सामान्येन प्रतिपद्य, प्रतीत्य विशेषत इत्थमेवेति निश्चि-

त्य, रोचयित्वा तदध्ययनविषयं तदुक्तार्थानुष्ठानविषयं वाऽभिलाषमात्मन उत्पाद्य, स्पृष्ट्वा तदुक्तानुष्ठानतः, पालयित्वा तदुक्तानुष्ठानस्यातीचाररक्षणेन, तीरयित्वा तदुक्तानुष्ठानं पारं नीत्वा, कीर्तयित्वा स्वाध्यायविधानतः संशब्द्य, शोधयित्वा तदुक्तानुष्ठानस्य तत्तद्गुणस्थानावासितः शुद्धिप्रापणेन, आराध्य यथावदुत्सर्गापवादकौशल्येन तदर्थासेवनेन । एतत् किं स्वमनीषिकया ? नेत्याह–आज्ञया गुरुनियोगरूपया अनुपाल्य नित्यमासेव्य बहवो जीवाः सिध्यन्ति इहैवागमसिद्धत्वादिना, बुध्यन्ते घातिकर्मक्षयेण, मुच्यन्ते भवोपग्राहिकर्मचतुष्टयेन, परिनिर्वान्ति कर्मदावानलोपशमनेनात एव सर्वदुःखानां शारीर–मानसानामन्तं विनाशं कुर्वन्ति मोक्षावाप्त्येति ॥

सम्प्रति सम्बन्धाभिधानपूर्वं सुप्रस्तुताध्ययनार्थमाह—

तस्स णं अयमट्ठे एवमाहिज्जइ । तं जहा–संवेगे १ निव्वेए २ धम्मसद्धाए ३ गुरु–साहम्मियसुस्सूसणया ४ आलोयणया ५ निंदणया ६ गरहणया ७ सामाइए ८ चउवीसत्थए ९ वंदणए १० पडिक्कमणे ११ काउसग्गे १२ पच्चक्खाणे १३ थय–थुइमंगले १४ कालपडिलेहणया १५ पायच्छित्तकरणे १६ खमावणया १७ सज्झाए १८ वायणया १९ पडिपुच्छणया २० परियट्टणया २१ अणुप्पेहा २२ धम्मकहा २३ सुयस्स आराहणया २४ एगग्गमणसंनिवेसणया २५ संजमे

२६ तवे २७ वोदाणे २८ सुहसाए २९ अपडिवद्धया ३० विवित्तसयणासणसेवणया ३१ विणियट्टणया ३२ संभोगपच्चक्खाणे ३३ उवहिपच्चक्खाणे ३४ आहारपच्चक्खाणे ३५ कसायपच्चक्खाणे ३६ जोगपच्चक्खाणे ३७ सरीरपच्चक्खाणे ३८ सहायपच्चक्खाणे ३९ भत्तपच्चक्खाणे ४० सब्भावपच्चक्खाणे ४१ पडिरूवणया ४२ वेयावच्चे ४३ सव्वगुणसपुन्नया ४४ वीयरागया ४५ खती ४६ मुत्ती ४७ मद्दवे ४८ अज्जवे ४९ भावसच्चे ५० करणसच्चे ५१ जोगसच्चे ५२ मणगुत्तया ५३ वयगुत्तया ५४ कायगुत्तया ५५ मणसमाहारणया ५६ वयसमाहारणया ५७ कायसमाहारणया ५८ नाणसपन्नया ५९ दसणसंपन्नया ६० चरित्तसपन्नया ६१ सोइंदियनिग्गहे ६२ चक्खिदियनिग्गहे ६३ घाणिंदियनिग्गहे ६४ जिब्भिदियनिग्गहे ६५ फासिदियनिग्गहे ६६ कोहविजए ६७ माणविजए ६८ मायाविजए ६९ लोहविजए ७० पेज्ज-दोस-मिच्छादंसणविजए ७१ सेलेसी ७२ अकम्मया ७३ ॥

व्याख्या–तस्य सम्यक्त्वपराक्रमाध्ययनस्य 'णमिति वाक्यालङ्कारे' अयमित्यनन्तरं वक्ष्यमाणोऽर्थोऽभिधेय एवमसुना प्रकारेणाख्यायते कथ्यते 'महावीरेणेति गम्यम्' 'तद् यथेति वक्ष्यमाणतदर्थोपन्यासार्थः' ॥

अथ त्रिसप्ततिपदानि प्रतिपदमक्षरसंस्कारपुरस्सरं फलोपदर्शनद्वारेण व्याचिख्यासुराह—

संवेगेणं भंते! जीवे किं जणयइ?। संवेगेणं अणुत्तरं धम्मसद्धं जणयइ। अणुत्तराए धम्मसद्धाए संवेगं हव्वमागच्छइ। अणंताणुबंधिकोह–माण–माया–लोभे खवेइ। नवं कम्मं न बंधइ। तप्पच्चइयं च णं मिच्छत्तविसोहिं काऊण दंसणाराहए हवइ। दंसणविसोहीए य णं विसुद्धाए अत्थेगइए तेणेव भवग्गहणेणं सिज्झई। सोहीए य णं विसुद्धाए तच्चं पुणो भवग्गहणं नाइक्कमइ ॥ १ ॥

व्याख्या–संवेगेन मोक्षाभिलाषेण हे भदन्त! पूज्य! जीवः किं जनयति? कतरं गुणमुत्पादयतीत्यर्थ इति प्रश्नः। अत्रोत्तरमाह–संवेगेनानुत्तरां प्रधानां धर्मश्रद्धां श्रुतधर्मादिक्रियारुचिं जनयति। तया अनुत्तरया धर्मश्रद्धया संवेगमर्थात् तमेव विशिष्टतरं 'हव्वं' ति शीघ्रमागच्छति। ततोऽनन्तानुबन्ध्यादिक्रोधादीन् क्षपयति। नवं च कर्म 'प्रस्तावादशुभं' न बध्नाति। 'तप्पच्चइयं' ति स एव कषायक्षयः प्रत्ययो निमित्तं यस्याः सा तत्प्रत्ययिका तां, मिथ्यात्वस्य विशुद्धिः सर्वथा क्षयो मिथ्यात्वविशुद्धिस्तां कृत्वा दर्शनस्य 'प्रस्तावात् क्षायिकसम्यक्त्वस्य' आराधको निरतिचारपालको भवति। ततो दर्शनविशुद्ध्या विशुद्धया निर्मलया 'अत्थेगइए' त्ति अस्ति एककः कश्चिद् भव्यो यस्तेनैव भवग्रहणेन

जन्मोपादानेन सिध्यति । को भाव ? यस्मिन्नेव जन्मनि दर्शनस्य शुद्धिस्तत्रैव भवे मुक्तो भवति यथा मरुदेवास्वामिनी ऋषभदेवजननी । यस्तु न तेनैव भवेन सिध्यति स शुद्ध्या 'प्रक्रमाद् दर्शनस्य विशुद्ध्या' 'तच्चं' ति तृतीयं पुनर्भवग्रहण नातिक्रामति नातिलङ्घति । अवश्यं तृतीयभवे सिध्यतीत्यर्थ. । उत्कृष्टदर्शनाराधकापेक्षमेतद् । उक्त च—
"उक्कोसदसणेण भते ! जीवे कइहिं भवग्गहणेहिं सिज्झेज्जा ? । गोयमा ! उक्कोसेण तेणेव भवेण, तइय नाइक्कमइ" ॥[1]

सवेगाच्चावश्यम्भावी निर्वेद इति तमाह—

निव्वेएणं भते ! जीवे किं जणयइ ? । निव्वेएणं दिव्व—माणुस्स—तेरिच्छिएसु कामभोगेसु निव्वेयं हव्वमागच्छइ । सव्वविसएसु विरज्जइ । सव्वविसएसु विरज्जमाणे आरभपरिच्चाय करेइ । आरंभपरिच्चायं करेमाणे संसारमग्गं वुच्छिदइ । सिद्धिमग्गे पडिवन्ने भवइ ॥ २ ॥

व्याख्या—'उत्तरत्र सर्वत्र सुगमत्वान्न प्रश्नव्याख्या' निर्वेदेन सामान्यत. संसारविषयेण कदाऽसौ त्याज्यः ? इत्येवंरूपेण दिव्यादिकामभोगेषु निर्वेद 'हव्व' ति शीघ्रमागच्छति यथाऽलमेतैरनर्थहेतुभिरिति। तथा च सर्वविषयेषु शब्दा-

---

१ उत्कृष्टदर्शनेन भदन्त ! जीव कतिभिर्भवग्रहणै सिद्ध्येत् ? । गौतम ! उत्कर्षेण तेनैव भवेन, तृतीय नातिक्रामति ॥

दिषु विरज्यते विरागमाप्नोति। तेषु च विरज्यमान आरम्भः प्राणिव्यपरोपणव्यापारस्तत्परित्यागं करोति। विषयार्थत्वादारम्भाणां तत्परित्यागं च कुर्वन् संसारमार्गं मिथ्यात्वादि व्यवच्छिनत्ति । तत्त्यागत एवारम्भत्यागसम्भवात् । तद्व्यवच्छित्तौ च सिद्धिमार्गः सम्यग्दर्शनादिः प्रतिपन्नो भवति॥ २ ॥

सत्यपि निर्वेदे धर्मश्रद्धैव शुभहेतुरिति तामाह—

धम्मसद्धाए णं भंते ! जीवे किं जणयइ ? । धम्मसद्धाए णं सायासोक्खेसु रज्जमाणे विरज्जइ । अगारधम्मं च णं चयइ ।अणगारिए णं जीवे सारीर—माणसाणं दुक्खाणं छेयण—भेयण—संजोगाईणं वुच्छेयं करेइ । अव्वाबाहं च सुहं निव्वत्तेइ ॥ ३ ॥

व्याख्या—धर्मश्रद्धया धर्मरुचिरूपया सातसौख्येषु सातवेदनीयजनितसुखेषु वैषयिकसुखेष्वित्यर्थः । रज्यमानः पूर्वं रागं कुर्वन् विरज्यते विरक्तो भवति। अगारधर्मं च गार्हस्थ्यं त्यजति । ततश्चानगारो यतिः सन् जीवः शारीर—मानसानां दुःखानां छेदन—भेदन—संयोगादीनामनिष्टानां 'आदिशब्दादिष्टवियोगादीनां' व्युच्छेदं करोति तन्निबन्धनकर्मोच्छेदनेनेति भावः। अव्याबाधमुपरतसर्वपीडं 'अर्थान्मोक्षं' सुखं च निर्वर्तयति जनयति ॥ ३ ॥

धर्मश्रद्धायां चावश्यं गुर्वादीनां शुश्रूषणा कार्येति तामाह—

गुरु-साहम्मियसुस्सूसणयाए णं भंते! जीवे किं जणयइ?। गुरु-साहम्मियसुस्सूसणयाए णं विणयपडिवत्तिं जणयइ। विणयपडिवन्ने य णं जीवे अणच्चासायणसीले नेरइय-तिरिक्खजोणिय-मणुस्स-देवदुग्गईओ निरुंभइ। वन्नसंजलण-भत्ति-बहुमाणयाए मणुस्स-देवसुगईओ निबंधइ। सिद्धिसोग्गइं च विसोहेइ। पसत्थाइं च णं विणयमूलाइं सव्वकज्जाइं साहेइ। अन्ने य बहवे जीवे विणिइत्ता भवइ ॥ ४ ॥

व्याख्या—गुरु-साधर्मिकशुश्रूषणया तत्पर्युपासनया सेवया विनयप्रतिपत्तिमुचितकृत्याङ्गीकाररूपां जनयति। 'विणयपडिवन्ने य' त्ति प्रतिपन्नविनयोऽङ्गीकृतविनयो जीवोऽनत्याशातनाशीलो गुरुपरिवादाद्याशातनाविकलस्वभावो नैरयिकादिचतुर्दुर्गतीर्निरुणद्धि निषेधति तद्धेतोरत्याशातनाया अभावेन तत्र गमनाभावात्। वर्णः श्लाघा तेन संज्वलनं गुणोद्भासनं भक्तिरभ्युत्थानादिका बहुमान आन्तरप्रीतिविशेषः 'एषां द्वन्द्वे भावप्रत्यये च' वर्णसंज्वलन-भक्ति-बहुमानता तया 'प्रक्रमाद् गुरूणां' विनयप्रतिपत्तिरूपया मनुष्य-देवसुगती विशिष्टकुलेन्द्रत्वादिलक्षणे निबध्नाति। सिद्धिसुगतिं च विशोधयति तन्मार्गभूतसम्यग्दर्शनादिविशोधनेन। प्रशस्तानि च विनयमूलानि विनयहेतुकानि सर्व-

कार्याणीह श्रुतज्ञानादीनि परत्र च मुक्तिं साधयति । अन्यांश्च बहून् जीवान् विनेता विनयं ग्राहिता स्वयं सुस्थित-स्योपादेयवचनत्वाद् । उक्तं हि—'ठिओ[1] उ ठावयए परं' ति ॥ ४ ॥

गुरुशुश्रूषणां कुर्वतोऽप्यतीचारसम्भवे आलोचनात एवोक्तफलावाप्तिरिति तामाह—

आलोयणयाए णं भंते! जीवे किं जणयइ ?। आलोयणयाए णं मायानियाणमिच्छादंसण-सल्लाणं मोक्खमग्गविग्घाणं अणंतसंसारवद्धणाणं उद्धरणं करेइ । उज्जुभावं च णं जणयइ । उज्जुभावपडिवन्ने य णं जीवे अमायी इत्थीवेयं नपुंसकवेयं च न बंधइ। पुव्वबद्धं च णं निज्जरेइ ॥५॥

व्याख्या–आ सामस्त्येन लोचना गुर्वादेः स्वदोषाणां प्रकाशना तया माया शाठ्यं, यन्निदानं ममातस्तपःप्रभृत्या-देरिदं स्यादिति प्रार्थनात्मकम्, मिथ्यादर्शनं सांशयिकाद्येतानि शल्यानीव शल्यानि 'कर्मधारये' माया-निदान–मिथ्यादर्शनशल्यानि तेषां, मोक्षविघ्नानां कर्मबन्धहेतुत्वेन मुक्त्यन्तरायाणां, तथाऽनन्तसंसारवर्धनानामुद्धर-णमपनयनं करोति । तदुद्धरणतश्च ऋजुभावं सरलत्वं जनयति । प्रतिपन्नर्जुभावश्च जीवोऽमायी मायारहितः स्त्रीवेदं नपुंसकवेदं च न बध्नाति। पूर्वबद्धं च तद् द्वयं यद्वा सर्वमपि कर्म निर्जरयति क्षपयति ततो मुक्तिमाप्नोतीति भावः ॥५॥

[1] स्थितस्तु स्थापयति परम् ।

आलोचना दुष्कृतनिन्दावत एव सफला स्यादिति तामाह—

निदणयाए णं भंते! जीवे किं जणयइ ?। निदणयाए णं पच्छाणुतावं जणयइ । पच्छाणुतावे य णं विरज्जमाणो करणगुणसेढिं पडिवज्जइ। करणगुणसेढीपडिवन्ने य णं अणगारे मोहणिज्जं कम्मं उग्घाएइ॥६॥

व्याख्या—आर्षत्वान्निन्दनेनात्मनैवात्मदोषपरिभावनेन पश्चादनुतापं हा ! दुष्टमनुष्ठितमिदं मयेति जनयति। तत. पश्चादनुतापेन विरज्यमानो वैराग्यं गच्छन् करणेनापूर्वकरणेन गुणहेतुका श्रेणि. करणगुणश्रेणिः सा चोपरितनस्थितेर्मोहनीयादिकर्मदलिकान्युपादायोदयसमयात् प्रभृति द्वितीयादिसमयेष्वसङ्ख्यातगुणपुद्गलप्रक्षेपरूपाऽऽन्तर्मौहूर्तिकी । यत उक्तम्—

"उवरिमठिईइ दलिय हिट्ठिमठाणेसु कुणइ गुणसेढी । गुणसकमकरण पुण असुहाओ सुहमि पक्खिवइ" ॥ १ ॥

'उपलक्षणात् स्थितिघात–रसघात–गुणसङ्क्रम–स्थितिबन्धाश्च विशिष्टा.' अथवा करणगुणेनापूर्वकरणादिमाहात्म्येन श्रेणि. करणगुणश्रेणिः 'प्रक्रमात् क्षपकश्रेणि' तां प्रतिपद्यते। प्रतिपन्नगुणश्रेणिश्चानगारो मोहनीय कर्मोद्घातयति क्षपयति । तत्क्षपणेच मुक्तिप्राप्तिरप्यर्थत उक्तैव ॥ ६ ॥

---

१ उपरितनस्थितेर्दलिकान्यधस्तनस्थानेपु करोति गुणश्रेणिः । गुणसङ्क्रमकरण पुनरशुभान् शुभे प्रक्षिपति ॥ १ ॥

कश्चित् स्वदोपान् निन्दन्नपि पापभीरुतया गर्हामपि कुर्यादिति तामाह—

गरहणयाए णं भंते ! जीवे किं जणयइ ?। गरहणयाए णं अपुरक्कारं जणयइ । अपुरक्कारगए णं जीवे अप्पसत्थेहिंतो जोगेहिंतो नियत्तेइ । पसत्थेहि य पडिवज्जइ । पसत्थजोगपडिवन्ने य णं अणगारे अणंतघाई पज्जवे खवेइ ॥ ७ ॥

व्याख्या–गर्हणेन परसमक्षमात्मनो दोपोद्भावनेन पुरस्कारो गौरवाध्यारोपो न तथा अपुरस्कारोऽवज्ञाऽऽस्पदत्वं तं जनयति 'स्वस्येति गम्यते' । अपुरस्कारगतो जीवः कदाचित् कदध्यवसायोत्पत्तावपि तद्भीत्यैवाप्रशस्तेभ्यः कर्मबन्धहेतुभ्यो योगेभ्यो निवर्तते, तान् न प्रतिपद्यते । प्रशस्तयोगांस्तु प्रतिपद्यते । प्रतिपन्नप्रशस्तयोगोऽनगारो 'अणंतघाइ' त्ति अनन्तविपयतया अनन्तज्ञान–दर्शने हन्तुं शीलं येपां तेऽनन्तघातिनस्तान् पर्यवान् ज्ञानावरणादिकर्मणः परिणतिविशेपान् क्षपयति । 'उपलक्षणं चैतन्मुक्तिप्राप्तेः' तदर्थत्वाद् धर्मानुष्ठानस्य ॥ ७ ॥

आलोचनाऽऽदीनि च सामायिकवत एव भवन्तीति तदुच्यते—

सामाइएणं भंते ! जीवे किं जणयइ ?। सामाइएणं सावज्जजोगविरइं जणयइ ॥ ८ ॥

व्याख्या–सामायिकेनोक्तस्वरूपेण सावद्याः कर्मबन्धहेतवो योगा व्यापारास्तेभ्यो विरतिरुपरमः सावद्ययोगविरतिस्तां जनयति तद्विरतेरेव सामायिकसम्भवात् ॥ ८ ॥

सामायिक चाङ्गीचिकीर्षुणा तत्प्रणेतॄणामर्हतां स्तवः कार्य इति तमाह—

चउवीसत्थएणं भंते ! जीवे कि जणयइ ? । चउवीसत्थएणं दंसणविसोहिं जणयइ ॥ ९ ॥

व्याख्या–चतुर्विंशतिस्तवेनैतदवसर्पिणीप्रभवार्हदुत्कीर्तनरूपेण दर्शनस्य सम्यक्त्वस्य विशुद्धिं तदुपघातिकर्मापगमान्निर्मलतां जनयति ॥ ९ ॥

स्तुत्वाऽप्यर्हतो गुरुवन्दनकपूर्वैव तत्प्रतिपत्तिरिति तदाह—

वंदणएणं भंते! जीवे कि जणयइ ? । वंदणएणं नीयागोय कम्मं खवेइ । उच्चागोयं कम्मं निबंधइ । सोहग्ग च णं अप्पडिहयं आणाफल निवत्तेइ । दाहिणभावं च ण जणयइ ॥ १० ॥

व्याख्या–वन्दनकेनाचार्याद्युचितप्रतिपत्तिरूपेण नीचैर्गोत्रमधमकुलोत्पत्तिहेतु कर्म क्षपयति । उच्चैर्गोत्रं निबध्नाति । सौभाग्यं च सर्वजनस्पृहणीयतारूपमप्रतिहतमस्खलितमत एवाज्ञाफलमाज्ञासार निर्वर्तयति जनयति । दक्षिणभावं चानुकूलता जनयति 'लोकस्येति गम्यम्' ॥ १० ॥

एतद्गुणस्थितेनापि पूर्व–पश्चिमार्हतोस्तीर्थेऽवश्यं प्रतिक्रमणं कार्यमिति तदाह–

पडिक्कमणेण भंते ! जीवे कि जणयइ ? । पडिक्कमणेणं वयछिद्दाइं पिहेइ । पिहियवयच्छिद्दे पुण

जीवे निरुद्धासवे असबलचरित्ते अट्ठसु पवयणमायासु उवउत्ते अपुहत्ते सुप्पणिहिए विहरइ ॥११॥

व्याख्या–प्रतिक्रमणेनापराधेभ्यः प्रतीपनिवर्तनात्मकेन व्रतानां प्राणातिपातविरत्यादीनां छिद्राणि पिदधाति स्थगयत्यपनयतीति यावत्। पिहितव्रतच्छिद्रः पुनर्जीवो निरुद्धास्रवोऽशवलमेकविंशत्याऽशवलस्थानैरकर्बुरीकृतं चरित्रं यस्य स तथा, तथाऽष्टसु प्रवचनमातृषूपयुक्तोऽवधानवान्, न विद्यते पृथक्त्वं संयमयोगेभ्यो वियुक्तत्वं यस्यासावपृथक्त्वः सदा संयमयोगवानप्रमत्तो वा, तथा सुप्रणिहितः सुष्ठु संयमे प्रणिधानवान्, 'सुप्पणिहिंदिए' इति पाठे सुप्रणिहितान्यसन्मार्गात् प्रच्याव्य सन्मार्गे व्यवस्थापितानीन्द्रियाण्यनेनेति सुप्रणिहितेन्द्रियो विहरति संयममार्गे याति ॥ ११ ॥

अत्र चातीचारशुद्ध्यर्थं कायोत्सर्गः कार्य इति तमाह—

काउसग्गेणं भंते! जीवे किं जणयइ?। काउसग्गेणं तीय-पडुप्पन्नं पायच्छित्तं विसोहेइ। विसुद्धपायच्छित्ते य जीवे निव्वुयहियए ओहरियभरु व्व भारवहे पसत्थज्झाणोवगए सुहं सुहेणं विहरइ ॥१२॥

व्याख्या–कायस्य शरीरस्योत्सर्गः श्रुतोक्तनीत्या त्यागः कायोत्सर्गस्तेनातीतमिह चिरकालभावितया, प्रत्युत्पन्नं चासन्नकालभावित्वेन, प्रायश्चित्तम् 'उपचारात् प्रायश्चित्तार्हमतीचारं' विशोधयत्यपनयति। विशुद्धप्रायश्चित्तश्च जीवो

निर्वृतं स्वीकृतं हृदय यस्य स निर्वृतहृदय', क इव ? अपहृतस्त्यक्तो भरो भारो येन स तथा एवंविधो भारवाहो वाहकादि' स इव भारप्राया ह्यतीचारास्तदपनयनेऽपहृतभरभारवह इव निर्वृतहृदय एवेति भाव. । प्रशस्तध्यानोपगत सुखं सुखेन सुखपरम्परावाहया विहरति ॥ १२ ॥

एवमप्यशुद्ध्यमानेन प्रत्याख्यान कार्यमिति तमाह—

पच्चक्खाणेण भंते ! जीवे किं जणयइ ? । पच्चक्खाणेण आसवदाराइं निरुंभइ ॥ १३ ॥

व्याख्या—प्रत्याख्यानेन मूलगुणप्रत्याख्यानरूपेणास्रवद्वाराणि निरुणद्धि ॥ १३ ॥

प्रत्याख्यानग्रहणानन्तरं चैत्यवन्दनं विधेयम्, तच्च न स्तवस्तुतिमङ्गलं विनेति तदाह—

थय-थुइमंगलेण भंते ! जीवे किं जणयइ ? । थय-थुइमंगलेणं नाण-दंसण-चरित्त-बोहिलाभं जणयइ । नाण-दंसण-चरित्त-बोहिलाभसंपन्ने ण जीवे अंतकिरियं कप्पविमाणोववत्तियं आराहणं आराहेइ ॥ १४ ॥

व्याख्या—स्तवा देवेन्द्रस्तवादय., स्तुतयः एकादिसप्तश्लोकान्ता' 'क्त्यन्तस्य पूर्वनिपाते प्राप्तेऽप्यार्षत्वाद् व्यत्ययः' स्तुतिस्तवा एव मङ्गल भावमङ्गलरूपं तेन ज्ञान-दर्शन-चारित्रात्मिका बोधिर्ज्ञान-दर्शन-चारित्र-बोधिस्तस्या

लाभो ज्ञान–दर्शन–चारित्र–बोधिलाभो जिनधर्मप्राप्तिस्तं जनयति । ज्ञान–दर्शन–चारित्र–बोधिलाभसम्पन्नश्च जीवोऽन्तः पर्यन्तो भवस्य कर्मणो वा तस्य क्रिया करणमन्तक्रिया मुक्तिरित्यर्थस्ताम्, कल्पा देवलोका विमानानि ग्रैवेयकानुत्तरसम्बन्धीनि तेषूपपत्तिर्यस्यां सा तथा ताम्, को भावः ? अनन्तरभवे कल्पादिषु देवत्वावाप्तिफलां परम्परया तु मुक्तिप्रापिकामाराधनां ज्ञानाद्याराधनारूपामाराधयति साधयति । तथा चैवमाराधनया कश्चिद् भरतादिस्तद्भवे एव दीर्घपर्यायेण, कश्चिद् गजसुकुमालादिः स्वल्पपर्यायेणान्तक्रियां करोतीति भावः ॥ १४ ॥

अर्हद्वन्दनानन्तरं स्वाध्यायो विधेयः, स च कालप्रत्युपेक्षणापूर्वमिति तामाह—

कालपडिलेहणयाए णं भंते ! जीवे किं जणयइ ? । कालपडिलेहणयाए णं नाणावरणिज्जं कम्मं खवेइ ॥ १५ ॥

व्याख्या—कालः प्रादोषिकादिस्तस्य प्रत्युपेक्षणाआगमविधिना यथावन्निरूपणाग्रहण–प्रतिजागरणरूपा कालप्रत्युपेक्षणा तया ज्ञानावरणीयं कर्म क्षपयति ॥ १५ ॥

कथञ्चिदकालपाठे प्रायश्चित्तं प्रतिपत्तव्यमिति तदाह—

पायच्छित्तकरणेणं भंते ! जीवे किं जणयइ ? । गोयमा ! पायच्छित्तकरणेणं पावकम्मविसोहिं जणयइ। निरइयारे आवि भवइ । सम्मं च णं पायच्छित्तं पडिवज्जमाणे मग्गं मग्गफलं विसोहेइ । आयारं च आराहेइ ॥१६॥

व्याख्या—प्रायश्चित्तकरणेनालोचनादिविधानेन पापकर्मणां विशुद्धिरभावस्तां जनयति । निरतिचारश्चापि भवति । सम्यक् च प्रायश्चित्तं प्रतिपद्यमानो मार्गं इह ज्ञानप्राप्तिहेतु सम्यक्त्वं त च तत्फलं च ज्ञान विशोधयति निर्मलीकुरुते । ततश्चाचारश्चारित्र त च तत्फलं च मुक्तिलक्षणमाराधयति । विशोधनाराधनयोश्च निरतिचारतैव हेतुरिति भाव॰ ॥ १६ ॥

प्रायश्चित्तकरण च क्षामणावत एव स्यादिति तामाह—

खमावणाए णं भंते ! जीवे किं जणयइ ? । खमावणाए णं पल्हायणभावं जणयइ । पल्हायणभावगए य सव्वपाण–भूय–जीव–सत्तेसु मित्तीभाव उप्पाएइ । मित्तीभावमुवगए आवि जीवे भावविसोहिं काऊण निब्भए भवइ ॥ १७ ॥

व्याख्या—क्षामणया दुष्कृतानन्तरं क्षमितव्यमिदं ममेत्यादिरूपया प्रह्लादनभावं चित्तप्रसत्तिरूपं जनयति । प्रह्लादनभावमुपगतः सर्वे च प्राणाश्च द्वि–त्रि–चतुरिन्द्रिया॰, भूताश्च तरव , जीवाश्च पञ्चेन्द्रिया॰, सत्त्वाश्च शेषजन्तव सर्वप्राण–भूत–जीव–सत्त्वास्तेषु मैत्रीभाव परहितचिन्तालक्षणमुत्पादयति । मैत्रीभावमुपगतश्च जीवो भावविशुद्धि राग–द्वेषापगमरूपा कृत्वा निर्भय इह–परलोकादिभयविकलो भवति सर्वभयहेत्वभावात् । अत्रार्थे मृगावतीदृष्टान्त॰—

सद्वत्सविपयोल्लासिसुपयोदाऽर्जुनीव या । सद्वत्सविषयोल्लासा कौशाम्बी पूर्वराऽस्ति सा ॥ १ ॥
वर्धमानो जिनस्तत्र वर्धमानो गुणैः शुभैः । पादाभ्यां पावयन् पृथ्वीमुद्याने समवासरत् ॥ २ ॥
पुष्पदन्तौ प्रभुं नन्तुं समाजग्मतुरन्यदा । विमानाभ्यां तमोऽस्यन्तौ तृतीये प्रहरे मुदा ॥ ३ ॥
स्वस्थानेऽगात् तमीं मत्वा चातुर्यादार्यचन्दना । तत्रास्थात् स्वामिवाग्लीना दिनभ्रान्त्या मृगावती ॥ ४ ॥
तयोश्च गतयोः सूर्य–चन्द्रयोः सा मृगावती । स्वाश्रयं प्राप भीता द्राक् तमसि प्रसृतेऽभितः ॥ ५ ॥
ईर्यापथिक्यामालोच्य नत्वा सुप्तां प्रवर्तिनीम् । समागः क्षम्यतामेतदित्युक्त्वा चापतत् पदोः ॥ ६ ॥
चन्दना चन्दनाभाभिर्वाणीभिस्तामशिक्षयत् । किं निर्मलकुले युक्तं नक्तं स्थातुं बहिस्तव ? ॥ ७ ॥
चन्दनाचरणौ संवाहयन्ती सा मृगावती । निद्राणां क्षामयन्ती तां केवलज्ञानमासदत् ॥ ८ ॥
उद्भ्रेऽथ मृगावत्या धरातश्चन्दनाकरम् । प्रबुद्धा चन्दनाऽवोचत् किमचालि करो मम ? ॥ ९ ॥
जगौ मृगावती सर्पन् सर्पोऽस्तीत्याह चन्दना । अदर्शि स कथं ध्वान्ते साऽऽख्यत् केवलसंविदा ॥ १० ॥
उत्थाय चन्दनाऽऽचष्ट महासति मृगावति ! । केवल्याशातनामन्तुं क्षमस्वाज्ञानतः कृतम् ॥ ११ ॥
मृगावतीं क्षामयन्ती प्रवर्तिन्यार्यचन्दना । निन्दन्ती च मुहुः स्वागः श्रिता केवलसम्पदा ॥ १२ ॥

॥ इति क्षामणायां चन्दना–मृगावतीकथा ॥ १७ ॥

एवंविधेन यतिना स्वाध्याये यतितव्यमिति तमाह—

सज्झाएणं भंते ! जीवे किं जणयइ ? । सज्झाएण नाणावरणिज्जं कम्मं खवेइ ॥ १८ ॥

व्याख्या—स्वाध्यायेन ज्ञानावरणीयं 'उपलक्षणाच्छेष कर्म' क्षपयति । यत उक्तम्—

"कम्ममसंखिज्जभव खवेइ अणुसमयमेव आउत्तो । अन्नयरंमि वि जोए सज्झायमी य विसेसेण" ॥ १ ॥ १८ ॥

अत्र च पूर्वं वाचनैव विधेयेति तामाह—

वायणाए य णं भंते ! जीवे किं जणयइ ? । वायणाए य णं निज्जरं जणयइ । सुयस्स अणासायणाए वट्टइ । सुयस्स अणासायणाए वट्टमाणे तित्थधम्मं अवलंबइ । तित्थधम्मं अवलंबमाणे महानिज्जरे महापज्जवसाणे भवइ ॥ १९ ॥

व्याख्या—वक्ति शिष्यस्त वचन्त गुरु प्रयुङ्क्ते वाचयतीति वाचना पाठनमित्यर्थस्तया निर्जरा कर्मपरिशाटरूपां जनयति । तथा श्रुतस्यागमस्यानाशातनाया वर्तते । तत. श्रुतस्यानाशातनायां वर्तमानस्तीर्थं गणधरस्तस्य धर्म आचार श्रुतप्रदानरूपस्तीर्थधर्ममवलम्बते । ततस्तीर्थधर्ममवलम्बमान आश्रयन् महती बहुकर्मविषयत्वान्निर्जरा-

१ कर्मासङ्ख्यातभव क्षपयत्यनुसमयमेवायुक्त. । अन्यतरस्मिन्नपि योगे स्वाध्याये च विशेषेण ॥ १ ॥

ऽस्येति महानिर्जरः, महत् प्रशस्यं मुक्त्यवाप्त्या पर्यवसानमन्तः कर्मणो भवस्य वा यस्य स महापर्यवसानश्च भवति मुक्तिभाग् भवतीति हृदयम् ॥ १९ ॥

गृहीतवाचनेन संशयादौ पुनः प्रच्छनं प्रतिपृच्छेति तामाह—

पडिपुच्छणाए णं भंते ! जीवे किं जणयइ ? । गोयमा ! पडिपुच्छणाए णं सुत्तत्थ-तदुभयं विसोहेइ । कंखामोहणिज्जं कम्मं वुच्छिंदइ ॥ २० ॥

व्याख्या—तत्र च पूर्वपठितस्य सूत्रादेः पुनः प्रच्छनं प्रतिप्रच्छनं तेन सूत्रार्थ-तदुभयानि विशोधयति संशयाद्यपनयनेन विशुद्धानि कुरुते । काङ्क्षा इदमित्थमित्थं च ममाध्येतुमुचितमित्यादिका वाञ्छा सैव मोहनीयं कर्माभिग्रहिकमिथ्यात्वरूपं व्युच्छिनत्ति विशेषेणापनयति ॥ २० ॥

इत्थं विशोधितस्यापि सूत्रस्य मा भूद् विस्मरणमिति परावर्तनामाह—

परिअट्टणाए णं भंते ! जीवे किं जणयइ ? । गोयमा ! परिअट्टणाए णं वंजणाइं जणयइ । वंजणलद्धिं च उप्पाएइ ॥ २१ ॥

व्याख्या—सूत्रत्वात् परावर्तना गुणनं तया व्यज्यन्ते अर्था एभिरिति व्यञ्जनान्यक्षराणि जनयत्युत्पादयति ।

तानि हि विगलितान्यपि गुणयतो झगित्युत्पतन्तीत्युत्पादितान्युक्तानि । तथाविधकर्मक्षयोपशमतो व्यञ्जनलब्धि 'चशब्दाद् व्यञ्जनसमुदायरूपपदलब्धि पदानुसारितालक्षणा'उत्पादयति ॥ २१ ॥

सूत्रवदर्थस्यापि विस्मरणसम्भव इत्यनुप्रेक्षामाह—

अणुप्पेहाए ण भंते ! जीवे किं जणयइ ? । गोयमा ! अणुप्पेहाए ण आउयवज्जाओ सत्त कम्मपयडीओ धणियबंधणबद्धाओ सिढिलबंधणबद्धाओ पकरेइ । दीहकालट्ठिइयाओ हस्सकालट्ठिइयाओ पकरेइ । तिव्वाणुभावाओ मंदाणुभावाओ पकरेइ । बहुप्पएसग्गाओ अप्पपएसग्गाओ पकरेइ । आउयं च ण कम्मं सिय बंधइ सिय नो बंधइ । असातावेयणिज्जं च ण कम्मं नो भुज्जो भुज्जो उवचिणइ । अणाइयं अणवयग्गं दीहमद्धं चाउरंतससारकंतारं खिप्पमेव वीईवयइ ॥२२॥

व्याख्या—अनुप्रेक्षा सूत्रस्यार्थचिन्तितं चिन्तनिका तया प्रकृष्टशुभभावहेतुतया आयुर्वर्जाः सप्त कर्मप्रकृतीः 'धणियं' गाढं बन्धनं तेन बद्धा निकाचिताः शिथिलबन्धनबद्धाः किञ्चिन्मुत्कलाः, कोऽर्थः ? अपवर्तनादिकरणयोग्या प्रकरोति । तपोरूपत्वादस्यास्तपसश्च निकाचितकर्मक्षयक्षमत्वाद्, उक्तं च—'तवसा उ निकाइयाण च'त्ति ।

१ तपसा तु निकाचितानां चेति ।

दीर्घकालस्थितिका ह्रस्वकालस्थितिकाः प्रकरोति शुभाध्यवसायवशात् स्थितिखण्डकापहारेणेति भावः । एतच्चैवं सर्वकर्मणामपि स्थितेरशुभत्वाद् यदुक्तम्—

"सव्वासिं पि ठिईओ सुहासुहाणं पि होंति असुहाओ । माणुस–तिरिक्ख–देवाउयं न मोत्तूण सेसाणं" ॥ १ ॥

तथा तीव्रानुभावाश्चतुःस्थानिकरसत्वेन मन्दानुभावास्त्रिस्थानिकरसत्वाद्यापादनेन प्रकरोति । एताश्चाशुभप्रकृतयो ज्ञेयाः । तथा बहु प्रभूतं प्रदेशाग्रं कर्मदलिकपरिमाणं यासां ता बहुप्रदेशाग्रा अल्पप्रदेशाग्राः प्रकरोति । किञ्चैकस्मिन् भवे सकृदेवान्तर्मुहूर्तकाल एवायुर्बन्धसम्भवादायुर्वर्जत्वमुक्तमत आयुष्कं च कर्म स्याद् बध्नाति स्यान्नो बध्नाति, तस्य त्रिभागादिशेषायुष्कतायामेव बन्धसम्भवात् । उक्तं हि—'सिय तिभागे सिय तिभागतिभागे' इत्यादि । अपरं चासातवेदनीयं शारीरादिदुःखहेतु च कर्म 'चशब्दादन्याश्चाशुभप्रकृतीः' नो भूयो भूय उपचिनोति बध्नाति । भूयो भूयो ग्रहणं त्वन्यतमप्रमादतः प्रमत्तसंयतगुणस्थानवर्तितायां तद्बन्धस्य सम्भवात् । तथा अनादिकमादेरसम्भवात्, अनवगच्छदग्रपरिमाणं यस्य सोऽनवदग्रः सदाऽवस्थितपरिमाणोऽनन्त इत्यर्थस्तं प्रवाहापेक्षं चैतत्, अत एव

---

१ सर्वासामपि स्थितयः शुभाशुभानामपि भवन्त्यशुभाः । मनुष्य–तिर्यग्–देवायुश्च मुक्त्वा शेषाणाम् ॥ १ ॥

२ स्यात् त्रिभागे स्यात् त्रिभागत्रिभागे ।

'दीहमद्धं'ति 'मकारोऽलाक्षणिक' दीर्घाद्ध दीर्घकालम्, चत्वारश्चतुर्गतिलक्षणा अन्ता अवयवा यस्मिस्तच्चतुरन्तं ससारकान्तार क्षिप्रमेव शीघ्रमेव 'वीईवयइ'त्ति व्यतिव्रजत्यतिक्रामति मुक्तिमाप्नोतीत्यर्थ· ॥ २२ ॥

एवमभ्यस्तश्रुतेन च धर्मकथाऽपि कार्येति तामाह—

धम्मकहाए ण भंते ! जीवे किं जणयइ ? । गोयमा ! धम्मकहाए पवयणं पभावेइ । पवयणपभावए जीवे आगमेसिस्स भद्दत्ताए कम्मं निबंधइ ॥ २३ ॥

व्याख्या—धर्मकथया व्याख्यानरूपया प्रवचनं सिद्धान्तं प्रभावयति प्रकाशयति । प्रवचनप्रभावको जीवः 'आगमेसिस्स भद्दत्ताए'त्ति आगमिष्यदागामिकालभावि भद्रं कल्याणं यस्मिस्तत् तथा तस्य भावस्तत्ता तयोपलक्षितं कर्म निबध्नाति शुभमुपार्जयतीति भाव· ॥ २३ ॥

इत्थं पञ्चविधस्वाध्यायरतेन श्रुतमाराधितं स्यादिति तदाराधनमाह—

सुयस्स आराहणयाए णं भंते ! जीवे किं जणयइ ? । गोयमा ! सुयस्स आराहणयाए णं अन्नाणं खवेइ । न य संकिलिस्सइ ॥ २४ ॥

व्याख्या—श्रुतस्याराधनया सम्यगासेवनयाऽज्ञानं क्षपयति विशिष्टतत्त्वबोधावाप्तेः । न च संक्लिश्यते नैव रागादिजनितक्लेशभाग् भवति, तद्वशतो नवनवसंवेगावाप्तेः । यतः—

"जह जह सुयमवगाहइ अइसयरसपसरसंजुयमपुव्वं । तह तह पल्हाइ मुणी नवनवसंवेगसद्धाए" ॥ १ ॥ २४ ॥

श्रुताराधना चैकाग्रमनःसंनिवेशनावत एव स्यादतस्तामाह—

एगग्गमणसंनिवेसणयाए णं भंते ! जीवे किं जणयइ ? । गोयमा ! एगग्गमणसंनिवेसणयाए णं चित्तनिरोहं करेइ ॥ २५ ॥

व्याख्या—एकमग्रं प्रस्तावाच्छुभमालम्बनमस्येत्येकाग्रं तच्च तन्मनश्च तस्य संनिवेशना स्थापना तया चित्तस्येतस्तत उन्मार्गप्रस्थितस्य निरोधो नियन्त्रणं चित्तनिरोधस्तं करोति ॥ २५ ॥

एवंविधस्यापि संयमादेवेष्टफलावाप्तिरिति तमाह—

संजमेणं भंते ! जीवे किं जणयइ ? । गोयमा ! संजमेणं अणण्हयत्तं जणयइ ॥ २६ ॥

व्याख्या—संयमेन पञ्चाश्रवाः पञ्चेन्द्रियाणि चत्वारः कषायास्त्रयो दण्डा स्तद्विरमणेन 'अणण्हयत्तं'ति अनंहस्कत्वमविद्यमानकर्मत्वं जनयत्यास्रवविरमणात्मकत्वादस्य ॥ २६ ॥

१ यथा यथा श्रुतमवगाहतेऽतिशयरसप्रसरसंयुतमपूर्वम् । तथा तथा प्रह्लादते मुनिर्नवनवसंवेगश्रद्धया ॥ १ ॥

सयमवतोऽपि तपो विना न कर्मक्षय इति तदाह—

तवेण भंते ! किं जणयइ ? । तवेण वोदाण जणयइ ॥ २७ ॥

व्याख्या—तपसा वक्ष्यमाणेन 'वोदाण'ति व्यवदानं पूर्वबद्धकर्मापगमतो विशिष्टां शुद्धिं जनयति ॥ २७ ॥

तपोऽनन्तरफल व्यवदानमिति तमाह—

वोदाणेण भंते ! किं जणयइ ? । वोदाणेणं अकिरिय जणयइ । अकिरियाए भवित्ता तओ पच्छा सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणमंत करेइ ॥ २८ ॥

व्याख्या—व्यवदानेनानन्तरोक्तार्थेनाक्रियां व्युपरतक्रियाऽऽख्यशुक्लध्यानचतुर्थभेदं जनयति, अक्रियाको व्युपरतक्रियाऽऽख्यशुक्लध्यानवर्ती भूत्वा तत पश्चात् सिध्यति निष्ठितार्थो भवति, बुध्यते ज्ञान-दर्शनाभ्या वस्तुतत्त्व जानाति, मुच्यते ससारादत एव परिनिर्वाति परि समन्तान्निर्वाति कर्माग्निविध्यापनेन शीतीभवति, सर्वदु खानामन्त करोति ॥ २८ ॥

व्यवदान च संयमादिषु सत्स्वपि सुखशाता नैव स्यादिति तमाह—

सुहसाएण भंते ! किं जणयइ ? । सुहसाएण अणुस्सुयत्त जणयइ । अणुस्सुएणं जीवे अणुकंपे अणुब्भडे विगयसोगे चरित्तमोहणिज्जं कम्मं खवेइ ॥ २९ ॥

व्याख्या—सुखस्य वैषयिकस्य शातस्तद्गतस्पृहानिवारणेनापनयनं सुखशातस्तेनानुत्सुकत्वं विषयसुखं प्रति निःस्पृहत्वं जनयति । अनुत्सुकश्च जीवोऽनु सह कम्पते इत्यनुकम्पको दुःखेन कम्पमानं परमवलोक्य तद्दुःखदुःखितया स्वयमपि तत्काल एव कम्पते, तथाऽनुद्भटोऽनुल्बणः, विगतशोको नैहिकार्थभ्रंशेऽपि शोचते मुक्तिवद्धस्पृहत्वादेवं-विधशुभाध्यवसायाच्चारित्रमोहनीयं कर्म क्षपयति ॥ २९ ॥

सुखशातस्थितस्य चाप्रतिवद्धता भवतीति तामाह—

अप्पडिवद्धयाए णं भंते ! जीवे किं जणयइ ? । अप्पडिबद्धयाए णं निस्संगत्तं जणयइ । निस्संगत्तगए णं जीवे एगे एगग्गचित्ते दिया य राउ य असज्जमाणो अप्पडिबद्धे आवि विहरइ ॥ ३० ॥

व्याख्या—अप्रतिवद्धतया मनसि निरभिष्वङ्गतया निस्सङ्गत्वं वहिः सङ्गाभावं जनयति । निस्सङ्गत्वगतो जीव एको रागादिविकलः, एकाग्रचित्तो धर्मैकतानमनाः, दिवा रात्रौ वाऽसजन् सदा वहिः सङ्गं त्यजन्नित्यर्थः । अप्रतिवद्धश्चापि विहरति मासकल्पादिनोद्यतविहारेण पर्यटतीति भावः ॥ ३० ॥

अप्रतिवद्धता च विविक्तशयनासनतायां सम्भवत्यतस्तामाह—

विवित्तसयणासणयाए णं भंते ! जीवे किं जणयइ ? । विवित्तसयणासणयाए णं चरित्तगुत्तिं जणयइ । चरित्तगुत्ते य णं जीवे विवित्ताहारे दढचरित्ते एगंतरए मोक्खभावपडिवन्ने अट्ठविहकम्मगंठिं निज्जरेइ ॥

व्याख्या–विविक्तानि स्त्र्याद्यसक्तानि शयनासनानि 'उपलक्षणत्वादुपाश्रयश्च' यस्य स तथा तस्य भावस्तत्ता तया चरित्रगुप्ति चरणरक्षा जनयति। 'सूत्रत्वाद्' गुप्तचरित्रश्च जीवो विविक्तो विकृत्यादिवृंहकवस्तुरहित आहारो यस्य स विविक्ताहार, तथा दृढ निश्चल चरित्र यस्येति दृढचरित्र, तत एकान्तेन निश्चयेन रत आसक्त एकान्तरत 'सयमे इति गम्यम्', मोक्षे भावेन मनसा प्रतिपन्न आश्रितो मोक्षभावप्रतिपन्नो मोक्ष एव मया साधयितव्य इत्यर्थ। अष्टविध कर्म ग्रन्थिरिव ग्रन्थिर्दुर्भेदतयाऽष्टविधकर्मग्रन्थिस्तं निर्जरयति क्षपयति ॥ ३१ ॥

विविक्तशयनासनताया च विनिवर्तना स्यादिति तामाह:—

विणिवट्टणयाए णं भंते! जीवे किं जणयइ? । विणिवट्टणयाए ण पावकम्माणं अकरणयाए अब्भुट्ठेइ।
पुव्वबद्धाण य निज्जरणयाए त नियत्तेइ । तओ पच्छा चाउरत ससारकतारं वीईवयइ ॥ ३२ ॥

व्याख्या–विनिवर्तनया विषयेभ्य आत्मन पराङ्मुखीकरणरूपया पापकर्मणां सावद्यानुष्ठानानामकरणतया मया न पापानि कर्तव्यानीत्येवरूपया अभ्युत्तिष्ठते धर्मं प्रत्युत्सहते। पूर्वबद्धाना 'पापकर्मणामिति प्रक्रम' निर्जरणया 'चशब्दादभिनवानुपादानेन' पापकर्म निवर्तयति निर्नाशयति। तत पश्चाच्चतुरन्त संसारकान्तारं व्यतिव्रजतीति स्पष्टम् ॥ ३२ ॥

विषयविनिवृत्तश्च कश्चित् सम्भोगप्रत्याख्यानवान् सम्भवत्यतस्तदाह—

संभोगपच्चक्खाणेणं भंते ! जीवे किं जणयइ ?। संभोगपच्चक्खाणेणं आलंबणाइं खवेइ । निरालंबणस्स य आयतट्ठिया जोगा भवंति । सएणं लाभेणं तुस्सइ । परलाभं नो तक्केइ नो पीहेइ नो पत्थेइ नो अहिलसेइ । परस्स लाभं अणासाएमाणे अतक्केमाणे अपीहेमाणे अपत्थेमाणे अणभिलसमाणे दोच्चं सुहसिज्जं उवसंपज्जित्ता णं विहरइ ॥ ३३ ॥

व्याख्या—सम्भोग एकमण्डलीभोक्तृत्वं तस्य प्रत्याख्यानं गीतार्थावस्थायां जिनकल्पप्रतिपत्त्यां परिहारः सम्भोगप्रत्याख्यानं तेनालम्बनानि ग्लानताऽऽदीनि क्षपयति तिरस्कुरुते सदोद्यतत्वेन वीर्याचारमेवालम्बते । निरालम्बनस्यायतो मोक्षः संयमो वा स एवार्थः प्रयोजनं येषामित्यायतार्थिका योगा व्यापारा भवन्ति प्रबन्धतः प्रवर्तन्ते । तथा स्वकीयेन लाभेन सन्तुष्यति निरभिलाषो भवति । ततश्च परलाभं नो तर्कयति यदिदं मह्यं दास्यतीति मनसा न विकल्पयति, नो स्पृहयति तच्छ्रद्धालुतयाऽऽत्मनः स्पृहां नाविष्करोति, नो प्रार्थयते मह्यं देहीति न याचते, नो अभिलषति तल्लालसतया न वाञ्छति । एवंविधश्च कं गुणमाप्नोति ? तमेवोक्तमनूद्याह—तथा परस्य लाभमनास्वादयन्नभुञ्जानोऽतर्कयन्नित्यादिपूर्वोक्तगुणविशिष्टो 'दोच्चं' ति द्वितीयां सुखशय्यामुपसम्पद्य प्राप्य

विहरति ईदृग्रूपत्वात् तस्या । किञ्चानुवादसूत्रे 'अणासाएमाणे' इति दर्शनात् पूर्वत्रापि 'णो आसाए' त्ति वचोऽनुमीयते तच्च गम्यतया न निर्दिष्टं लेखकवैगुण्याद् वेति न ज्ञायते ॥ ३३ ॥

सम्भोगप्रत्याख्यानवतश्चोपधिप्रत्याख्यानमपि सम्भवतीति तदाह—

उवहिपच्चक्खाणेणं भंते ! किं जणयइ ? । उवहिपच्चक्खाणेणं अपलिमंथं जणयइ । निरुवहिए णं जीवे निक्कखे उवहिमंतरेण न संकिलिस्सइ ॥ ३४ ॥

व्याख्या—उपधेरुपकरणस्य रजोहरणव्यतिरिक्तस्य प्रत्याख्यानं न मयाऽसौ ग्रहीतव्य इत्येवं निवृत्तिरुपधिप्रत्याख्यानं तेन परिमन्थ स्वाध्यायादिक्षतिस्तदभावोऽपरिमन्थस्तं जनयति । निरुपधिको जीवो निष्काङ्क्षो वस्त्राद्यभिलापरहित. सन्नुपधिमन्तरेण न संक्लिश्यते न मानसादिक्लेशमाप्नोति ॥ ३४ ॥

उपधिप्रत्याख्याता च जिनकल्पिकादिरेषणीयालाभेनोपोषित एवास्ते । अत आहारप्रत्याख्यानमाह—

आहारपच्चक्खाणेणं भंते ! जीवे किं जणयइ ? । आहारपच्चक्खाणेणं जीवियासंसप्पओगं वुच्छिंदइ । जीवियासंसप्पओगं वुच्छिंदित्ता जीवे आहारमंतरेण न किलिस्सइ ॥ ३५ ॥

व्याख्या—आहारप्रत्याख्यानेनानेषणीयभक्तपानत्यागरूपेण जीविते प्राणधारणे आशंसाऽभिलापस्तस्याः प्रयोगो

व्यापारस्तं व्यवच्छिनत्ति आहाराधीनत्वाज्जीवितस्य। जीविताशंसाप्रयोगं विच्छिद्य जीव आहारमन्तरेण न संक्लिश्यति विकृष्टतपोऽनुष्ठानेऽपि न बाधामनुभवतीत्यर्थः ॥ ३५ ॥

एतत् प्रत्याख्यानत्रयमपि कषायाभाव एव फलवदिति तत्प्रत्याख्यानमाह—

**कसायपच्चक्खाणेणं भंते! जीवे किं जणयइ?। कसायपच्चक्खाणेणं वीयरागभावं जणयइ।**
**वीयरागभावपडिवन्ने य णं जीवे समसुह-दुक्खे भवइ ॥ ३६ ॥**

व्याख्या—कषायप्रत्याख्यानेन क्रोधादिपरिहारेण वीतो गतो राग उपलक्षणाद् द्वेषश्चास्येति वीतरागस्तद्भावं जनयति। 'प्राकृतत्वात्' प्रतिपन्नवीतरागभावः पुनः जीवः समे राग-द्वेषाभावतस्तुल्ये सुख-दुःखे यस्य स तथाविधो भवति ॥ ३६ ॥

निष्कषायोऽपि योगप्रत्याख्यानादेव मुक्तिसाधक इति तदाह—

**जोगपच्चक्खाणेणं भंते ! जीवे किं जणयइ ?। जोगपच्चक्खाणेणं अजोगत्तं जणयइ।**
**अजोगी य णं जीवे नवं कम्मं न बंधइ पुव्वबद्धं निज्जरेइ ॥ ३७ ॥**

व्याख्या—योगा मनो-वाक्-कायव्यापारास्तत्प्रत्याख्यानेन तन्निरोधेनायोगत्वमयोगिभावं जनयति। अयोगी च जीवो नवं कर्म न बध्नाति। पूर्वबद्धं भवोपग्राहिकर्मचतुष्टयमन्यस्य तदाऽसम्भवान्निर्जरयति क्षपयति ॥ ३७ ॥

योगप्रत्याख्यानत शरीरप्रत्याख्यानमपि स्यादिति तदाह—

सरीरपच्चक्खाणेण भंते ! जीवे किं जणयइ ?। सरीरपच्चक्खाणेण सिद्धाइसयगुणत्तं निव्वत्तेइ । सिद्धाइसयगुणसंपन्ने य णं जीवे लोगग्गमुवगए परमसुही भवइ ॥ ३८ ॥

व्याख्या–शरीरमौदारिकादि तत्प्रत्याख्यानेन सिद्धानामतिशयगुणा न कृष्णा न नीला इत्यादयो यस्य स सिद्धातिशयगुणस्तद्भावस्तत्त्वं निर्वर्तयति जनयति । सिद्धातिशयगुणसम्पन्नश्च जीवो लोकाग्रं मुक्तिपदमुपगत' प्राप्त' परमसुखी भवति । यद्यपि योगप्रत्याख्यानेन शरीरप्रत्याख्यानमप्युक्तमेव, तथापि मनो–वाग्योगयोरेतदाधारत्वात् प्राधान्यख्यापनार्थम् ॥ ३८ ॥

सम्भोगादिप्रत्याख्यानानि प्रायः सहायप्रत्याख्यान एव सुकराणि स्युरिति तदाह—

सहायपच्चक्खाणेण भंते ! जीवे किं जणयइ ?। सहायपच्चक्खाणेण एगीभावं जणयइ। एगीभावभूए य जीवे एगग्गं भावेमाणे अप्पझंझे अप्पकसाए अप्पकलहे अप्पतुमंतुमे संजमबहुले संवरबहुले समाहिए आवि भवइ ॥ ३९ ॥

व्याख्या–सहायाः साहाय्यकारिणो यतयस्तत्प्रत्याख्यानेन तथाविधयोग्यताभाविनाऽभिग्रहविशेषेणैकीभावमे-

कत्वं जनयति। एकीभावभूतश्चैकत्वप्राप्तश्च जीव एकाग्र्यमेकालम्बनत्वं भावयन्नभ्यसन् अल्पझञ्झोऽविद्यमानवाक्कलहोऽल्पकषायोऽविद्यमानक्रोधादिः। अल्पमविद्यमानं 'तुमंतुम'त्ति त्वं त्वमिति स्खलपापराधिन्यपि त्वमेव पुराऽपि कृतवान्, त्वमेवं सदा करोषीत्यादि पुनः पुनः प्रलपनं यस्य स तथा। 'सर्वत्राल्पशब्दोऽभाववाची'। तथा संयमबहुलः संवरबहुल इति प्राग्वत्। अत एव समाहितो ज्ञानादिसमाधिमांश्चापि भवति ॥ ३९ ॥

एवंविधश्चान्ते भक्तप्रत्याख्यानवान् स्यादिति तदाह—

भत्तपच्चक्खाणेणं भंते! जीवे किं जणयइ?। भत्तपच्चक्खाणेणं अणेगाइं भवसयाइं निरुंभइ ॥ ४० ॥

व्याख्या—भक्तप्रत्याख्यानेनाहारत्यागरूपेण भक्तपरिज्ञानादिना अनेकानि भवशतानि निरुणद्धि ॥ ४० ॥

सर्वप्रत्याख्यानप्रधानं सद्भावप्रत्याख्यानमाह—

सब्भावपच्चक्खाणेणं भंते! जीवे किं जणयइ?। सब्भावपच्चक्खाणेणं अणियट्टिं जणयइ। अणियट्टिपडिवन्ने य अणगारे चत्तारि कम्मंसे खवेइ। तंजहा—वेयणिज्जं आउयं नामं गोयं पच्छा सिज्झइ, बुज्झइ, मुच्चइ, परिनिव्वाइ, सव्वदुक्खाणमंतं करेइ ॥ ४१ ॥

व्याख्या—सद्भावेन सर्वथा पुनःकरणासम्भवात् परमार्थेन प्रत्याख्यानं सद्भावप्रत्याख्यानं सर्वसंवररूपं शैले-

शीति यावत् तेनानिवृर्त्ति शुक्लध्यानचतुर्थभेदं जनयति । प्रतिपन्नानिवृत्तिश्चानगारश्चत्वारि केवलिनः कर्मांशानि 'अंशशब्दस्य सत्पर्यायत्वात्' सत्कर्माणि भवोपग्राहीणि क्षपयति तद् यथा वेदनीयमायुर्नाम गोत्रं चेति । ततः पश्चात् सिध्यति बुध्यत इति पूर्ववत् ॥ ४१ ॥

एतत् प्रत्याख्यानं प्रायः प्रतिरूपतायामेव स्यादतस्तामाह—

पडिरूवयाए ण भंते! जीवे किं जणयइ ?। पडिरूवयाए णं लाघवियं जणयइ । लहुभूए णं जीवे अप्पमत्ते पागडलिंगे पसत्थलिंगे विसुद्धसम्मत्ते सत्तसमिइसमत्ते सव्वपाण-भूय-जीव-सत्तेसु वीससणिज्जरूवे अप्पपडिलेहे जिइंदिए विउलतवसमिइसमन्नागए आवि भवइ ॥ ४२॥

व्याख्या-'प्रति' सादृश्ये' तत प्रतीति स्थविरकल्पिकादिसदृशं रूप वेषो यस्य स तथा तद्भावस्तत्ता तयाऽधिकोपकरणत्यागरूपया लाघवमस्यास्तीति लाघवी तद्भावो लाघविता तां द्रव्यत' स्वल्पोपकरणत्वेन भावतस्त्वप्रतिबद्धतया जनयति । लघुभूतश्च जीवोऽप्रमत्तस्तथा प्रकटलिङ्ग' स्थविरकल्पादिरूपेण विज्ञायमानत्वात् । प्रशस्तलिङ्गो जीवरक्षाहेतुरजोहरणादिधारकत्वात् । विशुद्धसम्यक्त्व । सत्त्वं चापत्स्ववैक्लव्याध्यवसानम्, समितय ईर्याद्या. पञ्च समाप्ता परिपूर्णा यस्य स समाप्तसत्त्वसमिति' 'निष्ठान्तस्य परनिपात प्राकृतत्वात्' तत एव सर्वप्राण-

भूत-जीव-सत्त्वेषु विश्वसनीयरूपस्तत्पीडाऽपहारित्वात्। अल्पप्रत्युपेक्षोऽल्पोपकरणत्वात्। जितेन्द्रियो विपुलेनानेकभेदतया विस्तीर्णेन तपसा समितिभिश्च समन्वागतो युक्तो विपुलतपःसमितिसमन्वागतश्चापि भवति ॥ ४२ ॥

प्रतिरूपतायामपि वैयावृत्त्यादेवेष्टफलावासिरिति तदाह—

वेयावच्चेणं भंते ! जीवे किं जणयइ ?। वेयावच्चेणं तित्थयरनामगोयं कम्मं निबंधइ ॥४३॥

व्याख्या—व्यावृतः कुलादिकार्येषु व्यापारवांस्तद्भावो वैयावृत्यं तेन तीर्थकरनामकर्म निबध्नाति । उक्तं हि तद्धेतुविंशतिस्थानसूत्रे–'वेयावचे समाही य'त्ति[1] ॥ ४३ ॥

वैयावृत्त्यवांश्च सर्वगुणभाग् स्यादिति तदाह—

सव्वगुणसंपन्नया णं भंते! जीवे किं जणयइ ?। सव्वगुणसंपन्नया णं अपुणरावत्तिं जणयइ । अपुणरावत्तिपत्तए णं जीवो सारीर-माणुसाणं दुक्खाणं नो भागी भवइ ॥ ४४ ॥

व्याख्या–सर्वगुणैर्ज्ञानादिभिः सम्पन्नो युक्तस्तद्भावः सर्वगुणसम्पन्नता तया अपुनरावृत्तिं पुनरिहागमनाभावमर्थान्मुक्तिं जनयति अपुनरावृत्तिप्राप्तो जीवः शारीर-मानसानां दुःखानां नो भागी भवति सिद्धिसुखभाग् भवतीति भावः ४४

१ वैयावृत्त्ये समाधिश्चेति ।

सर्वगुणसम्पन्नता च वीतरागतया स्यादिति तामाह—

वीयरागयाए ण भंते! जीवे कि जणयइ?। वीयरागयाए णं नेहाणुबंधणाणि तण्हाणुबंधणाणि य वुच्छिदइ। मणुन्नामणुन्नेसु सद्द–फरिस–रूव–रस–गंधेसु विरज्जइ ॥ ४५ ॥

व्याख्या–वीतरागतया राग–द्वेषापगमरूपया स्नेह पुत्रादिविषय', तृष्णा द्रव्यादिविषया तद्रूपाण्यनुबन्धनान्यनुकूलानि बन्धनानि व्यवच्छिनत्ति। ततश्च मनोज्ञामनोज्ञेषु शब्द–स्पर्श–रूप–रस–गन्धेषु विरज्यते। कषायप्रत्याख्यानेनैव गतार्थत्वेऽपि रागस्य सर्वानर्थमूलत्वख्यापनार्थं पृथग् वीतरागतोपादानम् ॥ ४५ ॥

वीतरागताया तात्त्विकं श्रामण्यम्, तत्र च व्रतानि, तत्पालनोपायभूता क्षान्तिरेव प्रथमेति तामाह—

खंतीए ण भंते! जीवे कि जणयइ?। खंतीए णं परीसहे जणयइ ॥ ४६ ॥

व्याख्या–क्षान्ति. क्रोधजयस्तया परीषहानर्थाद् वधादीन् जनयति ॥ ४६ ॥

क्षान्तिस्थितेन मुक्तिरपि कार्येति तामाह—

मुत्तीए ण भंते! जीवे कि जणयइ?। मुत्तीए णं अकिंचणं जणयइ। अकिंचणे य जीवे अत्थलोलाण पुरिसाणं अपत्थणिज्जे भवइ ॥ ४७ ॥

व्याख्या—मुक्तिर्निर्लोभता तया अकिञ्चनं निष्परिग्रहत्वं जनयति । अकिञ्चनश्च जीवोऽर्थे लोला लम्पटा अर्थलोलाश्चौरादयस्तेषामप्रार्थनीयः 'प्रस्तावाद् याचितुम्' अभिलपणीयो न भवति ॥ ४७ ॥

लोभे सति माया स्यात्, तदभाव आर्जवमतस्तदाह—

**अज्जवयाए णं भंते ! जीवे किं जणयइ ? । अज्जवयाए णं काउज्जुययं भावुज्जुययं भासुज्जुययं अविसंवायणं जणयइ । अविसंवायणसंपन्ने णं जीवे धम्मस्स आराहए भवइ ॥ ४८ ॥**

व्याख्या—ऋजुरवक्रस्तद्भाव आर्जवं तेन मायापरिहाररूपेण कायेन ऋजुरेव ऋजुकः कायर्जुकस्तद्भावस्तत्ता कुब्जाऽऽदिवेप—भ्रूविकाराद्यकरणतः प्राञ्जलता ताम्, भावोऽभिप्रायस्तेन ऋजुकता भावर्जुकता यदन्यद् विचिन्तयन् लोकभीत्यादिहेतोरन्यद् वाचा भापतेऽन्यत् करोति तत्त्यागरूपा ताम्, भापया ऋजुकता भापर्जुकता यदुपहासादिहेतोरन्यदेशभापया भापणं तत्परित्यागात्मिका ताम्, अविसंवादनं पराविप्रतारणं जनयति । अविसंवादनसम्पन्नः 'उपलक्षणात् कायर्जुकतादिसम्पन्नश्च' जीवो धर्मस्याराधको भवति ॥ ४८ ॥

एवंगुणस्यापि विनयेनैव फलावाप्तिः, स च मार्दवादेवेति तदाह—

**मद्दवयाए णं भंते ! जीवे किं जणयइ ? । मद्दवयाए णं मिउमद्दवसंपन्ने अट्ठ मयट्ठाणाइं निट्ठवेइ ॥ ४९ ॥**

व्याख्या—मार्दवेन 'अभ्यस्यमानेनेति गम्यम्' मृदु कोमल सकलभव्यजनमनःसन्तोषहेतुत्वाद् द्रव्यतो भावतश्चावनमनशीलस्तस्य भावो मार्दव यत् सदा मार्दवोपेतस्यैव भवति तेन सम्पन्नस्तदभ्यासात् सदा मृदुस्वभावो मृदुमार्दवसम्पन्न सन् अष्ट मदस्थानानि जात्यादीनि निष्ठापयति विनाशयति ॥ ४९ ॥

एतत् तत्त्वत· सत्यव्यवस्थितस्यैव स्यात्, तत्र च भावसत्यं प्रधानमिति तदाह—

भावसच्चे ण भंते! जीवे किं जणयइ?। भावसच्चे ण भावविसोहिं जणयइ। भावविसोहीए वट्टमाणे जीवे अरहतपन्नत्तस्स धम्मस्स आराहणयाए णं अब्भुट्ठेइ। अरहतपन्नत्तस्स धम्मस्स आराहणयाए ण अब्भुट्ठित्ता परलोगधम्मस्स आराहए भवइ ॥ ५० ॥

व्याख्या—भावसत्येन शुद्धान्तरात्मतारूपेण पारमार्थिकावितथत्वेन भावविशुद्धिं विशुद्धाध्यवसायात्मिकां जनयति। भावविशुद्धौ वर्तमानो जीवोऽर्हत्प्रज्ञप्तस्य धर्मस्याराधनयाऽभ्युत्थाय परलोकधर्मस्याराधको भवति प्रेत्य जिनधर्मावाप्त्येति भाव· ॥ ५० ॥

भावसत्ये च करणसत्य सम्भवतीति तदाह—

करणसच्चेण भंते! जीवे किं जणयइ। करणसच्चेणं करणसत्तिं जणयइ। करणसच्चे वट्टमाणो जीवो जहावाई तहाकारी आवि भवइ ॥ ५१ ॥

व्याख्या–करणसत्यं यत् प्रतिलेखनादिक्रियां यथोक्तामुपयुक्तः कुरुते तेन करणशक्तिं तन्माहात्म्यात् पुराऽनध्यवसितक्रियासामर्थ्यरूपां जनयति । करणसत्ये वर्तमानो जीवो यथावादी तथाकारी चापि भवति स हि सूत्रार्थमधीयानो यथैव क्रियाकलापं वदति तथैव करोतीति भावः ॥ ५१ ॥

एवंविधस्य योगसत्यमपि स्यादिति तदाह—

जोगसच्चेणं भंते ! जीवे किं जणयइ ? । जोगसच्चेणं जोगे विसोहेइ ॥ ५२ ॥

व्याख्या–योगा मनो–वाक्–कायास्तेषां सत्यमवितथत्वं योगसत्यं तेन योगान् विशोधयति कर्मबन्धाभावान्निर्दोषान् करोति ॥ ५२ ॥

एतच्च सत्यं गुप्त्यन्वितस्यैव स्यादित्याद्यां मनोगुप्तिमाह—

मणगुत्ताए णं भंते! जीवे किं जणयइ?। मणगुत्ताए णं जीवे एगग्गं जणयइ । एगग्गचित्ते णं जीवे मणगुत्ते संजमाराहए भवइ ॥ ५३ ॥

व्याख्या–मनोगुप्ततया मनोगोपनरूपया जीव एकाग्र्यं धर्मैकतानचित्तत्वं जनयति । एकाग्रचित्तो जीवो गुप्तमशुभाध्यवसायेभ्यो रक्षितं मनो येन स गुप्तमनाः संयमाराधको भवति मनोरोधस्य तत्र प्रधानत्वात् ॥ ५३ ॥

द्वितीयां गुप्तिमाह—

वयगुत्तयाए ण भंते ! जीवे कि जणयइ ?। वयगुत्तयाए णं निव्विकारत्तणं जणयइ । निव्विकारेणं जीवे वयगुत्ते अज्झप्पजोगसाहणजुत्ते आवि भवइ ॥ ५४ ॥

व्याख्या—वाग्गुप्ततया कुशलवागुदीरणया निर्विकारत्वं विकथाऽऽदिवाग्विकाराभावं जनयति। निर्विकारो जीवो वाग्गुप्त सर्वथा वाग्निरोधलक्षणवाग्गुप्तिमानध्यात्मं मनस्तस्य योगा व्यापारा धर्मध्यानादयस्तेषां साधनान्येकाग्रताऽऽदीनि तैर्युक्तश्चापि भवति । वाग्गुप्त एव हि चित्तैकाग्रताऽऽदिभाग् भवेदिति भावः ॥ ५४ ॥

तृतीया गुप्तिमाह—

कायगुत्तयाए णं भते ! जीवे कि जणयइ ?। कायगुत्तयाए णं संवरं जणयइ । संवरेण कायगुत्ते पुणो पावासवनिरोहं करेइ ॥ ५५ ॥

व्याख्या—कायगुप्ततया शुभयोगप्रवृत्त्यात्मककायगुप्तिरूपया संवरमशुभयोगनिरोधरूपं जनयति । संवरेण 'अभ्यस्यमानेनेति गम्यम्' कायगुप्त पुन. सर्वथा निरुद्धकायिकव्यापार. पापस्य कर्मण आस्रवा उपादानहेतवो हिंसाऽऽदय पापास्रवास्तन्निरोध करोति ॥ ५५ ॥

इतश्च गुप्तित्रयाद् यथाक्रमं मनो-वाक्-कायसमाधारणासम्भव इति तामाह—

मणसमाहारणयाए णं भंते! जीवे किं जणयइ ?। मणसमाहारणयाए एगग्गं जणयइ । एगग्गं जणइत्ता नाणपज्जवे जणयइ। नाणपज्जवे जणइत्ता सम्मत्तं विसोहेइ मिच्छत्तं विणिज्जरेइ ॥ ५६ ॥

व्याख्या—मनसः 'सम्' इति सम्यक् 'आङ्' इति मर्यादया श्रुतोक्तभावाद्या वा धारणा व्यवस्थापनं मनः—समाधारणा तयैकाग्र्यं जनयति । ऐकाग्र्यं जनयित्वा ज्ञानपर्यवान् विशिष्टवस्तुतत्त्वावबोधरूपान् जनयति । ज्ञानपर्यवान् जनयित्वा सम्यक्त्वं विशोधयति मिथ्यात्वं च निर्जरयति ॥ ५६ ॥

वयसमाहारणयाए णं भंते ! जीवे किं जणयइ ?। वयसमाहारणयाए णं वयसाहारणदंसणपज्जवे विसोहेइ । वयसाहारणदंसणपज्जवे विसोहित्ता सुलहबोहियत्तं निव्वत्तेइ दुलहबोहियत्तं निज्जरेइ ॥ ५७ ॥

व्याख्या—वाक्समाधारणया स्वाध्याय एव वाग्निवेशनात्मिकया, वाचा साधारणा वाक्साधारणा ये वचसोऽपि विषयाः प्रज्ञापनीया इत्यर्थः 'अवाग्विषयाणामन्यथात्वासम्भवेन शोधनानुपपत्तेः' तादृशाश्च ते दर्शनपर्यवाश्च सम्यग्भेदरूपा वाक्साधारणदर्शनपर्यवास्तान् विशोधयति शङ्कादिमालिन्यापनयनेन विशुद्धान् निर्मलान् करोति । वाक्साधारणदर्शनपर्यवान् विशोध्य सुलभबोधिकत्वं निर्वर्तयति । तत एव दुर्लभबोधिकत्वं निर्जरयति ॥ ५७ ॥

कायसमाहारणयाए ण भंते ! जीवे किं जणयइ ?। कायसमाहारणयाए चरित्तपज्जवे विसोहेइ । चरित्तपज्जवे विसोहइत्ता अहक्खायचरित्तं विसोहेइ । अहक्खायचरित्त विसोहित्ता चत्तारि केवलिकम्मंसे खवेइ । तओ पच्छा सिज्झइ बुज्झइ ॥ ५८ ॥

व्याख्या—कायसमाधारणया सयमयोगेषु देहस्य सम्यग्व्यवस्थापनरूपया चरित्रपर्यवान् चारित्रभेदान् 'क्षायौपशमिकानिति गम्यते' विशोधयति निर्मलीकरोति । चारित्रपर्यवान् विशोध्य यथाख्यातचारित्रं विशोधयति चारित्रमोहोदयनिर्जरणेन निर्मलीकुरुते । यथाख्यातचारित्रं विशोध्य चत्वारि केवलिसत्कर्मांशान् भवोपग्राहीणि सत्कर्माणि क्षपयति तत सिध्यति बुध्यते इति पूर्ववत् ॥ ५८ ॥

एवं समाधारणात्रयाद् यथाक्रमं ज्ञानादित्रयस्य शुद्धिमुक्त्वा फलमाह—

नाणसपन्नयाए णं भंते ! जीवे कि जणयइ ?। नाणसपन्नयाए सव्वभावाभिगमं जणयइ । नाणसपन्ने जीवे चाउरंतसंसारकतारे न विणस्सइ । जहा सूई ससुत्ता पडिया न विणस्सइ । तहा जीवे ससुत्ते ससारे न विणस्सइ । नाण—विणय—तव—चरित्तजोगे संपाउणइ । ससमय—परसमयसंघायणिज्जे भवइ ॥ ५९ ॥

व्याख्या–ज्ञानमिह प्रस्तावाच्छ्रुतज्ञानं तत्सम्पन्नतया जीवः सर्वभावानामभिगमं ज्ञानं जनयति । तथा ज्ञानसम्पन्नो जीवश्चतुरन्ते संसारकान्तारे न विनश्यति । 'यथेति दृष्टान्ते' सूची ससूत्रा सुप्रापतया न विनश्यति 'कचवरादिपतिताऽपीति गम्यम्' तथा जीवः ससूत्रः सश्रुतः संसारे न विनश्यति । यतः—

"सूई जहा ससुत्ता न नस्सइ कयवरंमि पडिया वि । जीवो तहा ससुत्तो न नस्सइ गओ वि संसारे" ॥ १ ॥

तत एव ज्ञानं चावध्यादि, विनयश्च ज्ञान–विनयादिस्तपश्च वक्ष्यमाणं, चरित्रयोगाश्चारित्रव्यापारा ज्ञान–विनय–तपश्चारित्रयोगास्तान् प्राप्नोति । स्वसमय–परसमययोः सङ्घातनीयः प्रमाणपुरुषतया मीलनीयः स्वसमय–परसमयसङ्घातनीयो भवति । स्वसमय–परसमयवेदिषु पुरुषेष्वेव संशयादिव्यवच्छेदाय मीलनसम्भवादिति भावः ॥ ५९ ॥

दंसणसंपन्नयाए णं भंते ! जीवे किं जणयइ ? । दंसणसंपन्नयाए णं भवमिच्छत्तच्छेयणं करेइ । परं न विज्झाइ । अणुत्तरेणं नाण–दंसणेणं अप्पाणं संजोएमाणे सम्मं भावेमाणे विहरइ ६०

व्याख्या–दर्शनसम्पन्नतया क्षायोपशमिकसम्यक्त्वसमन्विततया भवहेतुमिथ्यात्वस्य च्छेदनं क्षपणं करोति कोऽर्थः ? क्षायिकसम्यक्त्वमाप्नोति । ततश्च परमित्युत्तरकालमुत्कृष्टतस्तद्भवे एव मध्यम–जघन्यापेक्षया तृतीये चतुर्थे

१ सूची यथा ससूत्रा न नश्यति कचवरे पतिताऽपि । जीवस्तथा ससूत्रो न नश्यति गतोऽपि संसारे ॥ १ ॥

वा जन्मनि केवलोत्पत्तौ न विध्यायति न ज्ञान-दर्शनप्रकाशाभावरूपं विध्यानमाप्नोति। किन्त्वनुत्तरेण क्षायिकत्वात् प्रधानेन ज्ञान-दर्शनेनात्मानं सयोजयन् प्रतिसमयमपरापरेणोपयोगरूपतयोत्पद्यमानेन घटयन्। संयोजनं च भेदेऽपि स्यादत आह-सम्यग् भावयंस्तेनात्मानमात्मसान्नयन् विहरति भवस्थकेवलितया मुक्ततया वा ॥ ६० ॥

चरित्तसपन्नयाए णं भंते! जीवे किं जणयइ?। चरित्तसंपन्नयाए णं सेलेसीभावं जणयइ। सेलेसिं पडिवन्ने अणगारे चत्तारि कम्मंसे खवेइ। तओ पच्छा सिज्झइ बुज्झइ ॥ ६१ ॥

व्याख्या-चरित्रसंपन्नतया शैलेशो मेरु स इव शैलेशो मुनिर्निरुद्धयोगतयाऽत्यन्तस्थैर्येण तस्येयमवस्था शैलेशी तस्या भावः शैलेशीभावस्तं जनयति। उक्तं हि—'सेलेसो इह मेरू सेलेसी होइ जा तहाचलया'[1]। शैलेशीप्रतिपन्नोऽनगारश्चत्वारि केवलिसत्कर्माणि क्षपयतीत्यादि प्राग्वत् ॥ ६१ ॥

चारित्रं चेन्द्रियनिग्रहादेव स्यादिति तन्निग्रहमाह—

सोइंदियनिग्गहेण भंते! जीवे किं जणयइ?। सोइंदियनिग्गहेणं मणुन्नामणुन्नेसु सद्देसु राग-दोसनिग्गहं जणयइ। तप्पच्चइयं च कम्मं न बंधइ। पुव्वबद्धं च निज्जरेइ ॥ ६२ ॥

---

१ शैलेश इह मेरु शैलेशी भवति या तथाऽचलता।

व्याख्या—श्रोत्रेन्द्रियस्य कर्णस्य निग्रहः स्वविषयाभिमुखमनुधावतो नियमनं नियन्त्रणं श्रोत्रेन्द्रियनिग्रहस्तेन मनोज्ञामनोज्ञेषु शब्देषु राग–द्वेषनिग्रहं जनयति । तत्प्रत्ययिकं राग–द्वेषनिमित्तं कर्म न बध्नाति । पूर्वबद्धं 'प्रक्रमात् कर्म' निर्जरयति क्षपयति तन्निग्रहे शुभाध्यवसायप्रवृत्तेरिति भावः ॥ ६२ ॥

चक्खिंदियनिग्गहेणं भंते ! जीवे किं जणयइ ?। चक्खिंदियनिग्गहेणं मणुन्नामणुन्नेसु रूवेसु राग-द्दोसनिग्गहं जणयइ ॥ ६३ ॥ घाणेंदिए एवं चेव ॥ ६४ ॥ जिब्भिंदिए वि तहेव ॥ ६५ ॥ फासिंदिए वि एवं ॥ ६६ ॥ नवरं गंधेसु रसेसु फासेसु वत्तव्वं ॥

व्याख्या—एवं चक्षुरिन्द्रियनिग्रहेण चक्षुरिन्द्रियग्राह्येषु रूपेषु ॥ ६३ ॥ तथा घ्राणेन्द्रियनिग्रहेण तद्ग्राह्येषु गन्धेषु ॥ ६४ ॥ जिह्वेन्द्रियनिग्रहेण एतद्ग्राह्येषु रसेषु ॥ ६५ ॥ स्पर्शनेन्द्रियनिग्रहेण तद्ग्राह्येषु स्पर्शेषु । शेषं श्रोत्रेन्द्रियवद् विज्ञेयम् ॥ ६६ ॥

एतन्निग्रहोऽपि कषायविजयात् स्यादतस्तमाह—

कोहविजएणं भंते ! जीवे किं जणयइ ?। कोहविजएणं खंतिं जणयइ । कोहवेयणिज्जं कम्मं न बंधइ । पुव्वबद्धं च निज्जरेइ ॥ ६७ ॥

व्याख्या–क्रोधविजयो दुरन्ततादिपरिभावनेनोदयनिरोधस्तेन क्षान्तिं जनयति । क्रोधेन वेद्यत इति क्रोधवेदनीयं तद्धेतुभूतपुद्गलरूपं कर्म न बध्नाति। तथा पूर्वबद्धं 'प्रक्रमात् तदेव' निर्जरयति क्षपयति। अत्रार्थे लौकिकमुदाहरणम्—

सिरिकंण्हो बलदेवो सवगो तह दारुगो य चत्तारि । एए अस्साहरिया संपत्ता अडविमज्झमि ॥ १ ॥
संता नग्गोहतले वीसमिया ते तुरंगम मोत्तु । रत्ति वसंति दुप्पय–चउप्पयाई भयग्घत्था ॥ २ ॥
अन्नोन्नं च कहति य इक्को य करेउ पहरजागरणं । अह दारुगो य जग्गइ पढमे जामे सुयतन्नो ॥ ३ ॥
ताव य पिसायरूवो कोहो आगम्म दारुग भणइ । बहुदिणछुहालुओ हं सुत्ते तिन्ने वि भक्खेमि ॥ ४ ॥
तो दारुगो पयंपइ मइ सते को इमे य भक्खेइ ? । भणइ पिसाओ जइ पुण एव ता देहि मह जुज्झ ॥५॥

---

१ श्रीकृष्णो बलदेव सर्वगस्तथा दारुकश्च चत्वार । एतेऽश्वाहृताः सम्प्राप्ता अटवीमध्ये ॥ १ ॥
श्रान्ता न्यग्रोधतले विश्रान्तास्ते तुरङ्गमान् मुक्त्वा । रात्रिं वसन्ति द्विपद–चतुष्पदादिभयग्रस्ताः ॥ २ ॥
अन्योऽन्य च कथयन्ति चैकश्च करोतु प्रहरजागरणम् । अथ दारुकश्च जागर्ति प्रथमे यामे स्वपन्त्यन्ये ॥ ३ ॥
तावच्च पिशाचरूप क्रोध आगत्य दारुक भणति । बहुदिनबुभुक्षितोऽहं सुप्तान् त्रीनपि भक्षयामि ॥ ४ ॥
ततो दारुकः प्रजल्पति मयि सति क इमांश्च भक्षयेत् ? । भणति पिशाचो यदि पुनरेव तद् देहि मम युद्धम् ॥ ५ ॥

बाढं ति दारुगो पुण भणिऊणं तेण जुज्झिउं लग्गो । अन्नोन्नमाहणंति य मुट्ठिपहाराइसव्वेहिं ॥ ६ ॥
तं दारुगो निहणिउं जहा न सक्केइ तह पवड्ढेइ । कोहो य दारुगस्स य बलं च गाढं पिसायगस्स ॥ ७ ॥
एवं किच्छप्पाणो निव्वाहइ दारुगो पहरमेगं । सिर–जाणु–कोप्परेसुं दढप्पहारव्वणाइन्नो ॥ ८ ॥
लग्गे दुइज्जजामे उट्ठइ अह सव्वगो पवोहट्ठा । सुत्ते य दारुगे उण पयडीहूओ पिसाओ सो ॥ ९ ॥
सो सव्वगं च जंपइ एए खाएमि देउ वा जुद्धं । तेण य किच्छप्पाणो तहेव पुण सव्वगो वि कओ ॥ १० ॥
तइए पहरे जग्गइ बलदेवो उट्ठिओ महाबलिओ । तेण य जुज्झेउं तहेच पुण दारुगव्व कओ ॥ ११ ॥

१ बाढमिति दारुकः पुनर्भणित्वा तेन योद्धुं लग्नः । अन्योन्यमाहतश्च मुष्टिप्रहारादिसर्वैः ॥ ६ ॥
तं दारुको निहन्तुं यथा न शक्नोति तथा प्रवर्धते । क्रोधश्च दारुकस्य च बलं च गाढं पिशाचकस्य ॥ ७ ॥
एवं कृच्छ्रात्मा निर्वाहयति दारुकः प्रहरमेकम् । शिरो–जानु–कूर्परेषु दृढप्रहारव्रणाकीर्णः ॥ ८ ॥
लग्ने द्वितीययामे उत्तिष्ठत्यथ सर्वगः प्रवोधार्थम् । सुप्ते च दारुके पुनः प्रकटीभूतः पिशाचः स ॥ ९ ॥
स सर्वगं च जल्पत्येतान् खादामि ददातु वा युद्धम् । तेन च कृच्छ्रात्मा तथैव पुनः सर्वगोऽपि कृतः ॥ १० ॥
तृतीये प्रहरे जागर्ति बलदेव उत्थितो महाबलिकः । तेन च योद्धुं तथैव पुनर्दारुक इव कृतः ॥ ११ ॥

एवं चउत्थजामे उट्ठइ हरिसुब्भरो हरी जाव। तावागओ पिसाओ कहेइ तिन्ने वि खाएमि ॥ १२ ॥
कहइ हरी कह खायसि सहायए मह अणिज्जिओ एए?। इइ वोत्तूण दोण्णि वि सगाम काउमारद्धा ॥१३॥
मुट्ठिपहाराईहि जहा जहा जुज्झए पिसाओ य। एसो य महाबलिओ मए वि सह जुज्झइ जो उ ॥ १४ ॥
इइ चिंतिऊण तुस्सइ तहा तहा केसवो पमोएण। जह जह तुस्सेइ हरी बलहीणो तह तह पिसाओ ॥ १५ ॥
एवं सो य पिसाओ पसंतचित्तेण विजियकोवेण। हरिणा कुट्टिय छूढो सकोएउ उयट्टाए ॥ १६
तो हरिणा य पभाए तिन्नि वि दारुगाइया पुट्ठा। सभिन्नजाणु-कोप्पर-सिरा य तुब्भे य केण कया? ॥१७॥

---

१ एव चतुर्थयामे उत्तिष्ठति हर्षोद्धुरो हरिर्यावत्। तावदागतः पिशाच कथयति त्रीनपि खादामि ॥ १२ ॥
कथयति हरि कथ खादसि सहायकान् ममानिर्जित एतान्। इत्युक्त्वा द्वावपि सङ्ग्राम कर्तुमारब्धौ ॥ १३ ॥
मुष्टिप्रहारादिभिर्यथा यथा युध्यति पिशाचश्च। एष च महाबलिको मयाऽपि सह युध्यति यस्तु ॥ १४ ॥
इति चिन्तयित्वा तुष्यति तथा तथा केशव प्रमोदेन। यथा यथा तुष्यति हरिर्बलहीनस्तथा तथा पिशाच॰ ॥ १५ ॥
एव स च पिशाच प्रशान्तचित्तेन विजितकोपेन। हरिणा कुट्टयित्वा क्षिप्त सङ्कोच्योद्वर्तितया ॥ १६ ॥
ततो हरिणा च प्रभाते त्रयोऽपि दारुकादय पृष्टा। सम्भिन्नजानु-कूर्पर-शिरसश्च यूय केन कृता॰ ? ॥ १७ ॥

ते[1] पभणंति पहो ! इह पिसायरूवो समागओ रत्तिं । तेण समं जुज्झेउं एवं जाया पुणो अम्हे ॥ १८ ॥
तो दरिसिओ य हरिणा स एस कोवो पिसायरूवधरो । ऊयट्टियाउ कड्डिय पसंतयाए जिओ स मया ॥१९॥

॥ इति क्रोधविजये कृष्णादिदृष्टान्तः ॥ ६७ ॥

माणविजएणं भंते ! जीवे किं जणयइ ? । माणविजएणं मद्दवं जणयइ ॥ ६८ ॥

व्याख्या–मानविजयेन मार्दवं जनयति । शेषं पूर्ववत् ॥ ६८ ॥

मायाविजएणं भंते ! जीवे किं जणयइ ? । मायाविजएणं उज्जुभावं जणयइ ॥ ६९ ॥

व्याख्या–मायाविजयेन ऋजुभावं जनयति । शेषं प्राग्वत् ॥ ६९ ॥

लोभविजएणं भंते ! जीवे किं जणयइ ? । लोभविजएणं संतोसं जणयइ ॥ ७० ॥

व्याख्या–लोभविजयेन सन्तोषभावं जनयति । शेषं तथैव ॥ ७० ॥

एतज्जयश्च न प्रेम–द्वेषादिविजयं विना स्यादतस्तमाह—

पेज्ज–दोस–मिच्छादंसणविजएणं भंते ! जीवे किं जणयइ ? । पेज्ज–दोस–मिच्छादंसण-

१ ते प्रभणन्ति प्रभो ! इह पिशाचरूप, समागतो रात्रौ । तेन समं युद्धा एवं जाता पुनर्वयम् ॥ १८ ॥
ततो दर्शितश्च हरिणा स एष कोपः पिशाचरूपधरः । उद्वर्तितात् कृष्ट्वा प्रशान्ततया जितः स मया ॥ १९ ॥

विजएणं नाण-दसण चरित्ताराहणयाए अब्भुट्ठेइ । अट्ठविहस्स कम्मस्स कम्मगठिविमोयणयाए तह पढमयाए जहाणुपुवीए अट्ठावीसविह मोहणिज्ज कम्म उग्घाएइ । पचविह नाणावरणिज्जं नवविह दसणावरण पचविहमतराय एए तिन्नि वि कम्मसे जुगवं खवेइ । तओ पच्छा अणुत्तरं अणंत कसिण पडिपुन्न निरावरण वितिमिर विसुद्ध लोगालोगप्पभावणं केवलवरनाण-दसण समुप्पाडेइ । जाव सजोगी भवइ ताव य इरियावहिय कम्मं बंधइ । सुहफरिसं दुसमयठिइयं त पढमसमए बद्ध बिइयसमये वेइय तइयसमए निज्जिन्नं तब्बद्ध पुट्ठ उईरिय वेइअं निज्जिन्न सेअकाले अकम्म वावि भवइ ॥ ७१ ॥

व्याख्या-प्रेम च रागरूप द्वेषश्चाप्रीतिरूपो मिथ्यादर्शनं च सांशयिकादि प्रेम-द्वेष-मिथ्यादर्शनानि तद्विजयेन ज्ञान-दर्शन-चारित्राराधनायामभ्युत्तिष्ठते उद्यच्छति प्रेमादिनिमित्तत्वात् तद्विराधनाया । ततश्चाष्टविधस्य कर्मण 'मध्ये इति गम्यते' कर्मग्रन्थिरतिदुर्भेदघातिकर्मरूपस्तस्य विमोचना क्षपणा कर्मग्रन्थिविमोचना तस्यै 'चस्य गम्यत्वात्' तदर्थं च 'अभ्युत्तिष्ठते इत्यनुवर्तनीयम्'। अभ्युत्थाय च किं करोति ? इत्याह-तत्प्रथमतया, नहि तेन तत् पुरा क्षपितमासीदिति । आनुपूर्व्या अनतिक्रमेण यथानुपूर्वि अष्टाविंशतिविधं मोहनीयं कर्मोद्घातयति । चरमसमये तु यत्

क्षपयति तत् सूत्रकृदेवाह—पञ्चविधं ज्ञानावरणीयं नवविधं दर्शनावरणीयं पञ्चविधमन्तरायं 'एए' त्ति लिङ्गव्यत्यया-
देतानि त्रीण्यपि 'कम्मंसे' त्ति सत्कर्माणि युगपत् क्षपयति । तत इति क्षपणात् पश्चादनन्तरमनुत्तरं प्रधानम्, अनन्त-
मविनाशितया विषयानन्त्याच्च, कृत्स्नं च सर्ववस्तुविषयत्वात्, प्रतिपूर्णं सकलस्व—परपर्यायप्रतिपूर्णवस्तुप्रकाशकत्वात्।
निरावरणं निःशेषावरणविगमात् । वितिमिरं तस्मिन् सत्यज्ञानतिमिराभावात् । विशुद्धं सर्वदोषापगमात् । लोका-
लोकप्रभावकं तत्स्वरूपप्रकाशकत्वात् । केवलमसहायं वरं शेषज्ञानापेक्षया ज्ञानं च दर्शनं च केवलवरज्ञान—दर्शनं
समुत्पादयति जनयति 'आत्मन इति गम्यम्'। स च यावत् सयोगी मनो—वाक्—कायव्यापारवान् भवति तावच्च
किम् ? इत्याह—ईर्या गतिस्तस्याः पन्था यदाश्रिता सा भवति तस्मिन् भवमैर्यापथिकं 'उपलक्षणं च पथिग्रहणं' तिष्ठ-
तोऽपि सयोगस्येर्यासम्भवात्, सम्भवन्ति हि सयोगितायां केवलिनोऽपि सूक्ष्मा गात्रसञ्चारा इति । तदेवं पथि तिष्ठ-
न्नैर्यापथिकं कर्म बध्नाति तत् कीदृग् ? इत्याह—सुखयतीति सुखः स्पर्श आत्मप्रदेशैः सह संश्लेषो यस्य तत् सुखस्पर्शम्,
द्वौ समयौ यस्याः सा द्विसमया स्थितिरस्येति द्विसमयस्थितिकं, तत् प्रथमसमये बद्धमात्मसात् कृतं 'स्पर्शाविनाभा-
वित्वाच्च स्पृष्टं च', द्वितीयसमये वेदितमनुभूतं, तृतीये समये निर्जीर्णं परिशटितं तदुत्तरकालस्थितेः कषायहेतुत्वात् ।
अतस्तद् बद्धं जीवप्रदेशैः श्लिष्टं व्योम्ना पटवत् तथा स्पृष्टं मसृणमणिकुड्यापतितशुष्कस्थूलचूर्णवत् । अनेन विशे-
षणद्वयेन तस्य निधत्तनिकाचितावस्थयोरभावमाह। उदीरितमुदयप्राप्तमुदीरणायास्तत्रासम्भवाद्, वेदितं तत्फलसुखा-

नुभवनेन, निर्जीर्णं क्षयमुपगतं, 'सेअकाले' त्ति सूत्रत्वादेष्यत्काले चतुर्थसमयादावकर्म चापि भवति । तज्जीवापेक्षया पुनस्तस्य तथाविधपरिणामाभावात् ॥ ७१ ॥

शैलेश्यकर्मताद्वारद्वयमर्थतो व्याचिख्यासुराह—

अहाउय पालइत्ता अंतोमुहुत्तावसेसाऊए जोगनिरोहं करेमाणे सुहुमकिरियं अप्पडिवाइ सुक्कज्झाण झायमाणे तप्पढमयाए मणजोग निरुंभइ । वयजोग निरुंभइ । आणापाणनिरोहं करेइ । ईसि पचरहस्सक्खरुच्चारद्धाए य ण अणगारे समुच्छिन्नकिरिय अणियट्टिसुक्कज्झाण ज्झियायमाणे वेयणिज्जं आउय नाम गोय एए चत्तारि कम्मंसे खवेइ । तओ ओरालियकम्माइ च सव्वाहि विप्पजहणाहि विप्पजहित्ता उज्जुसेढीपत्ते अफुसमाणगई उड्ढं एगसमएणं अविग्गहेण तत्थ गता सागारोवउत्ते सिज्झइ बुज्झइ मुच्चइ परिनिव्वाइ सव्वदुक्खाणं अंतं करेइ ॥ ७२–७३ ॥

व्याख्या—अथ केवलावाप्त्यनन्तरमायुष्कं देशोनपूर्वकोटीमन्तर्मुहूर्तादिप्रमाणं पालयित्वाऽन्तर्मुहूर्तावशेषायुष्कः सन् योगनिरोध 'करेमाणे'त्ति करिष्यमाणः सूक्ष्मक्रियमप्रतिपातिशुक्लध्यानतृतीयभेद ध्यायंस्तत्प्रथमतया मनसो

योगो मनोद्रव्यसाचिव्यजनितो जीवव्यापारो मनोयोगस्तं निरुणद्धि । तदनन्तरं च वाचो योगो वाग्योगो भाषाद्रव्यसाचिव्यजनितो जीवव्यापारस्तं निरुणद्धि । आनापानावुच्छ्वास–निःश्वासौ तन्निरोधं करोति 'सकलकाययोगनिरोधोपलक्षणं चैतत्'। इत्थं योगत्रयं निरुध्येपदिति स्वल्पः प्रयत्नापेक्षया पञ्चानां ह्रस्वाक्षराणां अ इ उ ऋ ऌ इत्येवंरूपाणामुच्चारो भणनमविलम्बितादुतत्वेन तस्याद्धा कालो यावता ते पञ्चवर्णा उच्चार्यन्ते ईषत्पञ्चह्रस्वाक्षरोच्चारणाद्धा तस्यां 'च णमिति प्राग्वत्' अनगारः समुच्छिन्नोपरता क्रिया मनोव्यापाररूपा यस्मिंस्तत् समुच्छिन्नक्रियं, न निवर्तते कर्मक्षयात् प्रागित्येवंशीलमित्यनिवर्तिशुक्लध्यानं चतुर्थभेदरूपं ध्यायन् शैलेश्यवस्थामनुभवन्निति भावः । वेदनीयमायुर्नाम गोत्रं चैतानि चत्वार्यपि 'कम्मंसे'त्ति कर्मांशानि सत्कर्माणि युगपत् समकालं क्षपयति । 'तओ'त्ति ततो वेदनीयादिचतुर्कर्मक्षयानन्तरमौदारिक–कार्मणे शरीरे 'उपलक्षणात् तैजसं च' 'सव्वाहिं विप्पजहणाहिं'त्ति सर्वाभिर्विशेषेण प्रकर्षतो हानयस्त्यागा विप्रहाणयः 'व्यक्त्यपेक्षं बहुत्वम्' ताभिः, कोऽर्थः ? सर्वथा परिशाटेन न तु यथा पूर्वं सङ्घात–परिशाटाभ्यां देशत्यागतः 'विप्पजहित्त'त्ति विप्रहाय परिशाट्य, ऋजुः सरला श्रेणिराकाशप्रदेशपङ्क्तिस्तां प्राप्तोऽनुश्रेणिगत इति यावत् । 'अफुसमाणगइ'त्ति अस्पृशद्गतिः कोऽर्थः ? यावत्स्वाकाशप्रदेशेषु जीवोऽवगाढस्तावत एव प्रदेशान् स्पृशति, न ततोऽतिरिक्तमेकमपि प्रदेशमूर्ध्वमुपरि एकसमयेन, द्वितीयादिसमयान्तरास्पर्शनेनाविग्रहेण वक्रगतिरूपविग्रहाभावेनान्वय–व्यतिरेकाभ्यामुक्तोऽर्थः स्पष्टतरः स्यादित्-

विग्रहेणेत्युक्तम् । 'तत्थ'त्ति तत्र मुक्तिपदे 'गंत'त्ति गत्वा साकारोपयुक्तो ज्ञानोपयोगवान् सिध्यतीत्यादि यावदन्तं करोतीत्यादि प्राग्वत् ॥ ७२–७३ ॥

सम्प्रत्युपसंहर्तुमाह—

एस खलु सम्मत्तपरक्कमस्स अज्झयणस्स अट्ठे समणेणं भगवया महावीरेण आघविए पन्नविए परूविए दंसिए निदंसिए उवदंसिए त्ति बेमि ॥

व्याख्या–एषोऽनन्तरोक्त 'खलु निश्चये' सम्यक्त्वपराक्रमस्याध्ययनस्यार्थ श्रमणेन भगवता महावीरेण 'आघविए'त्ति आर्षत्वादाख्यात सामान्य–विशेषपर्यायाभिव्यासिकथनेन। प्रज्ञापितो हेतु–फलादिप्रकर्षज्ञापनेन। प्ररूपितः सरूपकथनेन। दर्शितो नानाविधभेददर्शनेन । निदर्शितो दृष्टान्तोपन्यासेन। उपदर्शित उपसंहारेण। इति ब्रवीमीत्यादि प्राग्वत् ॥ ग्र० ५९५ अ० २३ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायामेकोनत्रिंशत्तमं सम्यक्त्वपराक्रमाख्यमध्ययनं समाप्तम् ॥ २९ ॥

# अथ त्रिंशत्तमं तपोमार्गगत्याख्यमध्ययनम्।

इह प्रागध्ययनेऽप्रमाद उक्तस्तद्वता तपोविधेयमिति तत्स्वरूपाभिधायकं त्रिंशत्तममारभ्यते—

जहा उ पावयं कम्मं राग-दोससमज्जियं। खवेइ तवसा भिक्खू तमेगग्गमणो सुण ॥ १ ॥

व्याख्या—यथा येन प्रकारेण 'तुरवधारणे' पापकं कर्म ज्ञानावरणीयादि राग-द्वेषाभ्यां समर्जितमुपात्तं क्षपयत्येव तपसा भिक्षुस्तदेकाग्रमनाः सावधानचित्तः शृणु शिष्य! ॥ १ ॥

अनाश्रवेणैव किल कर्म क्षिप्यते इति तमाह—

पाणिवह-मुसावाए-अदत्त-मेहुण-परिग्गहा विरओ। राईभोयणविरओ जीवो भवइ अणासवो ॥ २ ॥
पंचसमिओ तिगुत्तो अकसाओ जिइंदिओ। अगारवो य निस्सल्लो जीवो भवइ अणासवो ॥ ३ ॥

अनयोर्व्याख्या—प्राणिवधादिभ्यो विरतो जीवो भवत्यनाश्रवोऽविद्यमानकर्मोपादानहेतुः ॥ तथा पञ्चसमित्यादिसहितोऽपि जीवोऽनाश्रवः समित्यादिविपर्ययस्य कर्मोपादानहेतुत्वेनाश्रवरूपत्वात् तदभावादनाश्रवत्वम्। शेषं सुगमम्। इति गाथाद्वयार्थः ॥ २-३ ॥

एवंविधश्च यथा कर्म क्षपयति तथाऽऽह—

एएसि तु विवच्चासे राग–द्दोससमज्जियं । खवेइ ज जहाकम्मं तं मे एगमणो सुण ॥ ४ ॥

व्याख्या—एतेषां तु प्राणिवधविरत्यादीनां समित्यादीनां चानाश्रवहेतूनां 'विवच्चासे'त्ति विपर्यासे प्राणिवधादावसमितत्वादौ च राग–द्वेषाभ्यां समर्जितं 'कर्मेति गम्यते' तद् यथा क्षपयति तन्मे कथयत एकाग्रमनाः शृण्विति ॥ ४ ॥

अत्र दृष्टान्तमाह—

जहा महातलागस्स सन्निरुद्धे जलागमे । उस्सिंचणाए तवणाए कमेणं सोसणा भवे ॥ ५ ॥

व्याख्या—यथा महातडागस्य सन्निरुद्धे पाल्यादिना निषिद्धे जलागमे जलप्रवेशे 'उस्सिंचणाए'त्ति सूत्रत्वादुत्सेचनेनारघट्टघट्यादिभिरुदञ्चनेन 'तवणाए'त्ति तपनेन रविकरसन्तापरूपेण क्रमेण परिपाट्या शोषणा जलाभावरूपा भवेत् ॥ ५ ॥

दार्ष्टान्तिकमाह—

एवं तु संजयस्सावि पावकम्मे निरासवे । भवकोडीसंचियं कम्मं तवसा निजरिज्जई ॥ ६ ॥

व्याख्या—एवं 'तु पुनः' संयतस्यापि पापकर्मणां निराश्रवे प्राणिवधाद्याश्रवाभावे भवकोटीसंचितं कर्म तपसा निर्जीर्यते आधिक्येन क्षयं नीयते । अत्र कोटीग्रहणं वहुत्वोपलक्षणं कोटीनियमासम्भवात् ॥ ६ ॥

तपोभेदानाह—

सो तवो दुविहो वुत्तो बाहिरब्भिंतरो तहा । बाहिरो छव्विहो वुत्तो एवमब्भिंतरो तवो ॥ ७ ॥

व्याख्या—तदनन्तरं प्रक्रान्तं प्रस्तावोपपन्नं तपो द्विविधमुक्तं बाह्यं तथा आभ्यन्तरम् । तत्र बाह्यं षड्विधमुक्तम् । एवमिति यथा बाह्यं षड्विधं तथा आभ्यन्तरमपि षड्विधं तपः । शेषं स्पष्टम् । 'सर्वत्र सूत्रत्वाल्लिङ्गव्यत्ययः' । किञ्च बाह्यं बाह्यद्रव्याद्यपेक्षया, प्रायो मुक्त्यवासिबहिरङ्गतया च, तद्विपरीतमाभ्यन्तरं, यदिवा लोकप्रतीतत्वात् कुतीर्थिकैश्च स्वाभिप्रायेणासेव्यमानत्वात् बाह्यं, तदितरचाभ्यन्तरमिति ॥ ७ ॥

षड्विधं तदाह—

अणसणमूणोयरिया भिक्खायरिया य रसपरिच्चाओ । कायकिलेसो संलीणया य बज्झो तवो होइ ॥८॥

व्याख्या—अक्षरार्थः स्पष्ट एव ॥ ८ ॥

भावार्थं तु प्रतिभेदमेतेषा स्वरूपत एवाह—

इत्तरिय-मरणकाला अणसणा दुविहा भवे । इत्तरिय सावकंखा निरवकखा विइज्जिया ॥ ९ ॥

व्यारया-इत्तरमेवेत्वरिकं नियतकालावधिकमित्यर्थः । मरणावसान. कालो यस्य तन्मरणकाल 'मध्यपदलोपी समास ' यावज्जीवमित्यर्थ. । अशनमाहारश्चतुर्विधो देशतः सर्वतो वा तदभावोऽनशन तच्च द्विविध भवेत्। तत्रेत्वरिकं सहावकाङ्क्षया घटिकाद्वयाद्युत्तरकाल भोजनाभिलापरूपया वर्तते इति सावकाङ्क्षम्। निरवकाङ्क्ष तज्जन्मनि भोजनाशसाऽभावात् द्वितीयं पुनर्मरणकालाख्यं 'प्राकृतत्वात् सर्वत्र स्त्रीलिङ्गत्वम्' ॥ ९ ॥

इत्वरिकानशनभेदानाह—

जो सो इत्तरियतवो सो समासेण छव्विहो । सेढितवो पयरतवो घणो य तह होइ वग्गो य ॥ १० ॥

व्यारया-यद् तदित्वरकं तप इत्वरानशनरूपं तत् समासेन संक्षेपेण षड्विधं, विस्तरेण बहुतरभेदमिति भाव. । षड्विधत्वमेवाह-'सेढि' श्रेणि पङ्क्ति तदुपलक्षित तपः श्रेणितपस्तच्चतुर्थादिक्रमेण क्रियमाणमिह षण्मासान्तं परिगृह्यते । तथा श्रेणिरेव श्रेण्या गुणिता प्रतरस्तदुपलक्षितं तप' प्रतरतप इह चाव्यामोहार्थं चतुर्थषष्ठाष्टमदशमाख्यपदचतुष्टयात्मिका श्रेणिर्विवक्षया सा च चतुर्भिर्गुणिता षोडशपदात्मकः प्रतरो भवति । अय चायामतो विस्तरतश्च तुल्य इत्यस्यायं स्थापनोपायः ।

" एकाद्याद्या व्यवस्थाप्याः पङ्क्तयोऽत्र यथाक्रमम् । द्वितीयाद्याः क्रमादेताः पूरयेदेककादिभिः " ॥ १ ॥

एक आद्योऽस्यां सा एकाद्या पङ्क्तिः सा आद्या यासु ता एकाद्याद्या व्यवस्थाप्या न्यस्याः । पङ्क्तयः श्रेणयो यथाक्रमं क्रमानतिक्रमेण । कोऽर्थः ? प्रथमा एकाद्या एककादारभ्य स्थाप्यते । एवं द्वितीयाद्याद्या द्विकादारभ्य । तृतीया त्रिकादारभ्य । चतुर्थी चतुष्कादारभ्य व्यवस्थाप्यते । एवं प्रथमां पङ्क्तिं प्रपूर्य द्वितीयाद्याः पङ्क्तीः क्रमात् प्राक् स्थापिताङ्कादग्रे एककादिभिः पूरयेत् पूर्णाः कुर्यात् । कोऽर्थः ? द्वितीयपङ्क्तौ द्विक-त्रिक-चतुष्कानामग्रे एककः । तृतीयपङ्क्तौ त्रिक-चतुष्कयोरन्ते एकको द्विकश्च । चतुर्थपङ्क्तौ चतुष्काग्रे एकक-द्विक-त्रिकाः स्थाप्यन्ते । स्थापना चेयम् ।

| | | | |
|---|---|---|---|
| १ च | २ प | ३ ऽष्ट | ४ |
| २ | ३ | ४ | १ |
| ३ | ४ | १ | २ |
| ४ | १ | २ | ३ |

तथा घन इति घनतपः 'चः पूरणे' तथा 'भवतीति क्रिया प्रतितपः प्रयोज्या' । अत्र च षोडशपदात्मकः प्रतरः पदचतुष्टयात्मिकया श्रेण्या गुणितो घनो भवति, आगतं चतुःषष्टिः, स्थापना तु पूर्विकैव, नवरं बाहुल्यतोऽपि पदचतुष्टयात्मकत्वं विशेषः । एतदुपलक्षितं तपो घनतप इति । वर्ग इति वर्गतपस्तत्र घन एव घनेन गुणितो वर्गो भवति । ततश्चतुःषष्टिश्चतुःषष्ट्यैव गुणिता जातानि षण्णवत्यधिकानि चत्वारि सहस्राणि ४०९६ एतदुपलक्षितं तपो वर्गतपः ॥ १० ॥

तत्तो य वग्गवग्गो उ पचमो छट्ठओ पइन्नतवो । मणइच्छियचित्तत्थो नायव्वो होइ इत्तरिओ ॥ ११ ॥

व्याख्या–ततश्च वर्गतपोऽनन्तरं वर्गवर्ग इति वर्गवर्गतप. 'तुः समुच्चये' पञ्चमम् । अत्र च वर्ग एव वर्गेण गुणितो वर्गवर्गो भवति यथा चैककोटि' सप्तषष्टिर्लक्षा' सप्तसप्ततिसहस्राणि द्वे शते षोडशाधिके अङ्कत' १६७७७२१६ एतदुपलक्षितं तपो वर्गवर्गतप इति । एवं पञ्चादिपदेष्वपि भावना कार्या । तथा षष्ठकंप्रकीर्णतपो यच्छ्रेण्यादिनियतरचनारहितं स्वशक्त्यपेक्ष नमस्कारसहितादि पूर्वपुरुषाचरितं यवमध्य–वज्रमध्य–चन्द्रप्रतिमाऽऽदि वेति । उपसंहारमाह—'मणइच्छियचित्तत्थो'त्ति मनस ईप्सित इष्टश्चित्रोऽनेकप्रकारोऽर्थ स्वर्गापवर्गादिस्तेजोलेश्याऽऽदिर्वा यस्मात् तन्मनईप्सितचित्रार्थं ज्ञातव्यं भवतीत्वरकं 'प्रक्रमादनशनाख्य तप इति' ॥ ११ ॥

मरणकालमनशनमाह—

जा साऽणसणा मरणे दुविहा सा वियाहिया । सवियारमवियारा कायचेट्ठं पई भवे ॥ १२ ॥

व्याख्या–'सुब्व्यत्ययाद्' यदनशनं मरणे मरणावसरे द्विविधं तत् व्याख्यातं कथितम् 'अर्हदादिभिरिति गम्यम्' । द्वैविध्यमाह–सह विचारेण मनो–वाक्–कायभेदचेष्टारूपेण वर्तते यत् तत् सविचारं तद्विपरीतमविचारम् । विशेषार्थमाह–कायचेष्टामुद्वर्तन–परिवर्तनादिकां कायप्रवीचारं प्रतीत्याश्रित्य भवेत् तत्र

सविचारं भक्तप्रत्याख्यानमिङ्गिनीमरणं च । तथाहि–भक्तप्रत्याख्याने गच्छस्थो गुरुदत्तालोचनो मरणायोद्यतो विधिना कृतसंलेखनस्त्रिविधं चतुर्विधं वाऽऽहारं प्रत्याख्याय त्यक्तदेहाद्युपकृतिममत्वः स्वयमेवोच्चार्यमाणान्यसाध्वादिदीयमाननमस्कारो यथाशक्ति यथासमाधि स्वयमुद्वर्तते परिवर्तते वाऽसत्यां च शक्तौ परैरपि समाधिजनकं तत् कारयति । इङ्गिनीमरणमप्युक्तन्यायेन प्रतिपद्य शुद्धस्थण्डिलस्थाता एकाक्येव कृतचतुर्विधाहारप्रत्याख्यानः स्थण्डिलस्यान्तश्छायात उष्णमुष्णाच्च च्छायां स्वयं संक्रामत्युद्वर्तनादिचेष्टां च करोति नान्येन कारयतीत्येतद्द्वयं सविचारम् । अविचारं तु पादपोपगमनं तत्र यो विधिवद् देवान् गुरून् नत्वा कृतचतुर्विधाहारप्रत्याख्यानः सर्वत्राप्रतिबद्धो दण्डायतादिस्थानस्थो गिरिकन्दरादिषु पादपवन्निश्चेष्टस्तिष्ठति तस्य तद् भवति ॥ १२ ॥

प्रकारान्तरेण पुनर्द्वैविध्यमाह—

अहवा सपरिकम्मा अपरिकम्मा य आहिया । नीहारिमनीहारि आहारछेओ य दोसु वि ॥१३॥

व्याख्या–अथवा सह परिकर्मणा स्थान–निषदन–त्वग्वर्तनादिना वर्तत इति सपरिकर्म तदितरदपरिकर्म चाख्यातं कथितम् । तत्र सपरिकर्म भक्तप्रत्याख्यानमिङ्गिनीमरणं च । प्रथमे स्वयमन्येन वा कृतस्य । द्वितीये स्वयं कृतस्यैवोद्वर्तनादिचेष्टारूपपरिकर्मणाऽनुज्ञानात् । यद्वा संलेखनापरिकर्म यत्र तत् सपरिकर्म तद्विपरीतं त्वपरिकर्म । तथा निर्हारो गिरिकन्दरादिगमनेन ग्रामादेर्बहिर्निर्गमनं तद् विद्यते यत्र तन्निर्हारि । यदुत्थातुकामे व्रजिकाऽऽदौ

क्रियते तदनिर्हारि इदं निर्हारिमानिर्हारिमस्वरूप वृहट्टीकायां स्थानाङ्गटीकायां तु इदमुक्तम्—यद् वसतेरेकदेशे विधीयते तत् तत शरीरस्य गर्हणान्नि सारणान्निर्हारिमं, यत् पुनर्गिरिकन्दराऽऽदौ विधीयते तत• शरीरस्य अनि सारणादनिर्हारिमम्। परमार्थं तु वहुश्रुता विदन्ति। एतच्च प्रकारद्वयमपि पादपोपगमनविषयम् । आहारच्छेदश्च द्वयोरपि सपरिकर्मापरिकर्मणोर्निर्हार्यनिर्हारिणोश्च 'सम इति शेष.' ॥ १३ ॥

ऊनोदरतामाह—

उमोयरिय पचहा समासेण वियाहियं। दव्वओ खेत्त—कालेणं भावेण पज्जवेहि य ॥ १४ ॥

व्याख्या—अवमं न्यूनमुदर यस्यासाववमोदरस्तस्य भावोऽवमोदरता न्यूनोदरता पञ्चधा समासेन सङ्क्षेपेण व्याख्याता। पञ्चधात्वमेवाह—द्रव्यत., क्षेत्रं च कालश्च क्षेत्र—कालं तेन, भावेन, पर्यायैश्चोपाधिभूतै 'अत्र हेतौ पञ्चमी तृतीया च' ॥ १४ ॥

तत्र द्रव्यत आह—

जो जस्स उ आहारो तत्तो उम तु जो करे। जहन्नेणेगसित्थाई एवं दव्वेण उ भवे ॥ १५ ॥

व्याख्या—यो यस्य 'तु' पूरणे' पुंसो द्वात्रिंशत्कवलमान', स्त्रियस्त्वष्टाविंशतितन्मान आहारो भोजनम्, ततः

स्वाहारादवमं ऊनं 'तुः प्राग्वत्' यः कुर्याद् 'भुञ्जान इति शेषः'। जघन्येनैकसिक्थकं यत्रैकमेव सिक्थं भुज्यते। आदिशब्दात् सिक्थद्वयादारभ्य यावदेककवलभोजनमेतच्चाल्पाहाराख्यमवमौदर्यमाश्रित्योक्तम्, इदं चाष्टकवलान्तं १। नवकादारभ्य द्वादशभिः कवलैरपार्धाख्यम् २। त्रयोदशकादारभ्य पोडशान्तं द्विभागाख्यम् ३। सप्तदशकादारभ्य चतुर्विंशतितत्पर्यन्तं प्राप्ताख्यम् ४। पञ्चविंशतेरारभ्य यावदेकत्रिंशत्कवलभोजनं किञ्चिदूनमवमौदर्यम् ५। इत्येवं पञ्चविधमवमौदर्यमिति। उक्तं च—

"अप्पाहार १ अवड्ढा २ दुभाग ३ पत्ता ४ तहेव किंचूणा ५।
अट्ठ १ दुवालस २ सोलस ३ चउवीस ४ तहेक्कतीसा ५ य" ॥ १ ॥

'यत्–तदोर्नित्याभिसम्बन्धात्' तस्यैव द्रव्येणोपाधिभूतेन भवेदवमौदर्यमिति ॥ १५ ॥

क्षेत्रावमौदर्यमाह—

गामे नगरे तह रायहाणि–निगमे य आगरे। पल्ली–खेडे कव्वड-दोणमुह-पट्टण-मडंब–संवाहे ॥ १६ ॥
आसमपए विहारे संनिवेसे समाय-घोसे य। थलि-सेणा-खंधारे सत्थे संवट्ट-कोट्टे य ॥ १७ ॥

१ अल्पाहारापार्ध–द्विभाग–प्राप्तं तथैव किञ्चिदूनम् ५। अष्ट द्वादश षोडश चतुर्विंशतिस्तथैकत्रिंशच्च ॥ १ ॥

वाडेसु व रत्थासु व घरेसु वा एवमेत्तिय खेत्तं । कप्पइ उ एवमाई एवं खित्तेण ऊ भवे ॥ १८ ॥

आसां व्याख्या–ग्रसते गुणान् गम्यो वाऽष्टादशानां कराणामिति वा ग्रामः । नात्र करा सन्तीति नगरम् । तथा राजधानी राज्ञ. पीठस्थानम् । निगमः प्रभूतवणिग्निवासः । आकर स्वर्णाद्युत्पत्तिस्थानम् । पल्ली वृक्षगहनाश्रिता प्रान्तजनस्थानं चोरादिस्थानम् । खेटं धूलिप्राकारपरिक्षिप्तम् । कर्बट कर्बटजनावासं कुनगरमित्यर्थः । द्रोणमुख जल–स्थल–निर्गम–प्रवेशं यथा भृगुकच्छम् । पत्तनं तु यत्र सर्वदिग्भ्यो जनाः पतन्ति तच्च द्विभेदं जलमध्यवर्ति स्थलमध्यवर्ति च । मडंबं यस्य सर्वदिक्ष्वर्धतृतीययोजनान्तर्ग्रामो न स्यात् । सम्बाधः प्रभूतचातुर्वर्ण्यनिवासः 'सर्वत्र द्वन्द्व ' तस्मिन् ॥ आश्रमपदं तापसाश्रयोपलक्षितं स्थानम् । विहारो देवगृहम् । सनिवेशो यात्राद्यायातजनावास. । समाज' परिषत् । घोषो गोकुलम् । स्थली उच्चभूभागः । सेना चतुरङ्गबलसमूहः । स्कन्धावार. स एवाशेषखेडाद्यङ्गोपलक्षित' प्रतीत' । संवर्तो भयत्रस्तजनसमवाय. । कोट्ट प्राकारम् । 'अत्रापि समाहारः' तस्मिन् ॥ वाटेषु वृत्यादिपरिक्षिप्तगृहसमूहेषु । रथ्यासु सेरिकासु । गृहेषु प्रसिद्धेषु 'सर्वत्र वा विकल्पे' एवंप्रकारेण 'एत्तियं'ति एतावद् विवक्षितनियतपरिमाणं क्षेत्रं कल्पते उपयोग याति 'पर्यटितुमिति शेष.' एवमादि 'आदिशब्दात् गृहशालाऽऽदिपरिग्रह.' । एवमित्यूनत्वेनाभिग्रहलक्षणेन क्षेत्रेण क्षेत्रविषय 'तुः पूरणे' भवेद् 'अवमौदर्यमिति प्रक्रमः' इति गाथात्रयार्थ. ॥ १६–१७–१८ ॥

प्रकारान्तरेण क्षेत्रावमौदर्यमाह—

पेडा य अद्धपेडा गोमुत्ति पयंगवीहिया चेव । संबुक्कावट्टाऽऽययगंतुंपच्चागया छट्ठा ॥ १९ ॥

व्याख्या–पेटा पेटिका इव चतुष्कूणा । ततश्च यत्र चतुःश्रेणिव्यवस्थितगृहं पङ्क्तिषु भ्रम्यते मध्यगृहाणि मुच्यन्ते सा पेटेत्यर्थः १ । अर्धपेटा इयमेवार्धसंस्थिता द्विकूणा श्रेणिद्वयसम्बद्धगृहभ्रमणवतीत्यर्थः २ । गोमूत्रिका गोमूत्राकारेण वक्रपरिभ्रमणरूपा । उक्तं च—

"[1]वामाउ दाहिणगिहे भिक्खइ तो दाहिणाउ वामाए । पुणरवि दाहिण–वामाइ जीए सा होइ गोमुत्ती" ३ ॥ १ ॥

पतङ्गवीथिकाऽनियता पतङ्गः शलभस्तदुड्डयनसदृशा ४ । शम्बूकः शङ्खस्तद्वदावर्तो यस्यां सा शम्बूकावर्ता सा द्विविधा आभ्यन्तरा बाह्या च । तत्राभ्यन्तरशम्बूका अभ्यन्तरात् शङ्खनाभिक्षेत्रोपमायाकृत्याऽन्तर्मध्यत आरभ्य भिक्षायां चरन् बाह्यतो निवर्तते । द्वितीया विपर्ययाद् विज्ञेया । उक्तं च—

"[2]अब्भितरसंबुका मज्झा भमिरो बहिं विणिस्सरइ । तव्विवरीया भण्णइ बहिसंबुका य भिक्ख त्ति" ५ ॥ १ ॥

---

१ वामाद् दक्षिणगृहे भिक्षते ततो दक्षिणाद् वामागाम् । पुनरपि दक्षिण–वामायां यस्यां सा भवति गोमूत्रिका ॥ १ ॥

२ अभ्यन्तरशम्बूका मध्ये भ्रमन् बहिर्विनिःसरति । तद्विपरीता भण्यते बहिःशम्बूका च भिक्षेति ॥ १ ॥

आयतगतप्रत्यागता तत्रायत दीर्घं प्राञ्जलमित्यर्थं । सरलतया गत्वा निवर्तत इति पष्ठी ६ । किञ्चाभ्रगोचरत्वरूपत्वाद् भिक्षाचर्यात्वेऽप्यासामवमौदर्यमस्त्वित्यभिसन्धिना विधीयमानत्वादवमौदर्यव्यपदेशोऽप्यदुष्ट एव निमित्तभेदादेकत्रापि पुरुपे पितृ–पुत्रादिव्यपदेशवत् । एपं पूर्वं ग्रामादिविपयस्योत्तरत्र कालादिविपयस्य च नैयत्यस्याभिग्रहत्वेन भिक्षाचर्यात्वप्रसङ्गेऽपि इदमेवोत्तर वाच्यम् ॥ १९ ॥

कालावमौदर्यमाह—

दिवसस्स पोरिसीण चउण्ह पि उ जत्तिओ भवे कालो । एवं चरमाणो खलु कालोमाणं मुणेयव्वं ॥२०॥

व्याख्या–दिवसस्य पौरुपीणा प्रहराणा चतसृणामपि 'तु प्राग्वत्' यावद् भवेत्कालोऽर्धप्रहरादिक' 'अभिग्रहविपय इति शेप' । एवं 'प्रक्रमात् तेन कालेन' 'चरमाणो' त्ति चरतः खलु निश्चित 'कालोमाणं' ति कालेन हेतुनाऽवमत्वं 'प्रक्रमादुदरस्य' कालावमौदर्यं मुणितव्यं ज्ञातव्यम् ॥ २० ॥

एतदेव प्रकारान्तरेणाह—

अहवा तइयाए पोरिसीए ऊणाइ घासमेसंतो । चउभागूणाए वा एवं कालेण ऊ भवे ॥ २१ ॥

व्याख्या–अथवा तृतीयाया पौरुष्यामूनाया ग्रासमाहारमेपयंस्त्रिविधैपणया गवेपयन् चतुर्भागोनाया 'वाशब्दात्

पश्चादिभागोनायां' तृतीयपौरुष्यामेवमसुना कालविषयाभिग्रहलक्षणेन प्रकारेण 'चरन्नित्यनुवर्तते' कालेन तु भवेदवमौदर्यमौत्सर्गिकविधिविषयमेतदुत्सर्गतो हि तृतीयपौरुष्यामेव भिक्षाऽटनस्यानुज्ञातत्वात् ॥ २१ ॥

भावावमौदर्यमाह—

इत्थी वा पुरिसो वा अलंकिओ वा णलंकिओ वा वि । अन्नयरवयत्थो वा अन्नतरेणं च वत्थेणं ॥२२॥
अन्नेण विसेसेणं वन्नेणं भावमणुमुअंतो उ । एवं चरमाणो खलु भावोमाणं मुणेयव्वं ॥ २३ ॥

अनयोर्व्याख्या—स्त्री वा पुरुषो वाऽलङ्कृतः कटकाद्यलङ्कारभूषितोऽनलङ्कृतो वाऽपि । अन्यतरवयस्थो वा बाल्याद्यपेक्षया । अन्यतरेण वा पट्टकूलादिवस्त्रेणोपलक्षितः ॥ अन्येन विशेषेण कुपित–प्रहसितादिनाऽवस्थाभेदेन, वर्णेन श्वेतादिनोपलक्षितः, भावं पर्यायमुक्तरूपमलङ्कृतत्वादि 'अणुमुअंतो' त्ति 'तुरेवार्थे' अनुन्मुञ्चन्नेवात्यजन्नेव यदि दाता दास्यति ततोऽहं ग्रहीष्ये नान्यथेति भावः । एवं चरन् 'खलुर्निश्चयेन' 'भावोमाणं' ति भावावमत्वम् 'अर्थादुदरस्य' मुणितव्यं ज्ञातव्यमिति गाथाद्वयार्थः ॥ २२–२३ ॥

पर्यवावमौदर्यमाह—

दव्वे खित्ते काले भावंमि य आहिया उ जे भावा । एएहिं उमचरओ पज्जवचरओ भवे भिक्खू ॥२४॥

व्याख्या–द्रव्येऽशनादौ क्षेत्रे ग्रामादौ काले पौरुष्यादौ भावे स्त्रीत्वादावाख्याता' कथितास्तु ये भावाः पर्याया एकसिक्थोनत्वादय एतै. सर्वैरपि द्रव्यादिपर्यायै. 'उम'त्ति अवमम् 'अर्थादवमौदर्यं' चरत्यासेवते इत्यवमचरकः पर्यवचरको भवेद् भिक्षुः । को भावः ? एकसिक्थोनत्वादावपि ग्राम–पौरुषी–स्त्रीत्वादिष्वपि नव–पुराणादिविशिष्टाभिग्रहत. पूर्वस्मादूनत्व भावनीयम् । इह च पर्यवग्रहणेन पर्यवप्राधान्यविवक्षया पर्यवावमौदर्यमिति । यत्रापि च द्रव्यतो न्यूनतोदरस्स नास्ति तत्रापि क्षेत्रादिन्यूनतामपेक्ष्यावमौदर्याण्यवसेयानि ॥ २४ ॥

भिक्षाचर्यामाह—

अट्ठविहगोयरग्गं तु तहा सत्तेव एसणा । अभिग्गहा य जे अन्ने भिक्खायरियमाहिया ॥ २५ ॥

व्याख्या–अष्टविधोऽष्टप्रकारोऽग्र. प्रधान आधाकर्मादिपरिहारेण गोचरो गोरिव चरण पर्यटनमष्टविधाग्रगोचर. 'तु' समुच्चये' तथा सप्तैवैषणा. । अभिग्रहाश्च येऽन्ये एतदतिरिक्तास्ते किम् ? इत्याह–भिक्षाचर्या वृत्तिसङ्क्षेपापरनामिका आख्याता उक्ता । अत्र चाऽष्टाग्रगोचरभेदाः पेटादय एव प्रागुक्ता. पट्ट शंबूकावर्ताया द्वैविध्याश्रयणात् ऋज्वाद्याश्चापराया. प्रक्षेपादष्ट । सप्तैपणाश्चेमा.—

"संसट्ठमसंसट्ठा उद्धड तह अप्पलेवडा चेव । उग्गहिया पग्गहिया उज्झियधम्मा य सत्तमिया" ॥ १ ॥

---

१ संसृष्टाऽसंसृष्टे उद्धृता तथाऽल्पलेपा चैव । उद्गृहिका प्रगृहिका उज्झितधर्मा च सप्तमी ॥ १ ॥

अभिग्रहाश्च द्रव्यादयस्तत्र द्रव्यतः कुन्ताग्रादिस्थितं मण्डकादि, क्षेत्रतो देहली पादान्तरे कृत्वा, कालतः सर्वभिक्षाचरेषु भिक्षातो निवृत्तेषु, भावतो हसन् रुदन् वा बद्धो वेत्येवं यदि दास्यति तर्हि ग्रहीष्ये इत्येवमादयः । सामान्येनाभिग्रहयुक्ता वा सप्तैषणा अष्ट स्युरिति ॥ २५ ॥

रसपरित्यागमाह—

खीर–दहि–सप्पिमाई पणीयं पाण–भोयणं । परिवज्जणं रसाणं तु भणियं रसविवज्जणं ॥ २६ ॥

व्याख्या–क्षीरं दुग्धं दधि प्रतीतं सर्पिर्घृतं तदादि 'आदिशब्दाद् गुरुपक्वान्नादिपरिग्रहः' प्रणीतमतिबृंहकं पानं खर्जूररसादि भोजनं गलद्बिन्दूदनादि 'अनयोर्द्वन्द्वे' पान–भोजनमेषां परिवर्जनं किम्भूतानां ? रसमानत्वेन रसानां 'तुः पूरणे' भणितमर्हदादिभिरिति रसविवर्जनं नाम बाह्यं तप इति ॥ २६ ॥

कायक्लेशमाह—

ठाणा वीरासणाईया जीवस्स उ सुहावहा । उग्गा जहा धरिज्जंति कायकिलेसं तमाहियं ॥ २७ ॥

व्याख्या–स्थानानि कायावस्थितिभेदा वीरासनं यत् सिंहासनस्थस्य तदपनयने तथैवावस्थानं तदादिर्येषां तानि वीरासनादीनि 'आदिशब्दाद् गोदोहिकासनादि' 'लोचाद्युपलक्षणं चैतत्' । तथोक्तम्—

"वीरासण–उक्कुडगासणाइ–लोयाइओ य विन्नेओ । कायकिलेसो ससारवासनिव्वेयहेउ त्ति" ॥ १ ॥

जीवस्य 'तुरेवार्थे' सुखावहान्येव मुक्तिसुखप्रापकत्वेनोग्राणि दुरनुष्ठेयतयोत्कटानि यथा धार्यन्ते सेव्यन्ते 'यतिभिरिति गम्यम्' कायक्लेश. स आख्यातः 'तथैवेति शेपः' ॥ २७ ॥

सलीनतामाह—

एगंतमणावाए इत्थी–पसुविवज्जिए । सयणासणसेवणया विवित्तसयणासणं ॥ २८ ॥

व्याख्या–एकान्ते जनानाकुले अनापाते स्त्र्याद्यापातरहिते स्त्री–पशुविवर्जिते तत्रैवावस्थितस्त्र्यादिरहिते 'शून्यागारादाविति भावः' शयनासनसेवनं शयन शय्या आसन पीठ तस्य सेवनम् 'प्राकृत्वाल्लिङ्गव्यत्यये' तेन विविक्तशयनासनं नाम 'वाह्यं तप इति शेप.' 'उपलक्षणादेपणीयफलकादिग्रहणम्' अनेन विविक्तचर्या नाम सलीनतोक्ता, शेपसलीनतोपलक्षणं चासौ प्राधान्याचास्या एवाभिधान साक्षादिति प्राधान्यं चेन्द्रियसंलीनतोपकारित्वादस्या. । इय च चतुर्धा—

"[2]इंदिय १ कसाय २ जोगे ३ पडुच्च सलीणया मुणेयव्वा । तह जा विवित्तचरिया ४ पन्नत्ता वीयरागेहिं" ॥ १ ॥

---

१ वीरासनोत्कटासनादि–लोचादिकश्च विज्ञेय । कायक्लेश ससारवासनिर्वेदहेतुरिति ॥ १ ॥

२ इन्द्रिय–कपाय–योगान् प्रतीत्य सलीनता ज्ञातव्या । तथा या विविक्तचर्या प्रज्ञप्ता वीतरागै ॥ १ ॥

तत्रेन्द्रियसंलीनता श्रोत्रेन्द्रियादिभिः सुन्दरेतरेषु शब्दादिषु राग-द्वेपाकरणं १ । कषायसंलीनता तदुदयनिरोध उदीर्णविफलीकरणं च २ । योगसंलीनता च मनोयोगादीनामकुशलानां निरोधः कुशलानामुदीरणम् ३ ॥ २८ ॥

उक्तमर्थमुपसंहरन्नुत्तरार्धं च सम्बन्धयन्नाह—

एसो बाहिरगतवो समासेण वियाहिओ । अब्भिंतरो तवो इत्तो वुच्छामि अणुपुव्वसो ॥ २९ ॥

व्याख्या—'आर्षत्वात्' एतद् बाह्यं तपः समासेन सङ्क्षेपेण व्याख्यातम् । ननु किं पुनरितो बाह्यात् तपसः फलम् ? उच्यते—निःसङ्गता-शरीरलाघवेन्द्रियजय-संयमरक्षणादियोगाच्छुभध्यानावस्थितस्य कर्मनिर्जरणमिति । आभ्यन्तरं तप इतोऽनन्तरं वक्ष्याम्यानुपूर्व्येति ॥ २९ ॥

तदेवाह—

पायच्छित्तं विणओ वेयावच्चं तहेव सज्झाओ । झाणं उस्सग्गो वि य अब्भिंतरओ तवो होइ ॥ ३० ॥

अक्षरार्थः स्पष्टो भावार्थं सूत्रकृदेवाह—

आलोयणारिहाईयं पायच्छित्तं तु दसविहं । जे भिक्खू वहई सम्मं पायच्छित्तं तमाहियं ॥ ३१ ॥

व्याख्या—आलोचनं स्वकृतपापप्रकाशनं प्रादुष्करणमित्यर्थः । तदर्हति योग्यं भवति तदालोचनाऽर्हं यत् पापमा-

लोचनात एव शुध्यति 'आदिश दात् प्रतिक्रमणार्हादिपरिग्रह ' इह पुनर्विषय-विषयिणोरभेदोपचारादेवंविधपापविशुद्ध्युपायभूतान्यालोचनाऽऽदीन्येवालोचनाऽर्हादिशब्देनोक्तानि तदेवंविधमालोचनाऽर्हमादिर्यस्य तदालोचनाऽर्हादिक प्रायश्चित्तं 'तुरेवार्थे' दशविधमेव तदित्थम्—

"* आलोयण-पडिक्कमणे [3]मीस-[4]विवेगे तहा वि उस्सग्गे । तव-छेयं-मूलं-अणवट्ठिया य पारचिए चेव" ॥ १ ॥

'जे'इत्यार्षत्वाद् यद् भिक्षुर्वहत्यासेवते सम्यगवैपरीत्येन प्रायश्चित्तं तदाख्यातम् ॥ ३१ ॥

विनयमाह—

अब्भुट्ठाणं अंजलिकरण तहेवासणदायणं । गुरुभत्ति भावसुस्सूसा विणओ एस वियाहिओ ॥ ३२ ॥

व्याख्या-अभ्युत्थानमञ्जलिकरणं च प्रतीतं 'तथैवेति समुच्चये' 'आसणदायणं' ति सूत्रत्वादासनदानं गुरुभक्तिभावेनान्त:करणेन शुश्रूषा तदादेशं प्रति श्रोतुमिच्छा पर्युपासना वा विनय एष व्याख्यात. ॥ ३२ ॥

वैयावृत्त्यमाह—

आयरियमाईए वेयावच्चंमि दसविहे । आसेवणं जहाथामं वेयावच्चं तमाहियं ॥ ३३ ॥

---

* आलोचना-प्रतिक्रमणे मिश्र-विवेके तथाप्युत्सर्गः । तप -छेद्-मूलानवस्थितानि च पारञ्चितश्चैव ॥ १ ॥

व्याख्या—आचार्यादिविषये व्यावृतभावो वैयावृत्त्यमुचिताहारादिसम्पादनं तस्मिन् दशविधे यदासेवनमेतद्विषयमनुष्ठानं यथास्थाम स्वसामर्थ्यानतिक्रमेण वैयावृत्त्यं तदाख्यातम्। तद् दशविधत्वमाचार्यादिविषयभेदाद्। उक्तं च—

"* आयरिय-उवज्झाए थेरे तवस्सी-गिलाण-सेहाण। साहम्मिय-कुल-गणे-संघसंगयं तमिह कायव्वं" ॥ १ ॥ ३३ ॥

स्वाध्यायमाह—

वायणा पुच्छणा चेव तहेव परियट्टणा। अणुपेहा धम्मकहा सज्झाओ पंचहा भवे ॥ ३४ ॥

व्याख्या—प्राग्वत् ॥ ३४ ॥

ध्यानमाह—

अट्ट-रुद्दाणि वज्जित्ता झाइज्जा सुसमाहिए। धम्म-सुक्काइं झाणाइं झाणं तं तु बुहा वए ॥ ३५ ॥

व्याख्या—ऋतं दुःखं, ऋते भवमार्तं, रोदयत्यपरानिति रौद्रो हिंसाऽऽदिपरिणत आत्मैव तस्येदं कर्म रौद्रं, आर्तं च रौद्रं चार्त-रौद्रे 'प्राकृतत्वाद् बहुत्वं' वर्जयित्वा ध्यायेत् सुसमाहितः। किम्? इत्याह—धर्मः क्षान्त्यादिदशलक्षणस्तस्मादनपेतं धर्म्यं, शुक्लं शुचि निर्मलं मिथ्यात्वादिमलविलयनात् यद्वा शुगिति दुःखमष्टप्रकारं कर्म ततः शुचं क्लम-

* आचार्योपाध्याये स्थविरे तपस्वि-ग्लान-शैक्षाणाम्। साधर्मिक-कुल-गण-सङ्घसङ्गतं तदिह कर्तव्यम् ॥ १ ॥

यति निरस्यतीति शुक्कम् 'अनयोर्द्वन्द्व.' ततो धर्म्य-शुक्ले ध्याने स्थिराध्यवसानरूपे। उक्त च-'जं थिरमज्झवसाण त झाण ज चल तय चित्त'ति[1]। ध्यान ध्यानाख्य तत् तप 'तुरेवार्थे' तदेव वुधा. 'वए'त्ति वदन्ति 'प्राकृतत्वादेकवचनम्' ॥३५॥

व्युत्सर्गमाह—

**सयणासण ठाणे वा जे उ भिक्खू न वावरे। कायस्स विउस्सग्गो छट्ठो सो परिकित्तिओ ॥ ३६ ॥**

व्याख्या-शयनं स्वाप., आसनमुपवेशनम् 'सूत्रत्वादुभयत्र सुपो लुक्' स्थाने ऊर्ध्वस्थाने 'यथाशक्ति स्थित इति गम्यम्, वा विकल्पे' यस्तु भिक्षुर्न 'वावरे'त्ति न व्याप्रियते न चलनादिक्रिया कुरुते। 'यत्-तदोर्नित्याभिसम्बन्धात्' तस्य भिक्षो' कायस्य व्युत्सर्ग परित्यागो य षष्ठं तत् 'प्रक्रमादभ्यन्तरं तप.' परिकीर्तितमर्हदादिभिरुपदिष्टम् 'शेप-व्युत्सर्गोपलक्षणमिद' तस्यानेकविधत्वात्। उक्तं च—

"दंव्वे भावे य तहा दुविह वुस्सग्गो चउव्विहो दव्वे। गण-देहोवहि-भत्ते भावे कोहाइचाउ त्ति"[2] ॥ १ ॥ ३६ ॥

अथाध्ययनार्थमुपसंहरन्नस्यैव फलमाह—

**एय तवं तु दुविहं जे सम्म आयरे मुणी। से खिप्पं सव्वसंसारा विप्पमुच्चइ पंडिए॥३७॥ त्ति वेमि ॥**

१ यत् स्थिरमध्यवसान तद् ध्यान यचल तद् चित्तमिति।

२ द्रव्ये भावे च तथा द्विविधो व्युत्सर्गश्चतुर्विधो द्रव्ये। गण-देहोपधि-भक्ते भावे क्रोधादित्याग इति ॥ १ ॥

व्याख्या–एतदनन्तरोक्तस्वरूपं तपो द्विविधमपि यः सम्यगाचरेदासेवेत मुनिः स क्षिप्रं शीघ्रं संसाराच्चतुर्गतिरूपाद् विप्रमुच्यते पृथग् भवति पण्डितः । अत्र कालत्रयेऽपि तुल्यमाहात्म्यत्वादस्यैतत्क्षेत्रापेक्षया वर्तमानतेति । अत्रार्थे दृष्टान्तो यथा—

प्रभुः कयङ्गलापुर्यां चैत्ये छत्रपलाशके । श्रीवीरः समवासार्षीत् सुर-साधुपुरस्कृतः ॥ १ ॥
समस्तारिस्तदभ्यासे समस्तास्तोकवस्तुभूः । समस्ति पृथ्वं श्रावस्ती समस्ति स्वस्तिशस्तिका ॥ २ ॥
गर्दभाल्यन्तिपत् तत्र परिव्राट् स्कन्दकोऽभवत् । कात्यायनसगोत्रीयो वेद–स्मृति–पुराणवित् ॥ ३ ॥
तत्रान्यदा तमप्राक्षीद् वीरशिष्यापिपिङ्गलः । भोः स्कन्दक ! मम प्रश्नस्योत्तरं वद पण्डित ? ॥ ४ ॥
किं सान्तोऽनन्तो वा लोको जीवश्च सिद्धिरथ सिद्धः । केन मरणेन जीवाः संसारे संसरन्ति तथा ? ॥ ५ ॥
ततः सम्यगजानानस्तमर्थं स्कन्दकोऽजनि । तूष्णीको द्विस्त्रिरप्येवं पृष्टस्तस्थौ तथैव सः ॥ ६ ॥
श्रीवीरं वन्दितुं लोकं यान्तं दृष्ट्वा प्रचेलिवान् । स्कन्दकोऽपि स्वसन्देहं प्रष्टुं द्रुतमुपप्रभु ॥ ७ ॥
स्वामी तत् पिङ्गलप्रश्नं स्कन्दकाज्ञानवार्तिकम् । गौतमं प्राह सोऽथागादभ्यगात् तं च गौतमः ॥ ८ ॥
पृष्टे तत् पिङ्गलप्रश्नस्वरूपे गौतमेन सः । विस्मितः स्कन्दकः प्रोचे ज्ञातं गौतम ! तत्कथम् ? ॥ ९ ॥
गौतमोऽप्यूचिवान् जाने सर्वविन्मद्गुरोर्मुखात् । ततः सर्वज्ञनिर्णीतेः श्रीवीरं स्कन्दकोऽनमत् ॥ १० ॥
स हृष्टः प्राञ्जलिः प्राहादिश निःशंसयान् विभो ! । पिङ्गलप्रश्नितानर्थान् प्रभुरादिष्टवानिति ॥ ११ ॥

तथाहि—"खंदया ! चत्तारि वि लोयाइअ दव्वओ एगदव्वत्तणओ स अंते। खित्तओ ण लोए असंखेज्जजोयणकोडाकोडीप्पमाणे, जीवे असखेज्जपएसिए असखिज्जपएसोगाढे, सिद्धी पणतालीस जोयणसयसहस्साइं आयामविक्खंभेण, सिद्धे असखेज्जपएसिए असंखेज्जपएसोगाढे अउ चउरो वि स अंते । कालओ कालत्तयवत्तिण उ चत्तारि वि अणंते । भावओ अणंतणाणाइपज्जवत्तणओ चत्तारि वि अणते । मरणे वि खंदया ! दुविहे पन्नत्ते । तं जहा—बालमरणे पडियमरणे य । तत्थ ण बालमरणेणं मरमाणे जीवे अणतेहि नेरइय—तिरियभवग्गहणेहिं अप्पाण सजोएइ ससारमणुपरियट्टइ । पडियमरणेणं मरमाणे जीवे अणतेहि नेरइय—तिरियभवग्गहणेहि अप्पाणं विसंजोएइ संसारं वीईवयइ" ॥

---

१ स्कन्दक ! चत्वारोऽपि लोकादिका द्रव्यत एकद्रव्यत्वात् सान्ता । क्षेत्रतो लोकोऽसङ्ख्येययोजनकोटाकोटिप्रमाणः । जीवोऽसङ्ख्येयप्रदेशिकोऽसङ्ख्येयप्रदेशावगाढ. । सिद्धिः पञ्चचत्वारिंशद् योजनशतसहस्राणि आयामविष्कम्भेन । सिद्धोऽसङ्ख्येयप्रदेशिकोऽसङ्ख्येयप्रदेशावगाढोऽतश्चत्वारोऽपि सान्ता । कालत कालत्रयवर्तिनस्तु चत्वारोऽप्यनन्ताः । भावतोऽनन्तज्ञानादिपर्यवत्वाच्चत्वारोऽप्यनन्ताः । मरणे अपि स्कन्दक ! द्विविधे प्रज्ञप्ते । तद् यथा—बालमरण पण्डितमरण च । तत्र खलु बालमरणेन म्रियमाणो जीवोऽनन्तैर्नैरयिक—तिर्यग्भवग्रहणैरात्मान संयोजयति ससारमनुपरिवर्तते । पण्डितमरणेन म्रियमाणो जीवोऽनन्तैर्नैरयिक—तिर्यग्भवग्रहणैरात्मान विसंयोजयति ससार व्यतिव्रजति ॥

ततो भवभयोद्विग्नं संविग्नं शुद्धमानसम् । स्कन्दकं भगवान् धर्मोपदेशं पुनरब्रवीत् ॥ १२ ॥
यथा कश्चिद् विपश्चिद् भो ! गृहे लग्ने प्रदीपने । बहिस्तात् सारभाण्डानि निष्काशयति तत्क्षणात् ॥ १३ ॥
आदीप्ते च प्रदीप्ते च जरया मृत्युना तथा । लोके सारत्वमात्मानं निष्काशय महामते ! ॥ १४ ॥
इति श्रुत्वा प्रबुद्धः स प्रव्रज्य स्कन्दकः सुधीः । अधीत्यैकादशाङ्गेषु शिक्षाकर्मसु कर्मठः ॥ १५ ॥
षष्ठाष्टम–विकृष्टार्धमास–मासादिकं तथा । वर्धमान–गुणरत्न–संवत्सरतपस्तथा ॥ १६ ॥
सिंहनिष्क्रीडितं भिक्षुप्रतिमाऽऽद्यं सुदुस्तपम् । तप्यमानस्तपश्चात्मनीनो व्रतमपालयत् ॥१७॥ (त्रिभिः कुलकम्)
एवं तपोभिर्विविधैरात्मानं भावयन् मुनिः । सत्त्ववान् शोषिताङ्गोऽभूत् स कृशो धमनीसमः ॥ १८ ॥
ततः स स्वाम्यनुज्ञातः संलिख्य विधिना वपुः । समाधिमाननशनं पादपोपगमं व्यधात् ॥ १९ ॥
इत्थं स स्कन्दकः साधुर्व्रतं द्वादशवत्सरी । पालयित्वाऽच्युते कल्पे देवत्वेनोदपद्यत ॥ २० ॥
तत्र दिव्यसुखं भुक्त्वा ततश्च्युत्वा स सेत्स्यति । महाविदेहे प्रव्रज्य भविताऽनन्तसौख्यभाक् ॥ २१ ॥
इति तपसो माहात्म्यं मत्वा मुनयो महानुभावा भोः ! । यूयमपीह यतध्वं भवत यथा सातिनस्तद्वत् ॥२२॥

॥ इति तपःफले स्कन्दकमुनिकथा ॥

इति ब्रवीमीति प्राग्वत् ॥ ३७ ॥ ग्रं० २६६ अ० ६ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थ-
सिद्धौ श्रीउत्तराध्ययनटीकायां तपोमार्गगत्याख्यं त्रिंशत्तममध्ययनं समाप्तम् ॥ ३० ॥

## अथैकत्रिंशत्तमं चरणविधिनामकमध्ययनम् ।

पूर्वाध्ययने तप उक्तम्, तच्च चरणवत एव स्यादिति चरणविध्यभिधायकमेकत्रिंशत्तममध्ययनमारभ्यते ।

चरणविहिं पवक्खामि जीवस्स उ सुहावहं । जं चरित्ता बहू जीवा तिन्ना संसारसागरं ॥ १ ॥

व्याख्या–चरणविधिमागमोक्तं प्रवक्ष्यामि जीवस्य 'तुरेवार्थे' सुखावहमेव शुभावहमेव वा, यं चरित्वाऽऽसेव्य बहवो जीवास्तीर्णाः संसारसागरं मुक्त्यवाप्त्येति भावः ॥ १ ॥

यथाप्रतिज्ञातमाह—

एगओ विरइं कुज्जा एगओ य पवत्तणं । असंजमे नियत्तिं च संजमे य पवत्तणं ॥ २ ॥

व्याख्या–एकत एकस्मात् स्थानाद् विरतिं कुर्यात् । एकत एकस्मिंश्च प्रवर्तनं च 'कुर्यादिति योगः' । एतदेव विशेषेणाह–असंयमाद् हिंसाऽऽदिरूपात् 'पञ्चम्यर्थे सप्तमी' निवृत्तिं त्यागरूपां संयमे च प्रवर्तनं कुर्यात् 'चशब्दः समुच्चये' ॥ २ ॥

तथा—

राग–दोसा य दो पावे पावकम्मपवत्तणे । जे भिक्खू रुंभई निच्चं से न अच्छइ मंडले ॥ ३ ॥

व्याख्या-राग-द्वेपो 'च पूरणे' द्वौ द्विसङ्ख्यौ पापौ कोपादिपापप्रकृतिरूपत्वात्, पापकर्माणि मिथ्यात्वादीनि प्रवर्तयत इति पापकर्मप्रवर्तकौ यो भिक्षू रुणद्धि उदयस, कथञ्चिदुदितयोर्वा प्रसरस्य निराकरणेन तिरस्कुरुते नित्यं स नास्ते न तिष्ठति मण्डले चतुरन्तसंसारे इति वृद्धव्याख्या ॥ ३ ॥

दण्डाणं गारवाणं च सल्लाणं च तियं तियं । जे भिक्खू चयई निच्चं से न अच्छइ मंडले ॥ ४ ॥

व्याख्या-दण्ड्यते चारित्रैश्वर्याद्यपहारतोऽसारीक्रियते एभिरात्मेति दण्डाः दुष्प्रणिहितमानसादिरूपा मनोदण्डादयस्तेषां त्रिकं मनोदण्ड-वाग्दण्ड-कायदण्डरूपं तथा गुरुर्लोभाद्याध्मातचित्त आत्मा तद्भावस्तस्य चैतान्यध्यवसानानि गौरवाणि तेषां त्रिकं ऋद्धिगौरव-रसगौरव-सातागौरवात्मकं तथा शल्यते वाध्यते जन्तुरेभिरिति शल्यानि तेषां त्रिकं माया-निदान-मिथ्यादर्शनशल्यरूपं 'चशब्दौ समुच्चये' यो भिक्षुस्त्यजति वर्जयति नित्यं स न तिष्ठति मण्डले ॥ ४ ॥

दिव्वे य उवसग्गे य तहा तेरिच्छ-माणुसे । जे भिक्खू सहई सम्मं से न अच्छइ मंडले ॥ ५ ॥

व्याख्या-दिव्यान् देवकृतान् तैरश्चान् पश्वादिकृतान् मानुष्यकान् मनुष्यकृतांश्चोपसर्गान् 'चशब्दादात्मसंवेदनीयांश्च' यो भिक्षुः सहते स न तिष्ठति मण्डले इति शेषवत् ॥ ५ ॥

विगहा-कसाय-सन्नाणं झाणाणं च दुयं तहा । जे भिक्खू वज्जई निच्चं से न अच्छइ मंडले ॥ ६ ॥

व्याख्या-विरुद्धा विरूपा वा कथा विकथा स्त्री-भक्त-देश-राजभेदतश्चतुर्धा । कषायाः क्रोधादयश्चत्वारः । संज्ञा आहार-भय-मैथुन-परिग्रहाख्याः 'एषां द्वन्द्वे, प्रत्येकं चतुष्कमिति शेषः' 'झाणाणं च'त्ति प्राकृतत्वाद् ध्यानयोश्च द्विकमार्त-रौद्ररूपं यो भिक्षुर्वर्जयति स इत्यादि प्राग्वत् । यद्यपि ध्यानस्य चातुर्विध्येऽपि वर्जनीयप्रस्तावादत्र द्वयोरभिधानम् ॥ ६ ॥

वएसु इंदियत्थेसु समिईसु किरियासु य । जे भिक्खू जयई निच्चं से न अच्छइ मंडले ॥ ७ ॥

व्याख्या-व्रतेषु प्राणातिपातविरत्यादिषु पञ्चसु इन्द्रियार्थेषु शब्दादिषु, समितिष्वीर्यादिषु, क्रियासु च कायिकी-आधिकरणिकी-प्राद्वेषिकी-पारितापनिकी-प्राणातिपातरूपासु यो भिक्षुर्यतते यत्नं कुरुते स न तिष्ठति मण्डले । तत्र व्रत-समितिषु यथावत् परिपालनात्, इन्द्रियार्थेषु माध्यस्थ्यकरणात्, क्रियासु परिहारतश्च ॥ ७ ॥

लेसासु छसु काएसु छक्के आहारकारणे । जे भिक्खू जयई निच्चं से न अच्छइ मंडले ॥ ८ ॥

व्याख्या-लेश्यासु वक्ष्यमाणासु षट्सु कायेषु पृथिव्यादिषु वक्ष्यमाणेष्वेव । षट्के परिमाणे आहारकारणे वेदनादौ प्रागुक्तरूपे यो भिक्षुर्यतते यथायोगं निरोधोत्पादन-रक्षाऽनुरोधविधानेन यत्नं कुरुते ॥ ८ ॥

पिंडुग्गहपडिमासु भयट्ठाणेसु सत्तसु । जे भिक्खू जयई निच्च से न अच्छइ मंडले ॥ ९ ॥

व्याख्या—पिण्डावग्रहप्रतिमासु आहारग्रहणविषयाभिग्रहरूपासु संसृष्टादिषु पूर्वाध्ययनोक्तासु 'सप्तस्वित्यत्रापि सम्बध्यते' । तथा भयस्थानेष्विहलोकादिषु सप्तसु यो भिक्षुर्यतते एकत्र पालनातोऽन्यत्र भयाकरणतः ॥ ९ ॥

मएसु बम्भगुत्तीसु भिक्खुधम्मंमि दसविहे । जे भिक्खू जयई निच्च से न अच्छइ मंडले ॥ १० ॥

व्याख्या—मदा जातिमदादयोऽष्टौ तेषु 'प्रसिद्धत्वादिहान्यत्र सङ्ख्याऽनभिधानम्' । ब्रह्मगुप्तिषु वसत्यादिनवसु । भिक्षुधर्मे दशविधक्षान्त्यादिभेदे यो भिक्षुर्यतते यथावत् परिहारासेवन—परिपालनादिभि. ॥ १० ॥

उवासगाण पडिमासु भिक्खूण पडिमासु य । जे भिक्खू जयई निच्चं से न अच्छइ मंडले ॥ ११ ॥

व्याख्या—उपासकानां श्रावकाणां प्रतिमास्वभिग्रहविशेषास्वेकादशसु दर्शनादिषु । यदुक्तम्—

"*दसणं—वयं—सामाइय—पोसेह—पडिमा—अबंभ—सचित्ते' । आरंभ—पेसे—उद्दिट्ठवज्जए समणभूए य" ॥ १ ॥

तथा भिक्षूणा साधूनां प्रतिमासु च मासिक्यादिषु द्वादशसु । यदाह—

---

* दर्शन—व्रत—सामायिक—पोषध—प्रतिमा—ऽब्रह्म—सचित्त । आरम्भ—प्रेष्योद्दिष्टवर्जक श्रमणभूतश्च ॥ १ ॥

"[1]मासाई सत्तंता पढमा बिइ तइय सत्तराइ–दिणा । अहराइ एगराई भिक्खुपडिमाण बारसगं" ॥ १ ॥

यो भिक्षुर्यतते यथावत् परिज्ञानोपदेश–पालनादिभिः ॥ ११ ॥

किरियासु भूयगामेसु परमाहम्मिएसु य । जे भिक्खू जयई निच्चं से न अच्छइ मंडले ॥ १२ ॥

व्याख्या–क्रियाः कर्मबन्धनिबन्धनभूताश्चेष्टास्ताश्चार्थानर्थादिभेदतस्त्रयोदशसु । यदागमः—

"[2]अट्ठाणट्ठा-हिंसा-ऽकम्हा दिट्ठी य मोस-ऽदिण्णे य । अज्झप्प–माण-ऽमित्ते माया–लोभेरियावहिया" ॥ १ ॥

भूताः प्राणिनस्तेषां ग्रामाः सङ्घाता भूतग्रामाः तेष्वेकेन्द्रियसूक्ष्मेतरादिभेदतश्चतुर्दशसु । यदुक्तम्—

"[3]एगिंदिय सुहुमियरा सन्नियरपणिंदिया य सबितिचऊ । अपज्जत्ता पज्जत्ता कम्मेण चउदस जियट्ठाणा" ॥ १ ॥

तथा परमाश्च ते सर्वाधार्मिकप्रधानतया अधार्मिकाश्च परमाधार्मिका अतिसंक्लिष्टचित्ता अम्बादयः पञ्चदश । उक्तं च—

१ मासादयः सप्तान्ताः प्रथमा द्वितीया तृतीया सप्तरात्रि–दिनाः । अहोरात्रिरेकरात्रिर्भिक्षुप्रतिमानां द्वादशकम् ॥ १ ॥

२ अर्थानर्थ–हिंसा-ऽकस्माद् दृष्टिश्च मृषा-ऽदत्तं च । अध्यात्म–मानामित्री माया–लोभेर्यापथिका ॥ १ ॥

३ एकेन्द्रियाः सूक्ष्मेतराः संज्ञीतरपञ्चेन्द्रियाश्च सद्वि–त्रि–चतुरिन्द्रियाः । अपर्याप्ताः पर्याप्ताः क्रमेण चतुर्दश जीवस्थानानि ॥ १ ॥

"*अंबे अंबरिसी चेव सामे सबले त्ति आवरे । रुद्दोवरुद्दकाले य महाकाले त्ति आवरे ॥ १ ॥
असिपत्ते धणू कुम्भे" वालू वेयरणी इय । खरस्सरे महाघोसे एए पण्णरसाहिया" ॥ २ ॥

तेषु यो भिक्षुर्यतते यथाक्रमं परिहार–रक्षा–परिज्ञानादिभि. ॥ १२ ॥

गाहासोलसएहिं तहा असंजममि य । जे भिक्खू जयई निच्च से न अच्छइ मंडले ॥ १३ ॥

व्याख्या–गीयते शब्द्यते स्व–परसमयस्वरूपमस्यामिति गाथा सूत्रकृताङ्गस्य षोडशमध्ययनम् । ततश्च गाथाऽध्ययनं षोडशमेषामिति गाथाषोडशकानि 'सुब्व्यत्ययात्' तेषु सूत्रकृताध्ययनेषु षोडशसु । उक्त हि—

"‡समओ वेयालीयं उवसग्गपरिण्ण थीपरिण्णा य । निरयविभत्ती वीरत्थओ य कुसीलाण परिभासा ॥ १ ॥
वीरियं धम्म समाही मग्ग समोसरण अहतह गंथो । जमइय तह गाहा सोलसमं होइ अज्झयणं" ॥ २ ॥

तथाऽसयम. सप्तदशभेद पृथिव्यादिविषय· । यदुक्तम्—

---

* अम्बोऽम्बर्षिश्चैव श्यामः शबल इत्यपरः । रुद्र उपरुद्र कालश्च महाकाल इति चापर· ॥ १ ॥
असिपत्रो धनु कुम्भो वालुर्वैतरणिरिति । खरस्वरो महाघोष एते पञ्चदशाख्याता ॥ २ ॥

‡ समयो वैतालीय उपसर्गपरिज्ञा स्त्रीपरिज्ञा च । निरयविभक्तिर्वीरस्तवश्च कुशीलाना परिभाषा ॥ १ ॥
वीर्य–धर्म–समाधि–मार्ग–समवसरण याथातथ्य ग्रन्थ । आदानीय तथा गाथा षोडश भवत्यध्ययनम् ॥ २ ॥

"*पुढवि[1]–दग[2]–अगणि[3]–मारुय–वणप्फइ–बि[6]–ति[7]–चउ–पंणिंदि-अजीवे[10] । पेहुप्पेह[11]–पमज्जण[12][13]–परिट्ठवण[14]–मणो[15]–वई[16]–काए" ॥ १ ॥

तस्मिंश्च यो भिक्षुर्यतते एकत्र तदुक्तानुष्ठानतोऽन्यत्र तु त्यागतः ॥ १३ ॥

**बंभंमि नायज्झयणेसु ठाणेसु यऽसमाहिए । जे भिक्खू जयई निच्चं से न अच्छइ मंडले ॥ १४ ॥**

व्याख्या–ब्रह्मणि ब्रह्मचर्येऽष्टादशभेदभिन्ने—

"‡ओरालियं च दिव्वं मण–वय–काएण करणजोएणं । अणुमोयण–कारावण–करणाणट्ठारसाबंभं" ॥ १ ॥

तथा ज्ञातान्युदाहरणानि तत्प्रतिपादकान्यध्ययनानि षष्ठाङ्गोक्तान्युत्क्षिप्तज्ञातादीन्येकोनविंशतिस्तेषु । यदुक्तम्–

"†उक्खित्तणाए संघाडे अंडे कुम्मे य सेलए । [6]तुंबे य रोहिणी मल्ली मायंदी चंदिमा इय ॥ १ ॥

दावद्दए[11] उदगणाए[12] मंडुक्के[13] तेयली[14] इय । [15]नंदीफले अवरकंका[16] आइण्णे सुंसुं पुंडरीए" ॥ २ ॥

* पृथ्वी–दकाग्नि–मारुत–वनस्पति–द्वि–त्रि–चतुः–पञ्चेन्द्रियाजीवान्। प्रेक्ष्योत्प्रेक्ष्य–प्रमार्जन–परिष्ठापन–मनो–वचः–कायैः ॥१॥

‡ औदारिकं च दिव्यं मनो–वचः–कायेन करणयोगेन । अनुमोदन–कारण–करणैरष्टादशाब्रह्म ॥ १ ॥

† उत्क्षिप्तज्ञातः सङ्घाटोऽण्डः कूर्मश्च शैलकः । तुम्बश्च रोहिणी मल्ली माकन्दी चन्द्रमाश्च ॥ १ ॥

दावद्रवोदकज्ञातो मण्डूकः तेतलिश्च । नन्दीफलोऽपरकङ्का अश्वः सुंसमा पुण्डरीकः ॥ २ ॥

तथा स्थानेष्वाश्रयेषु कारणेष्विति यावत्। कस्य ? इत्याह–समाधिर्ज्ञानादिषु चित्तैकाग्र्यं, न समाधिरसमाधिस्तस्य तेषु समवायाङ्गोक्तेषु विंशतावसमाधिस्थानेषु । तदुक्तम्—"वीस असमाहिठाणा पन्नत्ता । त जहा–दवदवचारी अपमज्जचारी दुप्पमज्जियचारी अईरित्तसेज्जासणिए रायणियपरीहासी थेरोवघाती भूतोवघाती सजलणे कोहणे पिट्ठिमसिए अभिक्खण त उहारइत्ता भवति नवाण अहिगरणाण अणुप्पन्नाण उप्पाइत्ता भवति । पोराणाण अहिगरणाण खामियविओसवियाण पुणोदीरित्ता भवति । ससरक्खपाणिपाए अकालसज्झायकारए सद्दकरे कलहकरे झझकरे सूरप्पमाणभोई एसणाए असमिए आवि भवति" । एतेषु यो भिक्षुर्यतते रक्षा–परिज्ञान–परिहारादिभिः ॥ १४ ॥

एगवीसा य सवलेसु वावीसाए परिसहे । जे भिक्खू जयई निच्चं से न अच्छई मंडले ॥ १५ ॥

---

१ विंशतिरसमाधिस्थानानि प्रज्ञप्तानि । तद्यथा—द्रुतद्रुतचारी अप्रमार्ज्यचारी दुष्प्रमार्ज्यचारी अतिरिक्तशय्यासनिको रात्निकपरिभाषी स्थविरोपघाती भूतोपघाती सज्वलन क्रोधनः पृष्ठमासिकोऽभीक्ष्णमवधारयिता भवति । नवानामधिकरणानामनुत्पन्नानामुत्पादयिता भवति । पुराणानामधिकरणाना क्षामितव्युत्सृष्टाना पुनरुदीरयिता भवति । सरजस्कपाणि–पादः । अकालस्वाध्यायकारकः शब्दकरः कलहकरो झञ्झाकरः सूर्यप्रमाणभोजी एषणायामसमितश्चापि भवति ।

व्याख्या—एकविंशतौ शवलयन्ति कर्बुरीकुर्वन्ति चारित्रमिति शवलाः क्रियाविशेषास्तेषु हस्तकर्मादिष्वेकविंशतौ। तथा चोक्तमागमे—

"तं जह उ–हत्थकम्मं कुव्वंते १ मेहुणं च सेवंते २। राइं च भुंजमाणे ३ आहाकम्मं च भुंजंते ४ ॥ १ ॥
तत्तो य रायपिंडं ५ कीयं ६ पामिच्चं ७ अभिहडं ८ छिज्जं ९। भुंजंते सबले ऊ पचक्खिय भिक्ख भुंजंते १० ॥ २ ॥
छम्मासब्भितरओ गणागणं संकमं करंते य ११। मासब्भितर तिण्णि य दगलेवा ऊ करेमाणे ॥ ३ ॥
मासब्भितरओ चिय मायाठाणाइं तिन्नि कुणमाणे १२। पाणाइवाय उट्टिं कुव्वंते १३ मुसं वयंते य १४ ॥ ४ ॥
गिण्हंते य अदिन्नं १५ आउट्टिं तह अणंतरहियाए। पुढवीए ठाण-सेज्जं निसीहियं वा वि चेएत्ति १६ ॥ ५ ॥
एवं ससिणिद्धाए ससरक्खाए चित्तमंतसिललेलू। कोलावासपइट्ठा कोलघुणा तेसि आवासे १७ ॥ ६ ॥

---

१ तद्यथा–हस्तकर्म कुर्वाणो मैथुनं च सेवमानः। रात्रौ च भुञ्जान आधाकर्म च भुञ्जानः ॥ १ ॥
ततश्च राजपिण्डं क्रीतं प्रामित्यमभ्याहृतमाच्छेद्यम्। भुञ्जानः शवल एव प्रत्याख्याय भिक्षां भुञ्जानः ॥ २ ॥
षण्मासाभ्यन्तरतो गणाद् गणं संक्रमं कुर्वंश्च। मासाभ्यन्तरे त्रींश्च दकलेपांस्तु कुर्वाणः ॥ ३ ॥
मासाभ्यन्तरत एव मायास्थानानि त्रीणि कुर्वाणः। प्राणातिपाताकुट्टिं कुर्वाणो मृषा वदंश्च ॥ ४ ॥
गृह्णंश्चादत्तमाकुट्टि तथाऽनन्तरायाम्। पृथ्व्यां स्थान–शय्यां नैषेधिकीं वाऽपि चेतयति ॥ ५ ॥
एवं सस्निग्धायां सरजस्कायां चित्तवच्छिलालेलुमत्याम्। कोलावासप्रतिष्ठायां कोलघुणास्तेषामावासे ॥ ६ ॥

सड–सपाण–सबीए जाव उ सताणए भवे तहिय । ठाणाइ चेयमाणे सबले आउट्टियाए उ १८ ॥ ७ ॥
आउट्टि मूल–कंदे पुप्फे य फले य बीय–हरिए य । भुजते सबले ऊ १९ तहेव सवच्छरस्सतो ॥ ८ ॥
दस दगलेवे कुव तह माइट्ठाणा दस य वरिसतो २० । आउट्टिय सीओदगवग्घारियहत्थमत्ते य ॥ ९ ॥
दव्वीए भायणेण व दिज्जत भत्त–पाण घित्तूण । भुजइ २१ सबलो एसो इगवीसो होइ णायव्वो" ॥ १० ॥

तथा द्वाविंशतौ क्षुदादिपरीषहेषु यो भिक्षुर्यतते परिहार–सहनादिभिः ॥ १५ ॥

तेवीसइ सूयगडे रूवाहिएसु सुरेसु य । जे भिक्खू जयई निच्च से न अच्छइ मंडले ॥ १६ ॥

व्याख्या–त्रयोविंशतौ सूत्रकृताध्ययनेषु तत्र पुण्डरीकादीनि सप्त, समयादीनि च पूर्वोक्तानि षोडशेति मिलितास्त्रयोविंशतिस्तस्मिन् । उक्त हि—

---

१ साण्ड–सप्राण–सबीज यावत् तु सन्तानक भवेत् तत्र । स्थानादि कुर्वन् शबल आकुट्या तु ॥ ७ ॥
आकुट्या मूलानि कन्दान् पुष्पाणि च फलानि च बीजानि हरितानि च । भुञ्जान शबलस्तु तथैव सवत्सरस्यान्त ॥ ८ ॥
दश दकलेपान् कुर्वन् तथा मातृस्थानानि दश च वर्षान्तः । आकुट्या शीतोदकक्लिन्नहस्तमात्रश्च ॥ ९ ॥
दर्व्या भाजनेन वा दीयमान भक्त–पान गृहीत्वा । भुनक्ति शबल एष एकविंशतितमो भवति ज्ञातव्यः ॥ १० ॥

"*पुंडरीय किरियठाणं आहारपरिण्ण य पच्चक्खाणकिरिया य । अणगारं अद्दं नालंदं सोलसाइं च तेवीसं" ॥ १ ॥

तथा रूपमेकस्तेनाधिकाः 'प्रक्रमात् सूत्रकृताङ्गाध्ययनेभ्यः' रूपाधिकाश्चतुर्विंशतिरित्यर्थस्तेपु केषु ? इत्याह–सुरेषु भवनपत्यादिषु यदि वा देवेष्वर्हत्सु वृषभादिषुश्चतुर्विंशतौ । यदुक्तम्—

"भवण–वण–जोइ–वेमाणिया य दस–अट्ठ–पंच–एगविहा । इइ चउवीसं देवा केई पुण बेंति अरहंता" ॥ १ ॥

तेषु यो भिक्षुर्यतते यथावत्प्ररूपणाऽऽदिना स न तिष्ठति मण्डले चतुरन्तसंसारे ॥ १६ ॥

पणवीस भावणाहिं उद्देसेसु दसाइणं । जे भिक्खू जयई निच्चं से न अच्छइ मंडले ॥ १७ ॥

व्याख्या–पञ्चविंशतौ 'सुव्व्यत्ययाद्' भावनासु महाव्रतविषयेर्यासमित्यादियत्नरूपासु । ताश्चैवं श्रुते—"पंणवीसं भावणाओ पन्नत्ताओ । तं जहा–इरियासमिति १ मणगुत्ती २ वयगुत्ती ३ आलोइऊण पाण–भोयणं ४ आयाणभंडमत्तनिक्खेवणासमिई ५ पढमवए । अणुवीइभासणया १ कोहविवेगे २ लोहविवेगे ३ भयविवेगे ४ हासविवेगे ५ बिइयवए । उग्गहअणुण्णवणया १

---

* पौण्डरीकं क्रियास्थानमाहारपरिज्ञा च प्रत्याख्यानक्रिया च । अनगार आर्द्रो नालन्दः षोडश च त्रयोविंशतिः ॥ १ ॥

२ भवन–वन–ज्योतिर्वैमानिकाश्च दशाष्ट–पञ्चैकविधाः । इति चतुर्विंशतिर्देवाः केचित् पुनर्ब्रुवन्त्यर्हन्तः ॥ १ ॥

३ पञ्चविंशतिर्भावनाः प्रज्ञप्ताः । तद्यथा–ईर्यासमितिः १ मनोगुप्तिः २ वचोगुप्तिः ३ आलोक्य पान–भोजनम् ४ आदानभाण्डमात्रनिक्षेपणासमितिः ५ प्रथमव्रते । अनुवीचिभाषणता १ क्रोधविवेकः २ लोभविवेकः ३ भयविवेकः ४ हास्यविवेकः ५ द्वितीयव्रते ।

उग्गहसीमजायणया २ सयमेव उग्गहअणुगेण्हणया ३ साहमियउग्गहमणुण्णविय परिभुजणया ४ साहारणभत्त-पाण अणुण्णविय परिभुजणया ५ तईयवए । इत्थि-पसु-पडगससत्तसयणासणवज्जणया १ इत्थिकहविवज्जणया २ इत्थीण इदियाण आलोयणवज्जणया ३ पुव्वरय-पुव्वकीलियाण विसयाण असरणया ४ पणीयाहारविवज्जणया ५ चउत्थवए । सोइदियरागोवरमे १ एव पचवि इदिया ५ पचमवए" ।

एवं पञ्चाना व्रताना पञ्च पञ्च मीलने पञ्चविशति । तथोद्देशेष्वित्युपलक्षणत्वादुद्देशकालेषु 'पञ्चविशतिसङ्ख्येष्विति शेष.' दशादीना दशाश्रुतस्कन्धकल्पव्यवहाराणाम् । उक्त हि—

"दस उद्देसणकाला दसाण कप्पस्स होंति छचेव । दस चेव य ववहारस्स होंति सव्वे वि छव्वीस" ॥ १ ॥

तेषु यो भिक्षुर्यतते सर्वदा परिभावना-प्ररूपणा-कालग्रहणादिभि· ॥ १७ ॥

अणगारगुणेहि च पकप्पंमि तहेव य । जे भिक्खू जयई निच्च से न अच्छइ मंडले ॥ १८ ॥

व्याख्या—अनगार· साधुस्तस्य गुणा व्रतषट्केन्द्रियनिग्रहादय सप्तविशति· 'सुव्यत्ययात्' तेषु चोक्तं हि—

---

अवग्रहानुज्ञापनता १ अवग्रहसीमयाचनता २ स्वयमेवावग्रहानुग्रहणता ३ साधर्मिकावग्रहमनुज्ञाप्य परिभुञ्जनता ४ साधारणभक्तपानमनुज्ञाप्य परिभुञ्जनता ५ तृतीयव्रते। स्त्री-पशु-पण्डकससक्तशयनासनवर्जनता१ स्त्रीकथाविवर्जनता २ स्त्रीणामिन्द्रियाणामालोकनवर्जनता ३ पूर्वरत-पूर्वक्रीडिताना विषयाणामस्मरणता ४ प्रणीताहारविवर्जनता ५ चतुर्थव्रते। श्रोत्रेन्द्रियरागोपरम १ एव पञ्चापीन्द्रियाणि ५ पञ्चमव्रते ॥

१ दश उद्देशनकाला दशाना कल्पस्य भवन्ति षडेव । दश चैव च व्यवहारस्य भवन्ति सर्वेऽपि षड्विंशति ॥ १ ॥

"वेयछक्क६मिंदियाणं च निग्गहो ११ भावकरणसच्चं च १३ । खमया १४ विरागया वि य १५ मणमाईणं निरोहो य१८॥१॥
कायाण छक्क २४ जोगंमि जत्तया २५ वेयणाहियासणया २६ । तह मारणंतियहियासणया २७ एएऽणगारगुणा" ॥ २ ॥

प्रकल्पो यतिव्यवहारोऽर्थादाचाराङ्गमेव शस्त्रपरिज्ञाद्यष्टाविंशत्यध्ययनात्मकं तस्मिन् । उक्तं च—

"सत्थपरिण्णा १ लोगविजओ २ य सीओसणिसम्मत्तं ४ । आवंती–धुव–विमोहो ७ उवहाणसुयं ८ महपरिण्णा ९ ॥१॥
पिंडेसण–सिज्जेरिया–भासा–वत्थेसणा १४ य पाएसणा १५ । उग्गहपडिमा१६सत्तिक्कसत्तया २३ भावण–विमुत्ती २५॥२॥
उग्घायमणुग्घायं २७ आरोवण २८ तिविहमो निसीहं तु । इइ अट्ठावीसविहो आयारपगप्पनामो उ" ॥ ३ ॥

तेषु तथैव यथावदासेवना–प्ररूपणादिना प्रकारेण यो भिक्षुर्यतते ॥ १८ ॥

**पावसुयपसंगेसु मोहठाणेसु चेव य । जे भिक्खू जयई निच्चं से न अच्छइ मंडले ॥ १९ ॥**

---

१ व्रतषट्कमिन्द्रियाणां च निग्रहो भाव–करणसत्यं च । क्षमता विरागताऽपि च मन आदीनां निरोधश्च ॥ १ ॥
कायानां षट्कं योगे युक्तता वेदनाऽध्यासनता । तथा मारणान्तिकाध्यासनता एतेऽनगारगुणाः ॥ २ ॥

२ शस्त्रपरिज्ञा लोकविजयश्च शीतोष्णीय–सम्यक्त्वम् । आवन्ती–धूत–विमोक्ष उपधानश्रुतं महापरिज्ञा ॥ १ ॥
पिण्डैषणा–शय्येर्या–भाषा–वस्त्रैषणा च पात्रैषणा । अवग्रहप्रतिमा सप्तैकसप्तिका भावना–विमुक्तिः ॥ २ ॥
उद्घातमनुद्घातमारोपणं त्रिविधं निशीथं तु । इत्यष्टाविंशतिविध आचारप्रकल्पनामा तु ॥ ३ ॥

व्याख्या—पापोपादानानि यानि श्रुतानि तेषु प्रसङ्गास्तथाविधासक्तिरूपा' पापश्रुतप्रसङ्गास्ते चाष्टाङ्गनिमित्तसूत्रादिविषयभेदादेकोनत्रिंशत् तेषु । यदागम —

"अट्ठ निमित्तगाइं दिव्वुप्पायतलिक्ख-भोम च । अंग सर-लक्खण-वंजणं च तिविहं पुणेक्केक्क ॥ १ ॥

सुत्त वित्ती तह वत्तिय च पावसुय अउणतीसविहं । गंधव्व-नट्ट-वत्थु आउ धणुवेयसंजुत्त" ॥ २ ॥

मोहो मोहनीयं कर्म तिष्ठति निमित्ततया एतेष्विति मोहस्थानानि वारिमध्यमग्नत्रसप्राणमारणादीनि त्रिंशत् । उक्तं हि—

"वारिमज्झे वगाहित्ता तसे पाणे य हिंसई १ । छाएउ मुहं हत्थेण अंतो नाय गलेरव २ ॥ १ ॥

सीसावेढेण वेढित्ता संकिलेसेण मारए ३ । सीसम्मि जे य आहतु दुहमारेण हिंसए ४ ॥ २ ॥

बहुजणस्स नेयार दीवं ताणं च पाणिण ५ । साहारणे गिलाणम्मि पहूकिच्चं न कुव्वति ६ ॥ ३ ॥

---

१ अष्ट निमित्ताङ्गानि दिव्यौत्पातान्तरिक्ष-भौम च । आङ्ग स्वर-लक्षण-व्यञ्जन च त्रिविध पुनरेकैकम् ॥ १ ॥

सूत्र वृत्तिस्तथा वार्तिक च पापश्रुतमेकोनत्रिंशद्विधम् । गान्धर्व-नाट्य-वास्तु, आयुर्धनुर्वेदसयुक्तम् ॥ २ ॥

२ वारिमध्येऽवगाह्य त्रसान् प्राणाश्च हिनस्ति । छादयित्वा मुख हस्तेनान्तर्नाद गलेरवम् ॥ १ ॥

शीर्षावेष्टेन वेष्टयित्वा सक्लेशेन मारयेत् । शीर्षे यश्चाहत्य दु खमारेण हिंस्यात् ॥ २ ॥

बहुजनस्य नेतार द्वीप त्राण च प्राणिनाम् । साधारणे ग्लाने प्रभुकृत्य न कुर्वीत ॥ ३ ॥

साहुं सकम्मधम्माओ जो भंसेज्ज उवट्ठियं ७ । णेयाओयस्स मग्गस्स अवगारंमि वट्टति ८ ॥ ४ ॥
जिणाणं अणंतणाणीणं अवण्णं जो पभासए ९ । आयरिय–उवज्झाए खिसए मंदबुद्धिए १० ॥ ५ ॥
तेसिमेव य णाणीणं सम्मं नो परितप्पई ११ । पुणो पुणो अहिगरणं उप्पाए तित्थभेए य १२ ॥ ६ ॥
जाणं आहम्मिए जोए पउंजति पुणो पुणो १३ । कामे वमेत्ता पत्थेइ इहऽण्णभविएइ वा १४ ॥ ७ ॥
अभिक्खं बहुस्सुएऽहंति जे भासतेऽबहुस्सुए १५ । तहा य अतवस्सीओ जे तवस्सि त्ति हं वए १६ ॥ ८ ॥
जायतेएण बहुजणं अंतो धूमेण हिंसई १७ । अकिच्चमप्पणा काउं कयमेएण भासए १८ ॥ ९ ॥
नियडुवही–पणिहीए पलिउंचे सादिजोगजुत्ते य १९ । बेइ सव्वं मुसं वयसि २० अज्झीण झंझए सया २१ ॥ १० ॥

---

१ साधुं स्वकर्मधर्माद् यो भ्रंशयेदुपस्थितम् । न्यायोपेतस्य मार्गस्यापकारे वर्तते ॥ ४ ॥
जिनानामनन्तज्ञानिनामवज्ञां यः प्रभाषते । आचार्योपाध्यायान् खिसति मन्दबुद्धिकः ॥ ५ ॥
तेषामेव च ज्ञानिनां सम्यग् नो परितर्पयेत् । पुनः पुनरधिकरणमुत्पादयेत् तीर्थभेदांश्च ॥ ६ ॥
जानन् आधार्मिकान् योगान् प्रयुनक्ति पुनः पुनः । कामान् वान्त्वा प्रार्थयते इहान्यभविकान् वा ॥ ७ ॥
अभीक्ष्णं बहुश्रुतोऽहमिति यो भाषतेऽबहुश्रुतः । तथा चातपस्वी यस्तपस्व्यहमिति वदेत् ॥ ८ ॥
जाततेजसा बहुजनमन्तर्धूमेन हिनस्ति । अकृत्यमात्मना कृत्वा कृतमेतेन भाषते ॥ ९ ॥
निकृत्युपधि–प्रणिधिकः परिकुञ्चकः सातियोगयुक्तश्च । ब्रूते सर्वं मृषा वदस्यक्लेशं क्लेशयति सदा ॥ १० ॥

अंद्धाणमि पवेसित्ता जो धण हरति पाणिण २२ । वीसभित्ता उवाएण दारे तस्सेव लुब्भति २३ ॥ ११ ॥
अभिक्खमकुमारे उ कुमारेऽह त्ति भासए २४ । एव अवभयारी वि वभयारि त्ति भासए २५ ॥ १२ ॥
जेणेवेसरिय णीए वित्ते तस्सेव लुब्भति २६ । तप्पहावुट्ठिए वावि अतराय करेति से २७ ॥ १३ ॥
सेणावइ पसत्थार भत्तार वावि हिंसए । रट्ठस्स वावि णिगमस्स णायग सेट्ठिमेव वा २८ ॥ १४ ॥
अपस्समाणो पस्सामि अह देव त्ति वा वए २९ । अवण्णेग च देवाण ३० महामोह पकुव्वई" ॥ १५ ॥

तेषु यो भिक्षुर्यतते तत्परिहारद्वारत. ॥ १९ ॥

सिद्धाइगुणजोगेसु तित्तीसासायणासु य । जे भिक्खू जयई सम्मं से न अच्छई मंडले ॥ २० ॥

---

१ अध्वनि प्रवेश्य यो धन हरति प्राणिनाम् । विश्रम्भोपायेन दारेषु तस्यैव लुभ्यति ॥ ११ ॥
अभीक्ष्णमकुमारस्तु कुमारोऽहमिति भाषते । एवमब्रह्मचार्यपि ब्रह्मचारीति भाषते ॥ १२ ॥
येनैवैश्वर्यं नीतो वित्ते तस्यैव लुभ्यति । तत्प्रभावोत्थितश्चाप्यन्तराय करोति तस्य ॥ १३ ॥
सेनापतिं प्रशास्तार भर्तार वाऽपि हिनस्ति । राष्ट्रस्य वाऽपि निगमस्य नायक श्रेष्ठिनमेव वा ॥ १४ ॥
अपश्यन् पश्याम्यह देवान् इति वा वदेत् । अवर्णेन च देवाना महामोह प्रकुरुते ॥ १५ ॥

व्याख्या—सिद्धानामतिशायिनो गुणाः सिद्धातिगुणाः संस्थानादिनिषेधरूपा एकत्रिंशत् । यदाह—

"*पडिसेहणसंठाणे वण्णे–गंधे–रसे–फासे–वेए य । पणपणदुपणठ्ठतिहा इगतीसमकायऽसंगऽरुहा ॥ १ ॥

णव दरिसणंमि चत्तारि आउए पंच आइमे अंते । सेसे दो दो भेया खीणभिलावेण इगतीसं" ॥ २ ॥

तथा 'जोग' त्ति 'पदैकदेशेऽपि पदप्रयोगदर्शनात्' योगसंग्रहा यैर्योगाः शुभमनो–वाक्–कायव्यापाराः सम्यग् गृह्यन्ते स्वीक्रियन्ते ते चालोचनादयो द्वात्रिंशद् । उक्तं हि—

"+आलोयण[1] निरवलावे[2] आवईसु दढधम्मया[3] । अणिस्सिओवहाणे[4] य सिक्खा[5] निप्पडिकम्मया[6] ॥ १ ॥

अण्णायणया[7] अलोभे[8] य तितिक्खा[9] अज्जवे[10] सुई[11] । सम्मदिट्ठी[12] समाही[13] य आयारे[14] विणओवए[15] ॥ २ ॥

धिईमई[16] य संवेगो[17] पणिही[18] सुविही[19] संवरे[20] । अत्तदोसोवसंहारे[21] सव्वकामविरत्तया[22] ॥ ३ ॥

---

* प्रतिषेधनसंस्थानानि वर्ण–गन्ध–रस–स्पर्श–वेदांश्च । पञ्च–पञ्च–द्वि–पञ्चाष्ट–त्रिधा एकत्रिंशदकायासङ्गारुहाः ॥ १ ॥

नव दर्शने चत्वार्यायुषि पञ्चादावन्ते । शेषे द्वौ द्वौ भेदौ क्षीणाभिलापेन चैकत्रिंशत् ॥ २ ॥

+ आलोचना निरपलाप आपत्सु दृढधर्मता । अनिश्रितोपधानश्च शिक्षा निष्प्रतिकर्मता ॥ १ ॥

अज्ञापनताऽलोभश्च तितिक्षाऽऽर्जवः शुचिः । सम्यग्दृष्टिः समाधिश्चाचारो विनयोपगतः ॥ २ ॥

धृतिमतिश्च संवेगः प्रणिधिः सुविधिः संवरः । आत्मदोषोपसंहारः सर्वकामविरक्तता ॥ ३ ॥

पँचक्खाणे विउस्सग्गे अप्पमाए लवालवे । झाणसंवरजोगे[28] य उदए मारणंतिए ॥ ४ ॥

सगाण च परिण्णाया पायच्छित्तकरणे[31] इय । आराहणा य मरणंते बत्तीस जोगसंगहा[32] ॥ ५ ॥

शिष्यस्य नि.शल्यालोचनाग्राहिता । आचार्यादेर्दत्तायामालोचनायां नान्यस्मै प्रकाशनं निरपलापः । परस्यानिश्रया तप कारिता । ग्रहणासेवनाशिक्षाद्वयासेविता । नि प्रतिकर्मता शरीरे । तपस परिजनस्याज्ञापनमज्ञापनता । तितिक्षा परीपहादिजय. । 'सुइ'त्ति शुचिना भाव्य सयमवतेत्यर्थ । सुविधिकारिता । प्रणिधिर्माया सा त्याज्या । धृतिप्रधानमतिः । प्रत्याख्यान मूलोत्तरगुणविपयतया द्विभेदमिति द्वारद्वयम् । 'लवालवे'त्ति क्षणे क्षणे सामाचार्यनुष्ठानं । ध्यानमेव संवरयोगः । उदये वेदनोदये मारणान्तिकोपसर्गेऽप्यक्षोभ्यता । सुगमप्राया शेपयोगसग्रहा । शुचिद्वारे दृष्टान्तस्तथाहि–

श्रीवीरशिष्यौ द्वौ धर्मघोप–धर्मयशोमती । परावर्तयतः सूत्रमशोकस्य तरोस्तले ॥ १ ॥

न पूर्वाह्णेऽपराह्णे च तच्छाया पर्यवर्तत । एकः प्राह प्रभावस्ते द्वितीयोऽवक् तवास्त्वयम् ॥ २ ॥

क्रमात् तौ कायिकीभूमि गत्वा च्छाया तथैव ताम् । दृष्ट्वा पप्रच्छतुर्वीरं तद्वृत्तं सोऽभ्यधादिति ॥ ३ ॥

---

* प्रत्याख्यान व्युत्सर्गोऽप्रमादो लवालव । ध्यानसंवरयोगश्चोदयो मारणान्तिकः ॥ ४ ॥

सङ्गाना च परिज्ञाता प्रायश्चित्तकरणमिति । आराधना च मरणान्ते द्वात्रिंशद् योगसङ्ग्रहाः ॥ ५ ॥

पुरा शौर्यपुरे राजा समुद्रविजयोऽभवत् । तापसोऽभूद् यज्ञयशाः सोममित्रा तदङ्गना ॥ ४ ॥
तदङ्गजो यज्ञदत्तस्तस्य सोमयशाः प्रिया । तत्सुतो नारदो जज्ञे तत्पितामहमुख्यकाः ॥ ५ ॥
उञ्छन्त्येकान्तरं भुक्त्यै मुक्त्वाऽशोकतले शिशुम् । तमपश्यन् दिवा यान्तो वैताढ्यजृम्भकामराः ॥ ६ ॥
स्वनिकायच्युतं मत्वाऽवधिना तं स्तनन्धयम् । अस्तभंस्तत्तरोश्छायां मा भूत् तापोऽस्य दुःखदः ॥ ७ ॥
प्रत्यायन्तस्ततस्ते तु पूर्वस्नेहाद् ददुर्मुदा । प्रज्ञप्त्याद्या महाविद्या नारदस्य महाधियः ॥ ८ ॥
अथ स व्योममार्गेण यात्यायाति च सन्ततम् । सुवर्णकुण्डिकाहस्तः पादयोर्मणिपादुकः ॥ ९ ॥
अन्येद्युर्द्वारिकापुर्यां पृष्टः कृष्णेन नारदः । किं शौचमिति तत्प्रत्युत्तरं दातुं स न क्षमः ॥ १० ॥
विनोद्य सूक्तिभिर्विष्णुं तत उत्थाय सोऽगमत् । क्षिप्रं पूर्वविदेहेऽथो उपसीमन्धरं प्रभुम् ॥ ११ ॥
युगबाहुहरिस्तत्र किं शौचं पृष्टवान् जिनम् । स्वाम्याह शौचं सत्यं हि तच्छ्रुत्वा नारदो ययौ ॥ १२ ॥
विदेहे पश्चिमे पृष्टस्तन्महाबाहुविष्णुना । शौचं तदेव व्याचष्टे युगन्धरजिनस्तदा ॥ १३ ॥
ततो द्वारवतीं गत्वा नारदः कृष्णमब्रवीत् । सत्यं शौचं हरिः प्राह किं सत्यं तद् वदाशु भोः ? ॥ १४ ॥
नारदः प्रोचिवान् सत्यं न पृष्टोऽर्हंस्तदा मया । इत्येवं चिन्तयन् जातिस्मृतिमाप विशुद्धहृत् ॥ १५ ॥

सोऽथ ज्ञात्वा तया सत्यं सर्वभूतहितं खलु । अतीव शोचयन् सम्यक् प्राप प्रत्येकबुद्धताम् ॥ १६ ॥
परिव्रज्य तपस्तप्त्वा घातिकर्मक्षयेण स । क्षपकश्रेणिमारूढ केवलज्ञानमासदत् ॥ १७ ॥
धर्मधुराधौरेयो विधाय सत्याभिध महाऽध्ययनम् । सोऽध्यास्त सिद्धिसौध ध्यानाग्निध्मातकर्मैधाः ॥ १८ ॥
तेन बाल्येऽल्पकर्मत्वात् शयानस्य तरोस्तले । एतस्योपरि तच्छाया जज्ञे पुण्यवतोऽचला ॥ १९ ॥
तौ मुनी अपि तद्वृत्त श्रुत्वा वीरजिनाननात् । सत्य-भूतहितासक्तावभूता सिद्धिभाजनम् ॥ २० ॥

॥ इति शौचफले नारदकथा ॥

ततश्च सिद्धातिगुणाश्च ते योगाश्च सिद्धातिगुणयोगास्तेपु । 'तित्तीसासायणासु य' त्ति त्रयस्त्रिंशत्स्याशातनासु चार्हदादिविपयासु प्रतिक्रमणसूत्रोक्तासु, आचार्यादे पुरत· शिष्यगमनादिकासु वा समवायाङ्गाभिहितासु यो भिक्षुर्यतते यथायोग सम्यक्श्रद्धानासेवना-वर्जनादिभि स न आस्ते मण्डले चतुरन्तससारे । अत्र श्राद्धप्रतिमाऽऽदिविस्तरस्वरूप विधिश्च दशाश्रुतस्कन्धादवसेय ॥ २० ॥

निगमनमाह—

इइ एएसु ठाणेसु जे भिक्खू जयई सया। खिप्पं से सव्वसंसारा विप्पमुच्चइ पंडिए ॥२१॥ त्ति बेमि ॥

व्याख्या—इतीत्यनेन प्रकारेणैतेष्वनन्तरोक्तेष्वसंयमादिस्थानेषु यो भिक्षुर्यतते यत्नवान् भवति सदा। क्षिप्रं स सर्वसंसाराद् विप्रमुच्यते पण्डित इति ब्रवीमीत्यादि पूर्ववत्॥ २१॥ ग्रं० १८९ अ० ८॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां चरणविधिनामकमेकत्रिंशमध्ययनं समाप्तम्॥ ३१॥

# अथ द्वात्रिंशत्तमं प्रमादस्थानाख्यमध्ययनम् ।

इह पूर्वाध्ययने चरणविधिरुक्त , स च प्रमादस्थानत्यागादेवासेवितुं शक्य. । तत्त्यागश्च तत्परिज्ञानपूर्वक इति तदर्थं द्वात्रिंशमध्ययनमारभ्यते । तत्र च स प्रमादो द्विविधो द्रव्य–भावभेदात् । तत्र द्रव्यप्रमादो मद्यादि । भावप्रमादो निद्रा–विकथा–कषाय–विषयादि । अत्र च भावप्रमादेनैवाधिकारोऽय च परिहार्य एव दुस्त्यजश्चायं जिनेन्द्रस्यस्य श्रूयमाणत्वात् । यथा भगवत श्रीऋषभदेवस्य वर्षसहस्रप्रमाणं काल तदुग्रं तपश्चरत सङ्कलितः प्रमादोऽहोरात्र कथमिदं प्रमाण घटामटाट्टीति ? उच्यते–किलाप्रमादगुणस्थानस्यान्तर्मुहूर्तिकत्वेनानेकशोऽपि प्रमाद-प्राप्तौ तदवस्थितिविषयभूतस्यान्तर्मुहूर्तस्यासङ्ख्येयभेदत्वात् तेषामतिसूक्ष्मताया सर्वसङ्कलनायामप्यहोरात्रमेवावसेयम् । तथा वर्धमानस्वामिनोऽपि द्वादशवर्षाणि साधिकानि तपश्चरत प्रमादकालोऽन्तर्मुहूर्तमात्र एव सङ्कलित । इहाप्यन्तर्मुहूर्तानामसङ्ख्येयभेदत्वात् प्रमादस्थितिविषयान्तर्मुहूर्ताना सूक्ष्मत्व सङ्कलनान्तर्मुहूर्तस्य च बृहत्तरत्वमिति भावनीयम् । अत एव जिना. प्रमाद महादोषं वदन्ति । प्रमादतो हि प्राणिनोऽनन्तसंसारं पर्यटन्ति. अतोऽसौ त्याज्य एवेत्येतदेवाह—

तथा विवर्जना परिहारो बालजनस्य पार्श्वस्थादेर्दूराद् दूरेण तत्सङ्गस्याल्पीयसोऽपि महादोषनिबन्धनत्वात्। तथा स्वाध्यायस्यैकान्तनिषेवणा निश्चयेनानुष्ठानं स्वाध्यायैकान्तनिषेवणा। तथा सूत्रस्यार्थोऽभिधेयः सूत्रार्थस्तस्य सञ्चिन्तना। तथा धृतिश्चित्तस्वास्थ्यमनुद्विग्नत्वमित्यर्थो न हि धृतिं विना ज्ञानादिलाभ इति ॥ ३ ॥

यतश्चायं ज्ञानादिमार्गस्तत एतान्यभिलषता प्राक् किं कार्यम् ? इत्याह—

आहारमिच्छे मियमेसणिज्जं सहायमिच्छे निउणत्थबुद्धिं ।
निकेयमिच्छेज्ज विवेगजुग्गं समाहिकामे समणे तवस्सी ॥ ४ ॥

व्याख्या–आहारमशनादिकमिच्छेदभिलषेन्मितमेषणीयम्। तथा सहायं सहचरमिच्छेद् 'गच्छान्तर्वर्ती सन्निति गम्यम्' निपुणा अर्थेषु जीवादिषु बुद्धिरस्येति निपुणार्थबुद्धिस्तम्। तथा निकेतमाश्रयमिच्छेद् विवेकः पृथग्भावः स्त्र्यादिसंसर्गाभाव इति यावत् तस्मै योग्यमुचितं तदापाताद्यसम्भवेन विवेकयोग्यम्। समाधिर्द्रव्यभावभेदाद् द्विभेदस्तत्र द्रव्यसमाधिः क्षीर–शर्कराऽऽदिद्रव्याणां परस्परमविरोधेनावस्थानम्। भावसमाधिस्तु ज्ञानादीनामन्योन्यमबाधयाऽवस्थानमेतं भावसमाधिं कामयतेऽभिलषतीति भावसमाधिकामो ज्ञानाद्यवाप्तुकाम इत्यर्थः। श्रमणस्तपस्वी ॥ ४ ॥

कालादिदोषत एवंविधसहायाप्राप्तौ कृत्यमाह—

न वा लभिज्ज निउणं सहायं गुणाहियं वा गुणओ समं वा ।
इक्को वि पावाइ विवज्जयंतो विहरेज्ज कामेसु असज्जमाणो ॥ ५ ॥

व्याख्या—'नेति निषेधे, वाशब्दश्चेदर्थे' ततश्च न चेल्लभेत निपुणमिति निपुणबुद्धिं सहायं, गुणैर्ज्ञानादिभिरधिकं, गुणत इति ज्ञानादिगुणानाश्रित्य समाश्रित्य समं वा तुल्यम् 'उभयत्र आत्मन इति गम्यते, वा विकल्पे' ततश्चैकोऽप्यसहायी पापानि पापहेतून्यनुष्ठानानि विवर्जयन् विहरेत् संयमाध्वनि यायात्। कामेषु विषयेष्वसजन् प्रतिबन्धमकुर्वंस्तथाविधगीतार्थयतिविषयं चैतद्, अन्यथैकाकि विहारस्यागमे निषिद्धत्वात् ॥ ५ ॥

दु खस्य दु खहेतूनां वा भावं दृष्टान्तेनाह—

जहा य अंडप्पभवा बलागा अंडं बलागप्पभवं जहा य ।
एमेव मोहाययणं खु तण्हा मोहं च तण्हाययणं वयंति ॥ ६ ॥

व्याख्या—यथा च येनैव प्रकारेणाण्डप्रभवा बलाका पक्षिविशेषोऽण्डं बलाकाप्रभवं यथा च। एवमेवानेनैव प्रकारेण मोहोऽज्ञानमायतनमुत्पत्तिस्थानं यस्याः सा मोहायतना ताम् 'खुरेवार्थे' तृष्णा 'वदन्तीति सम्बन्धः' ।

मोहं च तृष्णाऽऽयतनं वदन्ति । तृष्णा हि सति वस्तुनि मूर्च्छा सा च रागप्रधाना ततस्तया राग उपलक्ष्यते । द्वेषोऽपि तस्मिन् सति सम्भवतीत्यनयैवाक्षिप्यते । ततस्तृष्णाऽऽक्षिप्तयो रागद्वेषयोरनन्तानुबन्धिकषायरूपः सत्तायामवश्यम्भावी मिथ्यात्वोदयोऽत एवोपशान्तकषायवीतरागस्यापि मिथ्यात्वगमनम् । तत्र सिद्ध एवाज्ञानरूपो मोहः । एतेन च परस्परं हेतुहेतुमद्भावेन यथा रागादीनां सम्भवस्तथोक्तम् ॥ ६ ॥

यथैतेषां दुःखहेतुत्वं तथाऽऽह—

रागो य दोसो वि य कम्मबीयं कम्मं च मोहप्पभवं वयंति ।
कम्मं च जाई–मरणस्स मूलं दुक्खं च जाई–मरणं वयंति ॥ ७ ॥

व्याख्या–रागश्च माया–लोभात्मकः, द्वेषोऽपि च क्रोध–मानात्मकः, कर्म ज्ञानावरणीयादि तस्य बीजं कारणं कर्म-बीजं, कर्म च मोहात् प्रभवतीति मोहप्रभवं मोहकारणं वदन्ति 'चः सर्वत्र समुच्चये' । कर्म च पुनर्जातयश्च मरणं च जाति–मरणं तस्य मूलं कारणं, दुःखं च जाति–मरणं वदन्ति । जाति–मरणस्यैवातिदुःखहेतुत्वात् । उक्तं हि—

"[1]मरमाणस्स जं दुक्खं जायमाणस्स जंतुणो । तेण दुक्खेण संतत्तो न सरइ जाइमप्पणो" ॥ १ ॥ ७ ॥

---

१ म्रियमाणस्य यद् दुःखं जायमानस्य जन्तुनः । तेन दुःखेन सन्तप्तो न स्मरति जातिमात्मनः ॥ १ ॥

अत कि स्थितमित्याह—

दुक्खं हय जस्स न होइ मोहो मोहो हओ जस्स न होइ तण्हा ।
तण्हा हया जस्स न होइ लोहो लोहो हओ जस्स न किंचणाइ ॥ ८ ॥

व्याख्या–दु.खं हतमिव हतं केन ? इत्याह–यस्य न भवति मोहस्तस्यैव तन्मूलकारणत्वाद्, मोहो हतो यस्य न भवति तृष्णा, कोऽर्थ. ? तृष्णाया अभावान्मोहाभावस्तदायतनत्वेन तस्याभिधानात् । तृष्णा हता यस्य न भवति लोभ·, लोभो हतो यस्य न किञ्चनानि द्रव्याणि 'सन्तीति गम्यते' । सत्सु हि तेषु सम्भवत्यभिकाङ्क्षा तद्रूप एव हि लोभः । यत् तु तत्सद्भावेऽपि लोभहननं भरतादीना तत्कादाचित्कत्वान्न विवक्षितमिति ॥ ८ ॥

दु खहेतुमोहादीनामुन्मूलनोपायं प्रस्तावयितुमाह—

राग च दोस च तहेव मोहं उद्धत्तुकामेण समूलजाल ।
जे जे उवाया पडिवज्जियव्वा ते कित्तइस्सामि अहाणुपुव्वि ॥ ९ ॥

व्याख्या–राग च द्वेषं च तथैव मोहमुद्धर्तुकामेनोन्मूलयितुमिच्छता सहमूलानामिव मूलानां मोहप्रकृतीनां

जालेन समूहेन वर्तत इति समूलजालस्तम् । ये ये उपायास्तदुद्धरणहेतवः प्रतिपत्तव्या अङ्गीकर्तव्यास्तान् कीर्तयिष्याम्यानुपूर्व्याऽनुक्रमेण ॥ ९ ॥

तानेवाह—

रसा पगामं न निसेवियव्वा पायं रसा दित्तिकरा नराणं ।
दित्तं च कामा समभिद्दवंति दुमं जहा सादुफलं व पक्खी ॥ १० ॥

व्याख्या—रसाः क्षीरादिविकृतयः प्रकाममत्यर्थं न निषेवितव्या नोपभोक्तव्याः । प्रकामग्रहणं तु वातादिक्षोभोपशमाय रसाः सेव्याः, एवं निष्कारणसेवनस्य तु निषेध इति ख्यापनार्थम् । किमित्येवम् ? इत्याह—प्रायो बाहुल्येन रसाः 'निषेव्यमाणा इति गम्यते' दृप्तिर्धातूद्रेकस्तत्करणशीला दृप्तिकरा नराणाम् 'उपलक्षणात् स्त्र्यादीनां च' ते ह्युपभुक्तास्तेषामुदीरयन्ति मोहानलमित्युक्तं च—

"[1]विगईपरिणइधम्मो मोहो जमुदिज्जए उदिण्णे य । सुट्ठु वि चित्तजयपरो कहं अकज्जे ण वट्टिहिई" ? ॥ १ ॥

---

१ विकृतिपरिणतिधर्मो मोहो यदुदीर्यते उदीर्णे च । सुष्ठ्वपि चित्तजयपरः कथमकार्ये न वर्तिष्यते ? ॥ १ ॥

एवं च को दोषः ? इत्याह—दृप्तं दर्पिष्ठं 'नरमिति प्रक्रम', च' पुनरर्थे, जात्यपेक्षया एकवचनम्' कामा विषया' समभिद्रवन्ति पराभवन्ति । तथाविधस्याद्यभिलषणीयत्वात् सुखाभिभवनीयत्वाच्चेति भावः । कमिव क इव ? इत्याह—द्रुमं वृक्षं यथा स्वादुफलं मधुरफलोपेतं 'चेति भिन्नक्रम.' ततश्च पक्षिण इव । इह च द्रुमोपम पुरुषादिः, स्वादुफलतातुल्य च दृप्तत्वं, पक्षिसदृशाश्च कामा इति । अनेन रसप्रकामभोजने दोष उक्तः ॥ १० ॥

अथ सामान्येन प्रकामभोजने दोषमाह—

जहा दवग्गी पउरिंधणे वणे समारुओ नोवसमं उवेइ ।
एविंदियग्गी वि पगामभोइणो न बभयारिस्स हियाय कस्सई ॥ ११ ॥

व्याख्या—यथा दवाग्निर्दवानल' प्रचुरेन्धने वने समारुत. सवायुर्नोपशमं विध्यातमुपैति प्राप्नोति । एवमिति दवाग्निवन्नोपशमभाग् भवति 'इंदियग्गि'त्ति इन्द्रियशब्देनेन्द्रियजनितो राग एवोक्तस्तस्यैवानर्थहेतुत्वेनेह चिन्त्य-मानत्वात् स एवाग्निरिव धर्मवनदाहकत्वादिन्द्रियाग्निः सोऽपि प्रकामभोजिनोऽतिमात्राहारस्य, प्रकामभोजनस्य पवनप्रायत्वेन तदुदीरकत्वात्, न ब्रह्मचारिणो हिताय ब्रह्मचर्यविघातकत्वेन कस्यचिदतिसुस्थितस्यापि, तदनेन प्रकामभोजनस्य परिहार्यत्वमुक्तम् ॥ ११ ॥

अथ रागमुद्धर्तुकामेन यदतियत्नेन कर्तव्यं तदाह—

विवित्तसिज्जासणजंतियाणं ओमासणाणं दमिइंदियाणं ।
न रागसत्तू धरिसेइ चित्तं पराइओ वाहिरिवोसहेहिं ॥ १२ ॥

व्याख्या–विविक्ता स्त्र्यादिविकला शय्या वसतिस्तस्यामासनमवस्थानं तेन यन्त्रिता विविक्तशय्याऽऽसनयन्त्रितास्तेषाम् । अवमाशनानां न्यूनभोजनानां दमितेन्द्रियाणां न नैव रागः शत्रुरिवाभिभवहेतुत्वाद् रागशत्रुर्धर्षयति पराभवति चित्तम् । क इव ? पराजितः पराभूतो व्याधिरिति च कुष्ठादिरौपधैर्गडूच्यादिभिः 'देहमिति गम्यते' ॥ १२ ॥

विविक्तशय्यादिविपर्यये दोषमाह—

जहा विरालावसहस्स मूले न मूसगाणं वसही पसत्था ।
एमेव इत्थीनिलयस्स मज्झे न बंभयारिस्स खमो निवासो ॥ १३ ॥

व्याख्या–यथा बिडालानां मार्जाराणामावसथ आश्रयो बिडालावसथस्तस्य मूले समीपे मूषकाणां न वसतिः

प्रशस्ता शोभना । तत्रावश्यं तदपायसम्भवात् । एवं स्त्रीणाम् 'उपलक्षणात् पण्डकादीनां' निलयो निवासस्तस्य मध्ये न ब्रह्मचारिण· क्षमो युक्तो निवासोऽवस्थान तत्र ब्रह्मचर्यबाधासम्भवादिति भाव· ॥ १३ ॥

विविक्तशय्यादावपि कदाचित् स्त्रीणां सम्पाते यत् कृत्यं तदाह—

न रूव–लावन्न–विलास–हास न जंपिय इंगिय वीहिय वा ।
इत्थीण चित्तंसि निवेसइत्ता दट्ठुं ववस्से समणे तवस्सी ॥ १४ ॥

व्याख्या–न नैव रूपं, लावण्यं नयनाद्याह्लादको गुण , विलासा विशिष्टवेपरचनादयः, हास· कपोलविकासादि· 'एषां द्वन्द्वे' रूप–लावण्य–विलास–हासम् , न जल्पितं मन्मनोल्लापादि, इङ्गितमङ्गभङ्गादि, वीक्षितं कटाक्षविक्षेपादि 'वा समुच्चये' स्त्रीणां सम्बन्धि 'चित्तंसि' त्ति चित्ते मनसि निवेश्याहो ! सुन्दरमिदमिति विकल्पितं स्थापयित्वा द्रष्टुमिन्द्रियविषयतां नेतुं व्यवसेदध्यवस्येत् श्रमणस्तपस्वीति ॥ १४ ॥

किमित्येवम् ? इत्याह—

अदंसणं चेव अपत्थण च अचिंतण चेव अकित्तणं च ।
इत्थीजणस्सारियज्झाणजोग्गं हिय सया बंभवए रयाणं ॥ १५ ॥

व्याख्या—अदर्शनमिन्द्रियाविषयीकरणम्, 'चः समुच्चये, एवोऽवधारणे' अप्रार्थनं चानभिलषणम्, अचिन्तनं चैव रूपाद्यपरिभावनम्, अकीर्तनं चासंशब्दनं नामतो गुणतो वा स्त्रीजनस्यार्यध्यानं धर्मादि तस्य योग्यं तद्धेतुत्वेनोचितमार्यध्यानयोग्यं हितं पथ्यं सदा ब्रह्मव्रते रतानामासक्तानाम् ॥ १५ ॥

ननु 'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः'। तत् किं विविक्तशय्याऽऽदिभिरित्याशङ्क्याह—

कामं तु देवीहि वि भूसियाहिं न चाइया खोभइउं तिगुत्ता ।
तहा वि एगंतहियं ति नच्चा विवित्तवासो मुणिणं पसत्थे ॥ १६ ॥

व्याख्या—'कामं तु'त्ति अनुमतमेवैतत् यदुत 'देवीहिं वि'त्ति देवीभिरप्यप्सरोभिरपि 'आस्तां मानुषीभिरित्यपिशब्दार्थः' भूषिताभिरलङ्कृताभिर्न नैव 'चाइय'त्ति शकिताः क्षोभयितुं चालयितुं 'संयमादिति गम्यते' तिसृभिर्मनोगुप्त्यादिगुप्तिभिर्गुप्ताः 'अर्थान्मुनयः'। तथापि यद्यप्येवंविधाश्चालयितुं न शक्यन्ते, तदप्येकान्तहितमेतदिति ज्ञात्वा कोऽर्थः ? सम्भवन्ति हि केचिदभ्यस्तयोगिनोऽपि ये तत्सङ्गतः क्षुभ्यन्ति, येऽपि च न क्षुभ्यन्ति तेऽपि स्त्रीसंसक्तवसतिवासेऽवर्णवादादिदोषभाजो भवेयुः, इत्यादि परिभाव्य विविक्तवासो विविक्तशय्यासनात्मको मुनीनां प्रशस्त इत्यन्तर्भावितणिगर्थत्वात् प्रशंसितो गणधरादिभिरतः स एवाश्रयणीय इति भावः ॥ १६ ॥

एतत्समर्थनार्थमेव स्त्रीणां दुरतिक्रमत्वमाह—

मुक्खाभिकंखिस्स वि माणवस्स संसारभीरुस्स ठियस्स धम्मे ।
न तारिसं दुत्तरमत्थि लोए जह त्थीओ बालमणोहराओ ॥ १७ ॥

व्याख्या—मोक्षाभिकाङ्क्षिणोऽपि मानवस्य, संसाराद् भयनशील भीरुः संसारभीरुः 'अपेरत्रापि सम्बन्धात्' तस्यापि, तथा स्थितस्यापि धर्मे श्रुतधर्मादौ । न तादृश दुस्तर दुरतिक्रममस्ति लोके यथा स्त्रियो बालमनोहरा निर्विवेकचित्ताक्षेपिण्यो दुस्तरा, दुस्तरत्वे च बालमनोहरत्व हेतुरतश्चातिदुस्तरत्वादासां त्याज्यत्वेन विविक्तशय्याऽऽसनमेव श्रेय इति भाव. ॥ १७ ॥

स्त्रीसङ्गातिक्रमे गुणमाह—

एए य संगे समइक्कमित्ता सुहुत्तरा चेव भवंति सेसा ।
जहा महासागरमुत्तरित्ता नई भवे अवि गंगासमाणा ॥ १८ ॥

व्याख्या—एतांश्च सङ्गान् सम्बन्धान् स्त्रीविषयान् समतिक्रम्योल्लङ्घ्य सुखोत्तरा. सुखोल्लङ्घ्याश्चैव भवन्ति शेषा द्रव्यादिसङ्गा, सर्वसङ्गानां रागरूपत्वे समानेऽपि स्त्रीसङ्गानामेव तेषु प्राधान्यादिति भावः । दृष्टान्तमाह—यथा

महासागरं स्वयम्भूरमणमुत्तीर्य, नदी भवेत् 'सुखोत्तरैवेति प्रक्रमः' वीर्यातिशययोगत इति भावः । अपि गंगासमानेति गङ्गा किल महानदी तत्सदृशाऽप्यास्तामितरा क्षुद्रनदीत्यपिशब्दार्थः ॥ १८ ॥

रागस्य दुःखहेतुत्वं दर्शयति—

कामाणुगिद्धिप्पभवं खु दुक्खं सव्वस्स लोगस्स सदेवगस्स ।
जं काइयं माणसियं च किंचि तस्संतगं गच्छइ वीयरागो ॥ १९ ॥

व्याख्या—कामा विषयास्तेष्वनुगृद्धिः सतताभिकाङ्क्षा 'अनोः सातत्यार्थत्वात्' तस्याः प्रभवो यस्य तत् कामानुगृद्धिप्रभवं 'खुरेवार्थे' कामानुगृद्धिप्रभवमेव, किं तद्? दुःखं, सर्वस्य लोकस्य प्राणिगणस्य सदेवकस्य देवैः समन्वितस्य यत् कायिकं रागादि, मानसिकं चेष्टवियोगादिजन्यं किञ्चित् स्वल्पमपि तस्य द्विविधस्यापि दुःखस्यान्तमेवान्तकं पर्यन्तं गच्छति वीतरागो विगतकामानुगृद्धिरित्यर्थः ॥ १९ ॥

ननु कामाः सुखरूपतयैवानुभूयन्ते तत् कथं कामानुगृद्धिप्रभवमेव दुःखं? उच्यते—

जहा य किंपागफला मणोरमा रसेण वण्णेण य भुज्जमाणा ।
ते खुद्दए जीविय पच्चमाणा एउवमा कामगुणा विवागे ॥ २० ॥

व्याख्या–यथा च किम्पाको वृक्षविशेषस्तत्फलानि 'अपेर्गम्यत्वात्' मनोरमाण्यपि रसेनास्वादेन, वर्णेन रक्तादिना 'चशब्दाद् गन्धादिना च' भुज्यमानानि 'ते' इति तानि प्रतीतानि, क्षुद्रके सोपक्रमे जीविते आयुषि पच्यमानानि विपाकावस्थाप्राप्तानि 'मरणान्तदु खदायीनीति शेष.' 'लिङ्गव्यत्यय. प्राकृतत्वात्' एतदुपमाः किम्पाकफलतुल्या' कामगुणा विपाके फलप्रदानकाले । को भाव. ? यथा किम्पाकफलानि भुज्यमानानि विपाके दुःखदानि, एव कामगुणा अप्युपभुज्यमाना नरकादिदु.खदायिन इति ॥ २० ॥

रागस्यैव द्वेषसहितस्योद्धरणोपायमाह—

जे इदियाणं विसया मणुन्ना न तेसु भावं निसिरे कयाइ ।

न यामणुन्नेसु मणं पि कुज्जा समाहिकामे समणे तवस्सी ॥ २१ ॥

व्याख्या–ये इन्द्रियाणां चक्षुरादीनां विषया रूपादयो मनोज्ञाः, न तेषु विषयेषु भावमभिप्रायम् 'अपेर्गम्यत्वात्' भावमपि 'प्रस्तावादिन्द्रियाणि प्रवर्तयितुं' किं पुनस्तत्प्रवर्तनमित्यपेरर्थः, निसृजेत् कुर्यात् कदाचित् । मनोज्ञविषयप्रवृत्तानां मन प्रभृतीनां रागनिमित्तत्वात् । तथा न च नैवामनोज्ञेषु मनोऽपि 'अत्रापि इन्द्रियाणि प्रवर्तयितुम्' 'अपिशब्दार्थः प्राग्वत्' कुर्यादमनोज्ञविषयप्रवृत्तानामपि मन.प्रभृतीनां द्वेषनिमित्तत्वात् । तदनेन

वाक्यद्वयेनापीन्द्रियदम उक्तः । समाधिश्चित्तैकाग्र्यं स च राग-द्वेपाभाव एव तत्कामो राग-द्वेपोद्धरणाभिलापी श्रमणस्तपस्वी ॥ २१ ॥

अथ विपयेषु प्रवर्तने राग-द्वेपानुद्धरणे च प्रत्येकमिन्द्रियाणि प्रसङ्गतो मनश्चाश्रित्य दोषं दर्शयितुमाह—

चक्खुस्स रूवं गहणं वयंति तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु समो य जो तेसु स वीयरागो ॥ २२ ॥

व्याख्या—चक्षुषो रूपं वर्णः संस्थानं च गृह्यतेऽनेनेति ग्रहणमाक्षेपकमित्यर्थो विशिष्टेन रूपेण चक्षुराक्षिप्यत इति तद् वदन्ति 'अर्हदादय इति गम्यते'। ततश्च तद् रूपं रागहेतुं 'तुः पूरणे' मनोज्ञमाहुः। तथा तद् रूपमेव द्वेपहेतुममनोज्ञमाहुः । ततश्च तयोश्चक्षुःप्रवर्तने राग-द्वेपसम्भवात् तदुद्धरणाऽशक्तिलक्षणो दोप इति भावः। सति रूपे कथं वीतरागः स्याद् ? इत्याह—समश्चारक्त-द्विष्टतया तुल्यः पुनर्यस्तयोर्मनोज्ञेतररूपयोः स वीतरागः, तदविनाभावित्वाद् वीतद्वेपश्च। को भावः? न तावच्चक्षुः तयोः प्रवर्तयेत्। कथञ्चित् प्रवर्तने समतामेवालम्बेतेति ॥२२॥

ननु यद्येवं रूपमेव राग-द्वेपजनकं ततस्तदुद्धरणार्थिनस्तद्गतैव चिन्ताऽस्तु, 'रूपे चक्षुर्न प्रवर्तयेत्' इत्येवं तु चक्षुश्चिन्ता कर्तुं न युक्तेत्याशङ्क्याह—

रूवस्स चक्खुं गहणं वयंति चक्खुस्स रूवं गहण वयंति ।
रागस्स हेउ समणुन्नमाहु दोसस्स हेउं अमणुन्नमाहु ॥ २३ ॥

न्याख्या–रूपस्य चक्षु गृह्णातीति ग्रहण वदन्ति । तथा चक्षुपो रूपं गृह्यत इति ग्रहणं प्रागुक्तरीत्याऽऽक्षेपकं ग्राह्यं तद् वदन्ति । तदनेन रूप–चक्षुपोर्ग्राह्य–ग्राहकभाव उक्त । तथा न ग्राहक विना ग्राह्यत्वं नापि ग्राह्यं विना ग्राहकत्वमित्यनयो परस्परमुपकार्योपकारकभाव उक्तो भवति । ततो यथा रूपं राग–द्वेपकारण तथा चक्षुरप्यत एवाह–रागस्य हेतु 'प्रक्रमाच्चक्षु ' सह मनोज्ञेन ग्राह्येण रूपेण वर्तत इति समनोज्ञरूपविपयमाहुर्ब्रुवते, द्वेपस्याम-नोज्ञममनोज्ञरूपप्रवृत्तमाहुरेवं रूप–चक्षुपोर्मिलितयोरेव राग–द्वेपजनकत्वात् तावुद्धर्तुकामो रूपे चक्षुर्न प्रवर्तये-दिति भाव. ॥ २३ ॥

रागानुद्धरणे दोपमाह—

रूवेसु जो गिद्धिमुवेइ तिव्व अकालिय पावइ से विणासं ।
रागाउरे से जह वा पयगे आलोयलोले समुवेइ मच्चुं ॥ २४ ॥

व्याख्या—रूपेषु यो गृद्धिं गार्ध्यं रागमित्यर्थः । उपैति तीव्रामुत्कटां, अकाले भवमकालिकं यथास्थित्यायुषो-र्वागेव प्राप्नोति स विनाशम् । रागेणातुरो रागातुरः सन् स इति लोकप्रतीतो यथा वेति 'वाशब्दस्येवार्थत्वाद्' यथैव पतङ्गः शलभ आलोकः स्निग्धदीपशिखादिदर्शनं तस्मिन् लोलो लम्पट आलोकलोलः समुपैति मृत्युं तस्यापि ह्यालोकलोलत्वं राग एवेति भावः ॥ २४ ॥

द्वेषानुद्धरणे दोषमाह—

जे यावि दोसं समुवेइ निच्चं तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू न किंचि रूवं अवरज्झई से ॥ २५ ॥

व्याख्या—यश्चापि द्वेषं दोषं समुपैति समुपगच्छति 'रूपेष्विति प्रक्रमः' नित्यं 'तंसि'त्ति तस्मिन् क्षणे प्रस्तावे यस्मिन् द्वेष उत्पन्नः, स 'तुः पूरणे' उपैति दुःखं हा! मया किमिदं दृष्टम्? इति मानसम्, तज्जं शारीरादि च । इत्थं तर्हि रूपस्यैव दुःखहेतुत्वम्, तद्दर्शन एव द्वेषसम्भवादित्याशङ्क्याह—दुष्टं दमनं दुर्दान्तं तच्च 'प्रक्रमाच्चक्षुः'तदेव दोषो दुर्दान्तदोषः तेन स्वकीयेन जन्तुः प्राणी 'दुःखमुपैतीति उक्तमेव' । न किञ्चिदल्पमपि रूपं 'प्रक्रमादमनो-

ज्ञम्' अपराध्यति दुष्यति 'से' तस्य। यदि हि रूपमेवापराध्येत न कस्यचिद् दोषाभावः स्यात्, तथा च मुक्त्यभावादयो दोषा इति भावः ॥ २५ ॥

द्वेषस्य रागहेतुत्वादनर्थमूलत्वं दर्शयंस्तत्त्यागमाह—

एगतरत्तो रुइरसि रूवे अयालिसे से कुणई पओसं ।
दुक्खस्स सपीडमुवेइ वाले नालिप्पई तेण मुणी विरागो ॥ २६ ॥

व्याख्या–एकान्तरक्तो यो रुचिरे मनोहरे रूपेऽतादृशेऽन्यादृशेऽरुचिरे रूपे स करोति प्रद्वेषम्। तथा दुःखस्य सम्पीडं सङ्घात समुपैति वालोऽज्ञः। व्यतिरेकमाह–न लिप्यते श्लिष्यते तेन द्वेषकृतदुःखेन मुनिर्विरागो रागरहितस्तस्यैव तन्मूलहेतुत्वादिति भाव ॥ २६ ॥

सम्प्रति रागस्यैव हिंसाद्याश्रवहेतुतामिहैव च तद्द्वारेण दुःखजनकत्वमाह—

रूवाणुगासाणुगए य जीवे चराचरे हिंसइ णेगरूवे ।
चित्तेहि तं परितावेइ वाले पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ २७ ॥

व्याख्या–रूपं 'प्रस्तावान्मनोज्ञं' अनुगच्छतीति रूपानुगा, सा चासावाशा च रूपाऽनुगाऽऽशा रूपविषयोऽभिलाप इत्यर्थः । तदनुगतश्च प्राणी जीवांश्चराचरांस्त्रस–स्थावरान् हिनस्ति विनाशयत्यनेकरूपान् जात्यादिभेदतः । कांश्चित् तु विचित्रैरनेकप्रकारैः 'स्व–परकायशस्त्रादिभिरुपायैरिति गम्यते' तमिति 'सुब्व्यत्ययात्' तान् चराचरान् परितापयति दुःखयति बालो विवेकविकलः परांश्च पीडयत्येकदेशदुःखोत्पादनेनात्मार्थं गुरुश्च प्रयोजननिष्ठः क्लिष्टो रागबाधितः ॥ २७ ॥

अन्यच्च—

रूवाणुवाएण परिग्गहेण उप्पायणे रक्खणसंनिओगे ।
वए विओगे य कहं सुहं से संभोगकाले य अतित्तिलाभे ॥ २८ ॥

व्याख्या–रूपेऽनुपातोऽनुगमनमनुराग इत्यर्थो रूपानुपातस्तेन, तथा परिग्रहेण मूर्छात्मकेन हेतुना; उत्पादने उपार्जने, रक्षणं चापायनिवारणं सन्नियोगश्च स्व–परप्रयोजनेषु सम्यग्व्यापारणं ततो द्वन्द्वे रक्षणसन्नियोगं तस्मिन् । 'वए'त्ति व्यये विनाशे, वियोगे विरहे, 'सर्वत्र रूपस्येति प्रक्रमः' क्व सुखं ? न क्वचित्, किन्तु सर्वत्र दुःखमेवेति भावः । 'से' तस्य जन्तोः । रूपमूर्च्छितो हि सुरूपकरि–तुरग–कलत्रादीनामुत्पादनाद्यर्थं क्लेशहेतुषूपायेषु प्रवर्तमानः

दु.खमेवानुभवतीति भाव । सम्भोगकाले रूपस्य सुखं भविष्यतीत्याशङ्क्याह–सम्भोगकाले चोपभोगप्रस्तावेऽतृप्तिलाभ । कोऽभिप्राय ? बहुधाऽपि रूपदर्शने रागिणा न तृप्तिरस्ति । यतोऽन्यैरप्युक्तम्—

"न जातु काम कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" ॥ १ ॥

तस्मिन् सति क सुखम्? इत्युत्तरेच्छया हि परिखिद्यत एव रूपानुरागीति ॥ २८ ॥

अपि च—

रूवे अतित्ते य परिग्गहंमि सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स लोभाविले आययई अदत्तं ॥ २९ ॥

व्याख्या–रूपेऽतृप्तश्च परिग्रहे च तद्विषयमूर्च्छात्मके, सक्त· सामान्येनैवासक्तिमान्, उपसक्तश्च गाढमासक्तस्ततः पूर्वं सक्त पश्चादुपसक्त सक्तोपसक्तो नोपैति नोपगच्छति तुष्टिं सन्तोषम् । तथा चातुष्टिरेव दोषोऽतुष्टिदोषस्तेन दु खी, यदि ममेदमिदं च रूपवद् वस्तु स्यादित्याकाङ्क्षातोऽतिदु·खवान् । किं कुर्याद्? इत्याह–परस्य सम्बन्धि 'रूपवद् वस्त्विति गम्यते' लोभाविलो लोभकलुष आदत्ते गृह्णात्यदत्तमिति । यद्वा परस्य स्वं परस्वं तत्र लोभाविल· सन्नादत्तेऽदत्तमनिसृष्ट 'परकीयमेव रूपवद् वस्त्विति गम्यम्' ॥ २९ ॥

पुनर्दोषान्तरमाह—

तण्हाभिभूयस्स अदत्तहारिणो रूवे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा तत्थावि दुक्खा न विमुच्चई से ॥ ३० ॥

व्याख्या—तृष्णाऽभिभूतस्य लोभपराजितस्य । तत एवादत्तं हरति गृह्णातीत्येवंशीलोऽदत्तहारी तस्य । तथा रूपे रूपविषये यः परिग्रहस्तस्मिन्नतृप्तस्य च तत्रासन्तुष्टस्य । मायाप्रधानं 'मोसं'ति मृषाऽलीकभाषणं मायामृषा वर्धते । कुतः ? इत्याह—लोभदोषाल्लोभापराधात् । लुब्धो हि परस्वमादाय तद्रक्षणपरो मायामृषां वक्ति । तत्रापि मृषाभाषणेऽपि दुःखान्न विमुच्यते स किन्तु दुःखभागेव स्यादिति भावः ॥ ३० ॥

दुःखाविमुक्तिमेव भावयति—

मोसस्स पच्छा य पुरच्छओ य पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाययंतो रूवे अतित्तो दुहिओ अणिस्सो ॥ ३१ ॥

व्याख्या—मृषाया अनृतभाषणस्य । पश्चादिदं मया न सुसंस्थापितमुक्तमिति पश्चात्तापतः । पुरस्ताच्च कथं वञ्च-

नीयोऽयं मयेति चिन्तयाऽऽकुलत्वेन । प्रयोगकाले चानृतभाषणप्रस्तावे च नासौ ममालीकभाषिता लक्षयति ? इति क्षोभत.। दु खी सन्, तथा दुष्टोऽन्त पर्यवसानमिहानेकविडम्बनातोऽमुत्र नरकादिप्राप्त्या यस्यासौ दुरन्तो 'भवति जन्तुरिति गम्यते' । उपसंहरति–एवमदत्तानि समाददानो रूपेष्वतृप्त सन् दु खितो भवति । कीदृश ? अनिश्रो दोषवत्तया सर्वोपेक्षणीयत्वात् कस्यचिदवष्टम्भेन रहित 'मैथुनाश्रवोपलक्षण चैतत्' ॥ ३१ ॥

निगमयितुमाह—

रूवाणुरत्तस्स नरस्स एव कत्तो सुह हुज्ज कयाइ किंचि ।
तत्थोवभोगे वि किलेसदुक्ख निव्वत्तई जस्स कए ण दुक्खं ॥ ३२ ॥

व्याख्या–रूपानुरक्तस्य नरस्यैव प्रागुक्तसूत्रप्रकारेण कुत. सुख भवेत् कदाचित् किञ्चित्? सदा दु.खमेवेति भाव.। यतस्तत्र रूपानुरागे उपभोगेऽपि क्लेशदु.खमतृप्तिलाभतालक्षणबाधाजनितमसातम्। उपभोगमेव विशेषयति–निर्वर्तयत्युत्पादयति यस्येत्युपभोगस्य कृते 'णेत्यलङ्कारे' दुःख प्रयासलक्षणं कृच्छ्रम् 'आत्मन इति गम्यम्' । उपभोगार्थं हि जन्तुः क्लिश्यति यदुत तत्र मे सुख स्यादिति । यदि तु तदाऽपि दुःखं तदा कुतोऽन्यदा सुखसम्भवः ? इति भावः ॥ ३२ ॥

इत्थं रागस्यानर्थहेतुतामभिधाय द्वेषस्यापि तामतिदेष्टुमाह—

एमेव रूवंमि गओ पओसं उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणेइ कम्मं जं से पुणो होइ दुहं विवागे ॥ ३३ ॥

व्याख्या—एवमेव यथाऽनुरक्तस्तथैव रूपे गतः प्रद्वेषमुपैति 'इहैवेति शेषः' दुःखौघो दुःखसमूहस्तस्य परम्परा उत्तरोत्तरदुःखसमूहरूपाः । तथा प्रदुष्टं प्रकर्षेण द्विष्टं चित्तं यस्य स तथाविधश्च चिनोति बध्नाति कर्म, तच्छुभमपि सम्भवत्यत आह—यत् 'से' तस्य पुनर्भवति दुःखं दुःखहेतुर्विपाकेऽनुभवकाले, इह परत्र चेति भावः । पुनर्दुःखग्रहणमैहिकदुःखापेक्षमिति ॥ ३३ ॥

राग-द्वेषोद्धरणे गुणमाह—

रूवे विरत्तो मणुओ विसोगे एएण दुक्खोहपरंपरेण ।
न लिप्पए भवमज्झे वि संतो जलेण वा पुक्खरिणीपलासं ॥ ३४ ॥

व्याख्या—रूपे विरक्तः 'उपलक्षणादद्विष्टश्च' मनुजो मनुष्यो विशोकः शोकरहितः संस्तन्निबन्धनयो राग-द्वेषयो-

रभावादेतेनानन्तरोक्तेन 'दुक्खोहपरंपरेणेति' दुःखानामोघा. सङ्घातास्तेषां परम्परा सन्ततिर्दुःखौघपरम्परा तया न लिप्यते न स्पृश्यते भवमध्येऽपि सन् तिष्ठन्नित्यर्थ । दृष्टान्तमाह–जलेनेव 'वाशब्दस्योपमार्थत्वात्' पुष्करिणीपलाशं पद्मिनीपत्रं 'जलमध्येऽपि सदिति शेष.' । इत्थ चक्षुराश्रित्य त्रयोदश सूत्राणि व्याख्यातानि ॥ ३४ ॥

श्रोत्रमाश्रित्य तान्याह—

सोयस्स सद्दं गहणं वयति तं रागहेउं तु मणुन्नमाहु ।
त दोसहेउं अमणुन्नमाहु समो थ जो तेसु स वीयरागो ॥ ३५ ॥

व्याख्या–श्रोत्रस्य श्रोत्रेन्द्रियस्य शब्यत इति शब्दो ग्रहणमाक्षेपकं वदन्ति। ततश्च तं शब्दं मनोज्ञं काकलीगीतादि रागहेतुमाहुः । तममनोज्ञं खर–कर्कशादि द्वेषहेतुमाहुः । समश्चारक्त–द्विष्टतया तुल्यो मनोज्ञेतरशब्दयोः स वीतरागो वीतद्वेषश्च ॥ ३५ ॥

सद्दस्स सोयं गहणं वयंति सोयस्स सद्दं गहणं वयंति ।
रागस्स हेउं समणुन्नमाहु दोसस्स हेउं अमणुन्नमाहु ॥ ३६ ॥

व्याख्या–शब्दस्य श्रोत्रं गृह्णातीति ग्रहणं ग्राहकं वदन्ति । श्रोत्रस्य शब्दं गृह्यत इति ग्रहणं ग्राह्यं वदन्ति । तद

नेन शब्द-श्रोत्रयोर्ग्राह्य-ग्राहकभाव उक्तोऽत एवाह-रागस्य हेतुं श्रोत्रं समनोज्ञं मनोज्ञशब्दविषयमाहुः । द्वेषस्यामनोज्ञशब्दविषयं हेतुमाहुर्ब्रुवते ॥ ३६ ॥

रागानुद्धरणे दोषमाह—

सद्देसु जो गिद्धिमुवेइ तिव्वं अकालियं पावइ से विणासं ।
रागाउरे हरिणमिए व मुद्धे सद्दे अतित्ते समुवेइ मच्चुं ॥ ३७ ॥

व्याख्या-शब्देषु यो गृद्धिं रागमित्यर्थः । तीव्रामुपैति सोऽकालिकमायुषोऽर्वागेव प्राप्नोति विनाशम् । रागातुरः सन् स 'हरिणमिए व'त्ति हरिणः प्रसिद्धो मृगः सर्वोऽपि पशुरुच्यते । हरिणश्चासौ मृगश्च हरिणमृग इव मुग्धोऽज्ञः शब्दे गौरीगीतात्मकेऽतृप्तस्तदाकृष्टचित्ततया मृत्युमुपैति ॥ ३७ ॥

द्वेषानुद्धरणे दोषमाह—

जे यावि दोसं समुवेइ निच्चं तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू न किंचि सद्दो अवरज्झई से ॥ ३८ ॥

व्याख्या-यश्चापि द्वेषं समुपैति शब्देषु नित्यं तस्मिन् क्षणे स दुःखं शारीराद्युपैति । इत्थं तर्हि शब्द एव दोष-

हेतुरित्याशङ्क्याह–'दुद्दंत'त्ति दुर्दान्तं श्रोत्रं तदेव दोषो दुर्दान्तदोषस्तेन स्वकीयेन जन्तु' प्राणी; न किञ्चिदमनोज्ञशब्दोऽपराध्यति दुष्यति 'से' तस्य ॥ ३८ ॥

द्वेषस्यानर्थमूलत्वात् तमाह—

एगतरत्तो रुइरसि सद्दे अतालिसे से कुणई पओसं ।

दुक्खस्स संपीडमुवेइ बाले न लिप्पई तेण मुणी विरागो ॥ ३९ ॥

व्याख्या–एकान्तरक्तो यो रुचिरे मनोहरे शब्दे । अताद्दशेऽरुचिरे स करोति प्रद्वेषम् । तथा दुःखस्य संपीडं संघातं समुपैति बालोऽज्ञ, न लिप्यते तेन द्वेषेण मुनिर्विरागो नीरागः ॥ ३९ ॥

रागस्यैव हिंसाद्याश्रवहेतुत्वमाह—

सद्दाणुयासाणुगए य जीवे चराचरे हिंसइ णेगरूवे ।

चित्तेहि तं परितावेइ बाले पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ४० ॥

व्याख्या–शब्दानुगा आशा शब्दविषयोऽभिलाष इत्यर्थः । तदनुगतश्च प्राणी जीवांश्चराचरान् त्रस–स्थावरान् हिनस्त्यनेकरूपान् । कांश्चित् चित्रैरनेकप्रकारैरुपायैः परितापयति दुःखयति बालोऽपरांश्च पीडयत्यात्मार्थं गुरुः स्वकार्यनिष्ठः क्लिष्टो रागवान् ॥ ४० ॥

अन्यच्च—

सद्दाणुवाएण परिग्गहेण उप्पायणे रक्खण-संनिओगे।
वए विओगे य कहं सुहं से संभोगकाले य अतित्तिलाभे ॥ ४१ ॥

व्याख्या—शब्दानुपातः शब्दानुरागस्तेन तथा परिग्रहेण मूर्च्छाऽऽत्मकेन; उत्पादने उपार्जने, रक्षणं चापायनिवारणं संनियोगश्च सम्यग् व्यापारणं रक्षण-संनियोगस्तस्मिन्, 'वए'त्ति व्यये विनाशे, वियोगे, 'अर्थाच्छब्दस्य' क्व सुखं ? 'से' तस्य जन्तोः सम्भोगकालेऽतृप्तिलाभः शब्दश्रवणे रागिणां न तृप्तिरिति भावः ॥ ४१ ॥

अपि च—

सद्दे अतित्ते य परिग्गहंमि सत्तोवसत्तो न उवेइ तुट्ठिं।
अतुट्ठिदोसेण दुही परस्स लोभाविले आययई अदत्तं ॥ ४२ ॥

व्याख्या—शब्देऽतृप्तः, परिग्रहे च सक्तः सामान्येन, उपसक्तश्च गाढमासक्तो नोपैति तुष्टिं सन्तोषम्। अतुष्टिदोषेण दुःखी स्यात्। परस्य सम्बन्धि शब्दवद् वस्तु वादित्रादि लोभाविलो लोभकलुष आदत्ते गृह्णात्यदत्तमिति ॥ ४२ ॥

तण्हाऽभिभूयस्स अदत्तहारिणो सद्दे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा तत्थावि दुक्खा न विमुच्चई से ॥ ४३ ॥

व्याख्या—तृष्णाऽभिभूतस्य अदत्तहारिणः शब्दे शब्दविषये य परिग्रहस्तस्मिन्नतृप्तस्य च 'मायामुसं' मायामृषा वर्धते लोभदोषात् । तत्रापि मायामृषाभाषणे दुःखान्न विमुच्यते स इति ॥ ४३ ॥

मोसस्स पच्छा य पुरत्थओ य पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाययंतो सद्दे अतित्तो दुहिओ अणिस्सो ॥ ४४ ॥

व्याख्या—मृषाया अलीकभाषणस्य, पश्चादिदं मया न सुसंस्थापितमुक्तमिति पश्चात्तापात्, पुरस्ताच्च कथमयं वञ्चनीयो मयेति, प्रयोगकाले च नासौ ममालीकभाषिता लक्षयतीति । दुरन्तो नरकादिप्राप्त्या भवति जन्तुर्दुःखी । एवमदत्तान्याददानः शब्देऽतृप्तः सन् दुःखितो भवति । कीदृक् ? अनिश्रः सर्वेषामुपेक्षणीयः ॥ ४४ ॥

निगमयन्नाह—

सद्दाणुरत्तस्स नरस्स एवं कत्तो सुहं हुज्ज कयाइ किंचि ? ।
तत्थोवभोगे वि किलेसदुक्खं निव्वत्तई जस्स कए ण दुक्खं ॥ ४५ ॥

व्याख्या–शब्दानुरक्तस्य नरस्यैवं कुतः सुखं कदाचित् किञ्चित् भवेत् ?। तत्र शब्दोपभोगेऽपि क्लेशदुःखं। निर्वर्तयत्युत्पादयति यस्येत्युपभोगस्य कृते दुःखम् 'आत्मन इति गम्यम्' ॥ ४५ ॥

अथ द्वेषस्यानर्थहेतुतामाह—

एमेव सद्दंमि गओ पओसं उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणेइ कम्मं जं से पुणो होइ दुहं विवागे ॥ ४६ ॥

व्याख्या—एवमेव यथाऽनुरक्तस्तथैव गतः शब्दे प्रद्वेषमुपैति दुःखौघपरम्पराः दुःखसमूहम्। तथा प्रद्विष्टचित्तश्चिनोति बध्नाति कर्म यत् 'से' तस्य पुनर्भवति दुःखं विपाकेऽनुभवकाले इह परत्र चेति भावः ॥ ४६ ॥

राग–द्वेषोद्धरणे गुणमाह—

सद्दे विरत्तो मणुओ विसोगो एएण दुक्खोहपरंपरेण ।
न लिप्पए भवमज्झे वि संतो जलेण वा पुक्खरिणीपलासं ॥ ४७ ॥

व्याख्या–शब्दे विरक्तः 'उपलक्षणादद्विष्टश्च' मनुजो मनुष्यो विशोकः शोकरहितः सन् एतेन दुःखौघपरम्परेण

न लिप्यते न स्पृश्यते भवमध्येऽपि सन् तिष्ठतीत्यर्थः । दृष्टान्तमाह—जलेनेव पुष्करिणीपलाशं पद्मिनीपत्रं 'जलमध्येऽपि सदिति शेषः' ॥ ४७ ॥ इति त्रयोदश सूत्राणि शब्दाभिलापेन लेशतो रूपवद् व्याख्यातानि ॥

घ्राणेन्द्रियमाश्रित्याह—

घाणस्स गध गहणं वयंति तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु समो य जो तेसु स वीयरागो ॥ ४८ ॥

व्याख्या—घ्राणस्य घ्राणेन्द्रियस्य गन्धं ग्रहणमाक्षेपकं वदन्ति । ततश्च त गन्ध मनोज्ञं कर्पूरादि, अमनोज्ञं लशुनादि । मनोज्ञेतरगन्धयोर्य समस्तुल्य. स वीतरागो वीतद्वेषश्च ॥ ४८ ॥

गंधस्स घाणं गहण वयंति घाणस्स गंधं गहणं वयंति ।
रागस्स हेउं समणुण्णमाहु दोसस्स हेउ अमणुन्नमाहु ॥ ४९ ॥

व्याख्या—गन्धस्य घ्राणं गृह्णातीति ग्रहणं ग्राहकं वदन्ति । घ्राणस्य गन्धं गृह्यते इति ग्रहणं ग्राह्यं वदन्ति । तदनेन घ्राण–गन्धयोर्ग्राह्यग्राहकभाव उक्तोऽत एवाह—रागस्य हेतुं घ्राणं समनोज्ञं मनोज्ञ–गन्धविषयमाहुः । द्वेषस्यामनोज्ञममनोज्ञगन्धविषयं हेतुमाहुर्ब्रुवते ॥ ४९ ॥

रागानुद्धरणे दोषमाह—

गंधस्स जो गिद्धिमुवेइ तिव्वं अकालियं पावइ से विणासं ।
रागाउरे ओसहिगंधगिद्धे सप्पे बिलाओ विव निक्खमंतो ॥ ५० ॥

व्याख्या–गन्धेषु यो गृद्धिं रागमित्यर्थः । तीव्रामुपैति सोऽकालिकमायुपोऽर्वागेव प्राप्नोति विनाशं । रागातुरः सन् ओषध्यो नागदमन्यादिकास्तासां गन्धस्तत्र गृद्धो गृद्धिमानोपधिगन्धगृद्धः सन् । 'सप्पे बिलाओ विव'त्ति 'इवशब्दस्य भिन्नक्रमत्वात्' सर्प इव बिलान्निष्क्रामन्, स ह्यत्यन्ततत्प्रियतया तद्गन्धं सोढुमशक्नुवन् बिलादभिनिष्क्रामतीति भावः ॥ ५० ॥

द्वेषानुद्धरणे दोषमाह—

जे आवि दोसं समुवेइ निच्चं तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू न किंचि गंधो अवरज्झई से ॥ ५१ ॥

व्याख्या–यश्चापि द्वेषं समुपैति गन्धेषु नित्यं 'तंसि क्खणे'त्ति तस्मिन् क्षणे स दुःखं शारीराद्युपैति । इत्थं

तर्हि गन्ध एव दोपहेतुरित्याशङ्क्याह—दुर्दान्तं घ्राणं तदेव दोपो दुर्दान्तदोपस्तेन स्वकीयेन जन्तुः प्राणी। न किञ्चिदमनोज्ञो गन्धोऽपराध्यति दुष्यति 'से' तस्य ॥ ५१ ॥

द्वेषस्यानर्थमूलत्वात् त्यागमाह—

एगतरत्तो रुइरंसि गंधे अतालिसे से कुणई पओसं ।
दुक्खस्स संपीडमुवेइ बाले न लिप्पई तेण मुणी विरागो ॥ ५२ ॥

व्याख्या—एकान्तरक्तो यो रुचिरे मनोहरे गन्धे, अतादृशे अन्यादृशे अरुचिरे गन्धे स करोति प्रद्वेपं, तथा दुःखस्य संपीडं सङ्घात समुपैति वालोऽज्ञः। न लिप्यते तेन द्वेपकृतदुःखेन मुनिर्विरागो नीराग ॥ ५२ ॥

रागस्यैव हिंसाद्याश्रवहेतुत्वमाह—

गंधाणुयासाणुगए य जीवे चराचरे हिंसइ णेगरूवे ।
चित्तेहि तं परितावेइ बाले पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ५३ ॥

व्याख्या—गन्धानुगाऽऽशा गन्धविपयोऽभिलाप इत्यर्थः। तदनुगतश्च जीवांश्चराचरान् त्रस—स्थावरान् हिनस्त्यनेकरूपान्। कांश्चित् तु चित्रैरनेकप्रकारैरुपायैः परितापयति दुःखयति वालोऽपरांश्च पीडयत्यात्मार्थं गुरुः स्वकार्यनिष्ठः क्लिष्टो रागवान् ॥ ५३ ॥

अन्यच्च—

गंधाणुवाएण परिग्गहेण उप्पायणे रक्खण-संनिओगे ।
वए विओगे य कहं सुहं से संभोगकाले य अतित्तलाभे ॥ ५४ ॥

व्याख्या-गन्धानुपातो गन्धानुरागस्तेन तथा परिग्रहेण मूर्च्छाऽऽत्मकेन; उत्पादने उपार्जने, रक्षणं चापायनिवारणं संनियोगश्च सम्यग् व्यापारणं रक्षण-संनियोगस्तस्मिन्, 'वए'त्ति व्यये विनाशे, वियोगे, 'अर्थाद् गन्धस्य', क्व सुखं ? 'से' तस्य जन्तोः सम्भोगकालेऽतृप्तलाभः, गन्धग्रहणे रागिणां न तृप्तिरिति भावः ॥ ५४ ॥

अपि च—

गंधे अतित्ते य परिग्गहंमि सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स लोभाविले आययई अदत्तं ॥ ५५ ॥

व्याख्या-गन्धे अतृप्तः परिग्रहे च सक्तः सामान्येन, उपसक्तश्च गाढमासक्तो नोपैति तुष्टिं सन्तोषम् । अतुष्टिदोषेण दुःखी स्यात् । परस्य सम्बन्धि गन्धवद्वस्तु कर्पूरादि लोभाविलो लोभकलुष आदत्ते गृह्णात्यदत्तमिति ॥ ५५ ॥

तण्हाऽभिभूयस्स अदत्तहारिणो गंधे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा तथावि दुक्खा न विमोक्खई से ॥ ५६ ॥

व्याख्या—तृष्णाऽभिभूतस्य अदत्तहारिणो गन्धे गन्धविषये यः परिग्रहस्तस्मिन्नतृप्तस्य च 'मायामोसं' मायामृषा वर्धते लोभदोषात् । तत्रापि मायामृषाभाषणे दुःखान्न विमुच्यते स इति ॥ ५६ ॥

मोसस्स पच्छा य पुरत्थओ य पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाययंतो गधे अतित्तो दुहिओ अणिस्सो ॥ ५७ ॥

व्याख्या—मृषाया अलीकभाषणस्य, पश्चादिदं मया न सुसंस्थापितमुक्तमिति पश्चात्तापात्, पुरस्ताच्च कथमयं वञ्चनीयो मयेति, प्रयोगकाले च नासौ ममालीकभाषितां लक्षयतीति, दुरन्तो नरकादिप्राप्त्या भवति जन्तुर्दुःखी । एवमदत्तान्याददानो गन्धेष्वतृप्तः सन् दुःखितो भवति । कीदृक् ? अनिश्रः सर्वेषामुपेक्षणीयः ॥ ५७ ॥

निगमयन्नाह—

गधाणुरत्तस्स नरस्स एवं कत्तो सुहं हुज्ज कयाइ किंचि ? ।
तत्थोवभोगे वि किलेसदुक्ख निव्वत्तई जस्स कए ण दुक्ख ॥ ५८ ॥

व्याख्या—गन्धानुरक्तस्य नरस्यैवं कुतः सुखं कदाचित् किञ्चित् भवेत्?। तत्र गन्धोपभोगेऽपि क्लेशदुःखं। निर्वर्तयत्युत्पादयति यस्येत्युपभोगस्य कृते दुःखम् 'आत्मन इति गम्यम्' ॥ ५८ ॥

अथ द्वेषस्यानर्थहेतुतामाह—

एमेव गंधंमि गओ पओसं उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणेइ कम्मं जं से पुणो होइ दुहं विवागे ॥ ५९ ॥

व्याख्या—एवमेव यथाऽनुरक्तस्तथैव गतो गन्धे प्रद्वेषमुपैति दुःखौघपरम्पराः दुःखसमूहम्। तथा प्रद्विष्टचित्तश्च चिनोति वध्नाति कर्म यत् 'से' तस्य पुनर्भवति दुःखं विपाकेऽनुभवकाले इह परत्र चेति भावः ॥ ५९ ॥

राग-द्वेषोद्धरणे गुणमाह—

गंधे विरत्तो मणुओ विसोगे एएण दुक्खोहपरंपरेण ।
न लिप्पए भवमज्झे वि संतो जलेण वा पुक्खरिणीपलासं ॥ ६० ॥

व्याख्या—गन्धे विरक्तः 'उपलक्षणादद्विष्टश्च' मनुजो मनुष्यो विशोकः शोकरहितः सन्। एतेन दुःखौघपरम्परेण

न लिप्यते न स्पृश्यते भवमध्येऽपि सन् तिष्ठन्नित्यर्थः । दृष्टान्तमाह–जलेनेव पुष्करिणीपलाशं पद्मिनीपत्रं 'जलमध्ये सदिति शेषः' ॥ ६० ॥ इति त्रयोदश सूत्राणि गन्धाभिलापेन लेशतो व्याख्यातानि ॥

अथ रसनेन्द्रियमाश्रित्याह—

जीहाए रसं गहण वयंति तं रागहेउ तु मणुन्नमाहु ।
तं दोसहेउ अमणुन्नमाहु समो य जो तेसु स वीयरागो ॥ ६१ ॥
रसस्स जीहा गहणं वयति जिब्भाए रस गहणं वयंति ।
तं रागहेउ समणुन्नमाहु दोसस्स हेउ अमणुन्नमाहु ॥ ६२ ॥
रसस्स जो गिद्धिमुवेइ तिव्व अकालियं पावइ से विणासं ।
रागाउरे विडिसविभिन्नकाए मच्छे जहा आमिसभोगगिद्धे ॥ ६३ ॥
जे आवि दोस समुवेइ निच्च तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दतदोसेण सएण जतू रसं न किंची अवरज्झई से ॥ ६४ ॥

एगंतरत्तो रुइरे रसंमि अतालिसे से कुणई पओसं ।
दुक्खस्स संपीडमुवेइ बाले न लिप्पई तेण मुणी विरागो ॥ ६५ ॥
रसाणुयासाणुगए य जीवे चराचरे हिंसइ णेगरूवे ।
चित्तेहिं तं परितावेइ बाले पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ६६ ॥
रसाणुवाएण परिग्गहेण उप्पायणे रक्खण—संनिओगे ।
वए विओगे य कहं सुहं से संभोगकाले य अतित्तलाभे ॥ ६७ ॥
रसे अतित्ते य परिग्गहंमि सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स लोभाविले आययई अदत्तं ॥ ६८ ॥
तण्हाऽभिभूयस्स अदत्तहारिणो रसे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा तत्थावि दुक्खा न विमोक्खई से ॥ ६९ ॥
मोसस्स पच्छा य पुरत्थओ य पओगकाले य दुही दुरंते ।

एवं अदत्ताणि समाययंतो रसे अतित्तो दुहिओ अणिस्सो ॥ ७० ॥
रसाणुरत्तस्स नरस्स एवं कत्तो सुह हुज्ज कयाइ किंचि ? ।
तत्थोवभोगे वि किलेसदुक्ख निव्वत्तई जस्स कए ण दुक्ख ॥ ७१ ॥
एमेव रसम्मि गओ पओस उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणेइ कम्मं ज से पुणो होइ दुह विवागे ॥ ७२ ॥
रसे विरत्तो मणुओ विसोगो एएण दुक्खोहपरंपरेण ।
न लिप्पए भवमज्झे वि सतो जलेण वा पुक्खरिणीपलासं ॥ ७३ ॥

एतान्यपि त्रयोदश सूत्राणि गन्धवद् रसाभिलापेन व्याख्येयानि । नवर जिह्वाया जिह्वेन्द्रियस्य रस्यते आस्वाद्यते इति रसस्त मनोज्ञ मधुरादिकममनोज्ञ कटुकादि ॥ तथा बिडिश प्रान्तन्यस्तामिषो लोहकीलकस्तेन विभिन्नकायो विदारिताङ्गो बिडिशविभिन्नकायो मत्स्यो यथाऽऽमिषस्य मासादेर्भोगोऽभ्यवहारस्तत्र गृद्ध आमिषभोगगृद्ध. ॥ ६१–७३ ॥

अथ स्पर्शनेन्द्रियमाश्रित्याह—

कायस्स फासं गहणं वयंति तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु समो य जो तेसु स वीयरागो ॥ ७४ ॥
फासस्स कायं गहणं वयंति कायस्स फासं गहणं वयंति ।
रागस्स हेउं समणुन्नमाहु दोसस्स हेउं अमणुन्नमाहु ॥ ७५ ॥
फासस्स जो गिद्धिमुवेइ तिव्वं अकालियं पावइ से विणासं ।
रागाउरे सीयजलावसन्ने गाहग्गहीए महिसे व रन्ने ॥ ७६ ॥
जे आवि दोसं समुवेइ निच्चं तंसि क्खणे से उ उवेइ दुक्खं ।
दुद्दंतदोसेण सएण जंतू न किंचि फासं अवरज्झई से ॥ ७७ ॥
एगंतरत्तो रुइरंसि फासे अतालिसे से कुणई पओसं ।
दुक्खस्स संपीडमुवेइ बाले न लिप्पई तेण मुणी विरागो ॥ ७८ ॥

फासाणुगासाणुगए य जीवे चराचरे हिंसइ णेगरूवे ।
चित्तेहि तं परितावेइ वाले पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ७९ ॥
फासाणुवाएण परिग्गहेण उप्पायणे रक्खण–संनिओगे ।
वए विओगे य कहं सुहं से संभोगकाले य अतित्तलाभे ॥ ८० ॥
फासे अतित्ते य परिग्गहमि सत्तोवसत्तो न उवेइ तुट्ठि ।
अतुट्ठिदोसेण दुही परस्स लोभाविले आययई अदत्तं ॥ ८१ ॥
तण्हाऽभिभूयस्स अदत्तहारिणो फासे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा तत्थावि दुक्खा न विमोक्खई से ॥ ८२ ॥
मोसस्स पच्छा य पुरत्थओ य पओगकाले अ दुही दुरंते ।
एव अदत्ताणि समाययतो फासे अतित्तो दुहिओ अणिस्सो ॥ ८३ ॥
फासाणुरत्तस्स नरस्स एव कत्तो सुहं हुज्ज कयाइ किंचि ? ।

तत्थोवभोगे वि किलेसदुक्खं निव्वत्तई जस्स कए ण दुक्खं ॥ ८४ ॥
एमेव फासंमि गओ पओसं उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणेइ कम्मं जं से पुणो होइ दुहं विवागे ॥ ८५ ॥
फासे विरत्तो मणुओ विसोगो एएण दुक्खोहपरंपरेण ।
न लिप्पए भवमज्झे वि संतो जलेण वा पुक्खरिणीपलासं ॥ ८६ ॥

एतान्यपि त्रयोदश सूत्राणि स्पर्शाभिलापेन व्याख्येयानि पूर्ववत्। काय इह स्पर्शनेन्द्रियम्, सर्वाङ्गगतत्वख्यापनार्थं चास्यैवमुक्तं तस्य कायस्य । स्पृशत इति स्पर्शस्तं मनोज्ञं मृदुप्रभृतिममनोज्ञं कर्कशादि ॥ तथा शीतं शीतस्पर्शवज्जलं तत्रावसन्नोऽवमग्नः शीतजलावसन्नो ग्राहैर्जलचरविशेषैर्गृहीतः क्रोडीकृतो महिष इवारण्ये, ग्रामादौ हि कदाचित् केनचिन्मोच्येतापीत्यरण्यग्रहणम् ॥ ७४–८६ ॥

मन आश्रित्याह—

मणस्स भावं गहणं वयंति तं रागहेउं तु मणुन्नमाहु ।
तं दोसहेउं अमणुन्नमाहु समो य जो तेसु स वीयरागो ॥ ८७ ॥

भावस्स मणं गहणं वयति मणस्स भावं गहणं वयति ।
रागस्स हेउ समणुन्नमाहु दोसस्स हेउ अमणुन्नमाहु ॥ ८८ ॥
भावस्स जो गिद्धिमुवेइ तिव्व अकालियं पावइ से विणासं ।
रागाउरे कामगुणेसु गिद्धे करेणुमग्गावहिए व नागे ॥ ८९ ॥
जे यावि दोस समुवेइ निच्च तंसि क्खणे से उ उवेइ दुक्ख ।
दुद्दतदोसेण सएण जतू न किंचि भावं अवरज्झई से ॥ ९० ॥
एगतरत्तो रुइरंसि भावे अतालिसे से कुणई पओस ।
दुक्खस्स संपीडमुवेइ बाले न लिप्पई तेण मुणी विरागो ॥ ९१ ॥
भावाणुगासाणुगए य जीवे चराचरे हिंसइ णेगरूवे ।
चित्तेहि त परितावेइ बाले पीलेइ अत्तट्ठ गुरू किलिट्ठे ॥ ९२ ॥
भावाणुवाएण परिग्गहेण उप्पायणे रक्खण—सनिओगे ।

वए विओगे य कहं सुहं से संभोगकाले य अतित्तलाभे ॥ ९३ ॥
भावे अतित्ते य परिग्गहंमि सत्तोवसत्तो न उवेइ तुट्ठिं ।
अतुट्ठिदोसेण दुही परस्स लोभाविले आययई अदत्तं ॥ ९४ ॥
तण्हाऽभिभूयस्स अदत्तहारिणो भावे अतित्तस्स परिग्गहे य ।
मायामुसं वड्ढइ लोभदोसा तत्थावि दुक्खा न विमोक्खई से ॥ ९५ ॥
मोसस्स पच्छा य पुरत्थओ य पओगकाले य दुही दुरंते ।
एवं अदत्ताणि समाययंतो भावे अतित्तो दुहिओ अणिस्सो ॥ ९६ ॥
भावाणुरत्तस्स नरस्स एवं कत्तो सुहं हुज्ज कयाइ किंचि ? ।
तत्थोवभोगे वि किलेसदुक्खं निव्वत्तई जस्स कए ण दुक्खं ॥ ९७ ॥
एमेव भावंमि गओ पओसं उवेइ दुक्खोहपरंपराओ ।
पदुट्ठचित्तो य चिणेइ कम्मं जं से पुणो होइ दुहं विवागो ॥ ९८ ॥

भावे विरत्तो मणुओ विसोगो एएण दुक्खोहपरंपरेण ।
न लिप्पई भवमज्झे वि सतो जलेण वा पुक्खरिणीपलासं ॥ ९९ ॥

एतदपि सूत्रत्रयोदशकं भावाभिलापेन रूपवद् व्याख्येयम्, नवरं मनसश्चेतसो भावोऽभिप्रायः स चेह स्मृतिगोचरस्त ग्रहणं ग्राह्य यदन्तीन्द्रियाविषयत्वात् तस्य, मनोज्ञं मनोज्ञरूपादिविषयममनोज्ञं तद्विपरीतविषयमेव ॥ कामगुणेषु मनोज्ञरूपादिषु गृद्ध आसक्त 'करेणुमग्गावहिए व नागे'त्ति करेण्वा करिण्या हस्तिन्या मार्गेण निजपथेनापहृत आकृष्टः करेणुमार्गापहृतो नाग इव हस्तीव । स हि मदान्धोऽदूरवर्तिनीं करिणीमुपदर्श्य तद्रूपादिमोहितस्तन्मार्गानुगामितया च गृह्यते सङ्ग्रामादिषु च विनाशमाप्नोतीति। ननु चक्षुरादीन्द्रियवशादेव गजस्य प्रवृत्तिस्तत् कथमस्यात्र भावविषये दृष्टान्तत्वेनाभिधानम्? उच्यते, एवमेतत्, मनःप्राधान्यविवक्षया तन्नेयम्, अथवा तथाविधकामदशायां चक्षुरादीन्द्रियव्यापाराभावेऽपि मनसः प्रवृत्तिरिति न दोषः । कामस्य मनस एवोत्पादादिति भावः ॥ ८७-९९ ॥

उक्तमेवार्थमुपसंहरन्नाह—

एविंदियत्था य मणस्स अत्था दुक्खस्स हेऊ मणुयस्स रागिणो ।
ते चेव थोवं पि कयाइ दुक्ख न वीयरागस्स करेंति किंचि ॥ १०० ॥

व्याख्या—एवमुक्तन्यायेनेन्द्रियार्थाश्चक्षुरादिविषया रूपादयः 'चशब्दो भिन्नक्रमः' ततो मनसोऽर्थाश्च स्मृत्यादिभावाः

'उपलक्षणादिन्द्रियाणि मनांसि च' दुःखस्य हेतवो मनुजस्य रागिणः 'उपलक्षणत्वाद् द्वेषिणश्च' । ते चैवेन्द्रिय-मनोऽर्थाः स्तोकमपि कदाचिद् दुःखं न वीतरागस्य विगतराग-द्वेषस्य कुर्वन्ति किञ्चिदिति शारीरं मानसं वेति ॥ अथात्रार्थे दृष्टान्तः—

जितेन्द्रियो वीतरागो यो नैव विषयोन्मुखः । अश्नुतेऽसौ सदा सौख्यं यथा स जिनपालकः ॥ १ ॥
यश्चेन्द्रियवशो रागानुविद्धो विषयार्दितः । आस्पदं विपदामेष स्याद् यथा जिनरक्षितः ॥ २ ॥
तथाहि—अङ्गेष्वस्ति पुरी चम्पा प्रत्नरत्नकृतालया । नापेक्षते दशाकर्षं जनता यत्र निश्यपि ॥ ३ ॥
माकन्दः कमलापिक्या माकन्दीत्याख्ययाऽजनि । आश्रितानां रमाकन्दः सार्थवाहः पुराग्रणीः ॥ ४ ॥
लक्ष्म्या निःपुण्यतोपाधिकृतां चपलतामसौ । पुण्यपुण्यस्थिरश्रीको धनदर्द्धिर्व्यपाकरोत् ॥ ५ ॥
अभूतां द्वौ सुतौ तस्य रूपिणावर्कजाविव । जिनपालित इत्याद्यः परस्तु जिनरक्षितः ॥ ६ ॥
गत्वैकादशकृत्वस्तौ पयोधिं वाहनस्थितौ । समर्ज्य धनमायातौ निरुपद्रवमालयम् ॥ ७ ॥
पुण्यतत्तृष्णाऽतिरेकेण पोतारूढौ पुनर्गतौ । भग्नपोतौ तटं लब्धफलकावम्बुधेः श्रितौ ॥ ८ ॥
ततः प्राविशतां द्वीपं रत्नद्वीपमिमौ क्रमात् । रत्नाङ्कुरप्रभाचक्रप्रकाशितकुतूहलम् ॥ ९ ॥
चतुर्वनयुतस्तत्र घटितो रत्नराशिभिः । अभ्रलग्नः प्रभापुञ्ज इवास्ते देवताऽऽलयः ॥ १० ॥

उवास सततं तत्र रत्नद्वीपाधिदेवता । साहसैकनिधि: पापाद् दुष्टान्तःकरणाऽङ्गिषु ॥ ११ ॥
प्राणवृत्तिं विधायैतौ पयोभि: सरसै: फलै: । तद्दूरमहीदेशे सनिविष्टौ शिलातले ॥ १२ ॥
क्व तद् गृह क्व सा लक्ष्मी क्व स तात क्व सा प्रसू । सर्वैरेकपदे धात्रा पापादावां वियोजितौ ॥ १३ ॥
इति चिन्तापरौ यावत् तत्रास्थातामिमौ क्षणम् । तावत् सा देवता व्योम्नि प्रादुर्भूयेत्यभाषत ॥ १४ ॥
रे ! भुञ्जेथां मया भोगान् प्रासादेऽमुत्र मामके । असिना कर्तयिष्यामि युवयोरन्यथा शिर: ॥ १५ ॥
मदानुकूल्योद्यतयोर्दुर्लभा वां न सम्पद: । कुर्वतो: प्रातिकूल्यं मां ध्रुवा विपद एव हि ॥ १६ ॥
ये सम्प्राप्य मणिद्वीपमेतन्मामवजानते । निषेधयन्ति दण्डेन विशन्ती ते गृहे रमाम् ॥ १७ ॥
तस्या विभीत्सरूपेण वचोभिरतिकर्कशैः । भीताभ्यां तद्वचोऽमानि रोगिभिर्वैद्यवागिव ॥ १८ ॥
उत्क्षिप्य सा ततोऽनैषीदन्त:प्रासादमाशु तौ । अहार्षीच्च तयो शक्त्या शरीराशुभपुद्गलान् ॥ १९ ॥
अभुङ्क्त विपुलान् भोगास्ताभ्यामेषा निरन्तरम् । वनामृतफलैर्नित्यानुरक्ता तावतर्पयत् ॥ २० ॥
कियत्यपि गते काले तावित्यभिहितौ तया । सुस्थितं लवणाधीश शक्रोऽद्येद समादिशत् ॥ २१ ॥
शोध्योऽब्धिरित्यतस्तेन तथा कार्यं मया सह । एकविंशतिमाक्रम्यो वारानेषोऽतिशुद्धये ॥ २२ ॥
तृणावकर-पत्रौघ-काष्ठादि निखिल ततः । आहत्य तत्तटे क्षेप्यमसादादियुजाऽमुना ॥ २३ ॥

विधाय तदिदं यावदहमत्रैमि हे प्रियौ ! । भवन्तौ तावदत्रैव प्रासादे तिष्ठतां मुदा ॥ २४ ॥
कदाचिदरतौ कान्तौ ! यियासायां वहिर्युवाम् । यातमौदीच्य–पौरस्त्य–प्रातीच्योद्यानपङ्क्तिषु ॥ २५ ॥
एकैकस्मिन् वने तत्र मनोहरमृतुद्वयम् । अस्ति सर्वर्तुकं शर्मानुभवेतं तदन्तराम् ॥ २६ ॥
आपाच्ये तु न गन्तव्यं वने कथमपि प्रियौ ! । अवश्यं तत्र गतयोर्विनिपातो भविष्यति ॥ २७ ॥
इत्थं सा तौ दृढीकृत्य जगामाम्भोधिशुद्धये । क्षणं स्थित्वा वनं प्राच्यं जग्मतुश्च दिदृक्षया ॥ २८ ॥
उद्भिन्नकन्दलां तत्र फुल्लत्केतकजातिकाम् । सरसां प्रावृषं वीक्ष्य प्रमोदं चित्रमापतुः ॥ २९ ॥
शरदीव रवेरिन्दोर्जलस्यापि प्रसन्नताम् । सरांसि फुल्लपद्मानि वीक्षाते तत्र विस्मितौ ॥ ३० ॥
ऋतुद्वयसमायोगजनितां तां वनश्रियम् । वीक्ष्यौत्तराऽपि सा दृश्येत्ययातां तत्र तावथ ॥ ३१ ॥
दृष्ट्वा शीतयवस्तम्वान् कान्दमाघ्राय सौरभम् । हेमन्त–शिशिरप्राप्यं तत्रानन्दमवापताम् ॥ ३२ ॥
प्रातीच्ये कानने चूतमञ्जर्यामोदमोदिनः । निरीक्ष्यास्मरतां भृङ्गान् वियोगार्तें स्ववल्लभे ॥ ३३ ॥
तत्रोपभुज्य पक्काम्रफलानि दयिताकुचैः । तुल्यानि सुरभिग्रीष्मलीलामकुरुतां क्षणम् ॥ ३४ ॥
तादृक्कुतूहलाक्षेपाद् विस्मृते तन्निवारणे । आपाच्येऽविशतां यावदुद्याने रभसैव तौ ॥ ३५ ॥
तावत् प्राप्यातिदुर्गन्धिमभिभूतौ पुरोगतौ । तत्राकर्णयतां दीनं कस्यचित् करुणस्वरम् ॥ ३६ ॥

किञ्चित् तदनुसारेण व्रजन्त प्रेतभूमिगम् । शूलाऽऽरोपितमालोक्य क्रन्दन्तं नरमाहतु ॥ ३७ ॥
कस्त्व कथमिहायात. शूलाया कथमर्पित. ? । अस्थिभि किमसौ पृथ्वी च्छन्ना दुर्गन्धभूरिभि· ? ॥ ३८ ॥
केनेदमतिरौद्रेण देवेनाधिष्ठितं पदम् ? । अस्मच्चित्तेऽतिभीस्तस्मात् सर्वं सद्यो निवेद्यताम् ॥ ३९ ॥
आख्यत् सगद्गद सोऽथ काकन्दीतोऽहमम्बुधौ । निर्भिन्नवहनो लब्धफलकोऽत्रागम क्रमात् ॥ ४० ॥
एतद्देवतया भोगा मया भुक्ताश्च रक्तया । अन्यदाऽऽगसि तुच्छेऽपि शूलाया मामसौ न्यधात् ॥ ४१ ॥
एवमेवानयाऽन्येऽपि नैकेऽमार्यन्त दुष्टया । तेषामस्थ्नामियं श्रेणिरत्र श्वभ्रनिभे पदे ॥ ४२ ॥
आवाभ्या न भवान् दृष्टस्तत्प्रासादे कदाचन । तत्कालरोपित इव शूलाया लक्ष्यसे कथम् ? ॥ ४३ ॥
तयोर्वच इति श्रुत्वा सोऽवग् ननु दुराशया । नैकानि भोगवेश्मानि कुरुतेऽथ हरत्यपि ॥ ४४ ॥
कैश्चिद् यथेच्छ रमते कदाचित् कचिदप्यसौ । विश्वासघातनिरता हन्यात् कांश्चिदपि क्षणात् ॥ ४५ ॥
ताभ्या ततोऽतिभीताभ्या तत्पुरोऽकथि हा ! कथम् ? । सङ्कटे पतितावावा भविता नावपीदृशम् ॥ ४६ ॥
त्व तु कर्मवशान्मित्र ! प्रासः प्राणान्तिकी दशाम् । यदि वेत्सि ततो ब्रूहि निस्तारोपायमावयो· ॥ ४७ ॥
ततोऽसौ प्राह नन्वस्या वशे ये पतिता जना· । तेषा न क्लेशतो मोक्षो हिंसकानामिवाङ्गिनाम् ॥ ४८ ॥
तथापि शृणुतं प्राच्योद्याने दु·स्थितवत्सल' । रूपवान् शैलको यक्षो नित्यमास्ते क्षमानिधि· ॥ ४९ ॥

चतुर्दश्यादिपर्वाहेष्वसावुद्घोषयत्वदः । यस्तार्यः प्रतिपाल्यो वा स द्राग् मामुपतिष्ठताम् ॥ ५० ॥
युवाभ्यामपि तद् वाच्यमावां तारय पालय । स तद् वां वचनं श्रुत्वा सर्वं स्वास्थ्यं करिष्यति ॥ ५१ ॥
गूढेन वा प्रमूढेन नानुष्ठितमदो मया । भवद्भ्यां पुनरुद्यम्य स सेव्यः सौख्यकाङ्क्षया ॥ ५२ ॥
तद्वागमृतमापीय गत्वा तस्मिन्नुभावपि । स्नात्वा पवित्रौ पद्मानि लात्वाऽऽनर्चतुराशु तम् ॥ ५३ ॥
भक्त्या नत्वा मुदा स्तुत्वा विनीतौ पर्युपासताम् । तदानीमन्यदा तादृग् वचः श्रुत्वेत्यवोचताम् ॥ ५४ ॥
तार्यौ पाल्यौ जनावेतावाशु तारय पालय । त्वां विनाऽन्यो न नौ प्रार्थ्यः शरणं चेह सम्प्रति ॥ ५५ ॥
यक्षेणोचे करोम्येतत् पृष्टिमारोप्य वामहम् । तारयामि महाम्भोधिं प्रापयामि रयात् पुरीम् ॥ ५६ ॥
किन्तु मत्पृष्टिमारूढौ युवां दृष्ट्वा दुराशया । प्रतिकूलानुकूलैः सा निश्चितं क्षोभयिष्यति ॥ ५७ ॥
मनागपि मनोरागं यदि तस्यां धरिष्यथः । पृष्ठतः पातयित्वा वां ततः क्षेप्ताऽहमम्बुधौ ॥ ५८ ॥
उपेक्ष्य सर्वथा चेत् तां द्रक्ष्यथो न मनागपि । ततो नयामि निर्विघ्नमभीप्सितपदं युवाम् ॥ ५९ ॥
अथैतावूचतुर्नम्रौ भवद्भिर्वभणे यथा । तथैवावां करिष्यावः स्वार्थभ्रंशं करोति कः ? ॥ ६० ॥
विकृत्याऽऽश्वं ततो रूपं पृष्टावारोप्य नीरधौ । यक्षश्चचाल वेगेन यावत् तन्मध्यमागमत् ॥ ६१ ॥
तावत् संशोध्य सा वार्धिं जगाम निजमाश्रयम् । सम्भ्रान्ता तावपश्यन्ती प्रायुङ्क्त च रुपाऽवधिम् ॥ ६२ ॥

तत्र तौ वीक्ष्य सर्वाङ्गमाश्लिष्टा रोषराक्षसा । तदुपान्तमथागत्य साक्षेपमिदमब्रवीत् ॥ ६३ ॥
रे रे ! मां प्रोज्झ्य चलितौ शैलकेन दुरात्मना । विदितं न किमद्यापि मुग्धौ ! वां चरितं मम ? ॥ ६४ ॥
अरे ! त्यक्त्वैनमद्यापि पुनर्मां श्रयतं द्रुतम् । मत्कृपाणदशाकर्षे मा यातं भो ! पतङ्गताम् ॥ ६५ ॥
रे ! मार्गे शरणं गत्वा व्याघ्रभीतो मुच्यते कथम् ? । सवाताभिपतद्वह्नेर्नाधितृण्यं त्रुटिर्भवेत् ॥ ६६ ॥
क्षमा कष्टुमहं जन्तु रे ! कृतान्तमुखादपि । शैलकं शरणं कृत्वा निर्भीकाविव किं युवाम् ? ॥ ६७ ॥
इत्येवं निष्ठुरोक्त्याऽपि भीतौ यावदमू नहि । ततः क्षोभयितुं वाक्यैरनुकूलैरुपाक्रमत् ॥ ६८ ॥
हहो ! वां निष्ठुरं चेतः कठिनं शैलतोऽपि हि । यदेव त्यज्यते भावानुरक्तो लीलया जनः ॥ ६९ ॥
सम्भावितो युवाभ्यां चेदपराधोऽस्ति कश्चन । वाच्योऽयमन्यथा त्यागः कथं निर्हेतुकः कृतः ? ॥ ७० ॥
सस्नेहमधुरालापान् सरसक्रीडितानि च । विस्मार्यैकपदे कान्तौ ! त्यक्त्वा मां चलितौ हहा ! ॥ ७१ ॥
कान्तौ ! प्रसद्य दुर्वारमाराग्निकवलीकृतम् । सद्यः शमयतं मेऽङ्गं सङ्गशीतलवारिणा ॥ ७२ ॥
एवं कृतेऽपि संरम्भे तयोरक्षुभ्यतोरसौ । प्रयुज्यावधिमज्ञासीत् सुक्षोभ्यो जिनरक्षितः ॥ ७३ ॥
तमुद्दिश्य ततोऽभाणीत् त्वमेवाभूर्मम प्रियः । त्वयैव सह सद्भावरतिसौख्यं ममाजनि ॥ ७४ ॥
स्वभावेनाविदग्धात्मा न प्रियो जिनपालितः । प्रागल्भ्यभून्ममानेन न हि सद्भावजा रतिः ॥ ७५ ॥

न मे प्रतिवचो दत्ते यद्यसौ मा ददातु तत् । नेदं प्रिय ! तव न्याय्यं प्राणादप्यधिकस्य मे ॥ ७६ ॥
पाल्येन प्रतिपन्नस्य यदि युष्मादृशामपि । न प्रयत्नस्तदा नूनममर्यादमिदं जगत् ॥ ७७ ॥
त्वद्विप्रयोगनैदाघतापान्मे हृदयावनिः । समाधिनीरशोषेण स्फुटतीव स्फुटं प्रिय ! ॥ ७८ ॥
अथैषा कौसुमीं वृष्टिं पुष्टां कृत्वाऽधितच्छिरः । श्रावयन्ती श्रवःशर्मकारिणो भूषणारवान् ॥ ७९ ॥
ससम्भ्रमं सनिर्वेदं भूयोऽभाणीत् स्खलद्गिरा । जिनरक्षित ! हा नाथ ! व्रजन्मे पाहि जीवितम् ॥ ८० ॥
किमिदं निष्ठुरं वक्षस्तव दैवेन निर्ममे ? । आज्ञाकारी जनः प्राणान् सन्त्यजन् यदुपेक्ष्यते ॥ ८१ ॥
प्राणान(द)तिविशिष्टोऽसौ त्वादृशश्चेत् प्रियो जनः । त्यक्त्वा चचाल पर्यासं प्राणितेनामुना ततः ॥ ८२ ॥
प्रत्यागच्छैकदा गेहमपराद्धं च यन्मया । तत् क्षमस्व न वै प्रीतौ वैरस्यं कुरुते ततः ॥ ८३ ॥
तवालापपरीरम्भसम्पदः सन्तु दूरतः । दृष्टेऽप्यहं तवास्याब्जे भवाम्युज्जीवितेव भोः ! ॥ ८४ ॥
पश्य पश्यैकदा तावत् परावृत्त्य मुखाम्बुजम् । दर्शनामृतपानेन तस्मां मां सुखिनीं कुरु ॥ ८५ ॥
एवं स्पष्टीकृतस्नेहं सुविदग्धं मनोहरम् । प्रम्लानमदनाङ्कुरपुनरुज्जीवनाम्बुदम् ॥ ८६ ॥
अन्तःकपटसंटङ्कं बहिर्माधुर्यबन्धुरम् । तदाकर्ण्य वचस्तस्या अलङ्काराखानपि ॥ ८७ ॥
आघ्राय सौरभं पौष्पं चान्दनं तद्वपुर्गतम् । स्मृत्वा च क्रीडितं पूर्वं ग्राम्यवन्मूढमानसः ॥ ८८ ॥

विस्मृत्य सकलं शूलाऽऽरोपितस्य हितं वचः । स्वयं दृष्टान्तितदु खान्यविमर्श्य शयालुवत् ॥ ८९ ॥
विगणय्य क्षणाच्छिक्षा शैलकेन स्फुटीकृताम् । व्यालुलोकेऽभितत् कामविद्धो द्राग् जिनरक्षितः ॥ ९० ॥
इन्द्रियाणामहो ! कश्चिद् विकारो वचनातिग । यद्वशश्चिन्तयेन्नैव भाव्यपायपरम्पराम् ॥ ९१ ॥
शैलकस्त तथा ज्ञात्वा निजपृष्ठाद् व्यधूनयत् । पतन्त तं त्रिशूलेन सा प्रत्यैच्छद् दुरात्मिका ॥ ९२ ॥
रे रे ! मृतोऽधुना यासि कुत्र त्राण गवेषय । मत्त्यागफलमादत्स्व निर्वदन्तीति निष्ठुरम् ॥ ९३ ॥
उछाल्य गगने प्रोच्चैर्गृहीत्वा निशितासिना । रसन्तं खण्डश. कृत्वा भूतेभ्यो बलिमक्षिपत् ॥ ९४ ॥
हृष्टयाऽथ तया ज्येष्ठ उपासृज्यत नैकधा । तथैव तं परं न चाक्षुभद् वायुरिवाचलम् ॥ ९५ ॥
श्रान्ता प्रत्यगमत् क्षुद्रदेवताऽथ स्वमाश्रयम् । शैलकोऽपि च तं चम्पामनयज्जिनपालितम् ॥ ९६ ॥
मातापित्रो' सुताध्वानं नित्यं संवीक्ष्यमाणयो. । मिलितो जगदे जैनरक्षितोदन्तमप्ययम् ॥ ९७ ॥
तत्प्रेतकर्मणि कृते पितृभि सोऽप्यशोचनः । क्रमशोऽन्योऽन्यनिर्बाधं पुरुषार्थानसाधयत् ॥ ९८ ॥
श्रीवीरवदनाद् धर्मं श्रुत्वा वैराग्यरञ्जित. । प्रव्रज्यैकादशाङ्गज्ञः सौधर्मे त्रिदशोऽभवत् ॥ ९९ ॥
च्युत्वा पूर्णायुरुत्पद्य विदेहेषु शुभे कुले । अङ्गीकृतव्रत. सिद्धिं याता स जिनपालित. ॥ १०० ॥

यत् सम्पत्पात्रमाद्योऽभूत् कष्टवांश्च कनिष्ठकः । जितजितान्यवैश्चत्र हृषीकाण्येव कारणम् ॥ १०१ ॥
लाभार्थौ वणिजौ सुखैकमनसौ जीवाः, भवो नीरधि-र्देवी चाविरतिर्निबन्धनमसत् सर्वेन्द्रियोत्थापदाम् ।
शूलास्थः पुरुषो हितावहगुरुः, यक्षेशपृष्ठिर्व्रतं, स्थैर्यं च क्रमवृद्धि शर्म, समयादित्यन्वयः साध्यताम् ॥१०२॥

॥ इति इन्द्रियफले कथा ॥ १०० ॥

किञ्च—

न कामभोगा समयं उवेंति न यावि भोगा विगइं उविंति ।
जे तप्पओसी य परिग्गही य सो तेसु मोहा विगइं उवेइ ॥ १०१ ॥

व्याख्या—न नैव कामभोगाः समतां राग-द्वेषाभावरूपामुपयान्त्युपगच्छन्ति 'हेतुत्वेनेति गम्यम्' तद्धेतुत्वे हि तेषां न कश्चिद् राग-द्वेषवान् स्याद् । न चापि भोगाः शब्दादयो भुज्यमानतया विकृतिं क्रोधादिरूपाम् 'इहापि हेतुत्वेन [ इति गम्यम् ]' उपयान्ति, अन्यथा न कश्चिद् रागद्वेषरहितः स्यात् । तर्हि कोऽनयोर्हेतुरित्याह—यस्तत्प्रदोषी च तेष्वपि विषयेषु प्रद्वेषवान्, परिग्रही च परिग्रहबुद्धिमांस्तेष्वेव रागीत्युक्तं भवति स तेषु विषयेषु मोहाद् राग-द्वेषात्मकान्मोहनीयाद् विकृतिमुपैति । राग-द्वेषरहितस्तु समतामित्यर्थादुक्तमिति ॥ १०१ ॥

किंखरूपा विकृति' ? या राग–द्वेषवशादुपैतीत्याह—

कोह च माण च तहेव मायं लोभं दुगछ अरइ रइं च ।<br>
हास भय सोग–पुमित्थिवेयं नपुंसवेय विविहे य भावे ॥ १०२ ॥<br>
आवज्जई एवमणेगरूवे एवविहे कामगुणेसु सत्तो ।<br>
अन्ने य एयप्पभवे विसेसे कारुण्णदीणे हिरिमे वइस्से ॥ १०३ ॥

अनयोर्व्याख्या–क्रोधादि भयान्त स्पष्टम् । 'सोग–पुमित्थिवेय'त्ति शोकं प्रियविप्रयोगज मनोदु'खरूपम्, पुवेदं स्त्रीविपयाभिलापम्, स्त्रीवेद पुसोऽभिष्वङ्गम् 'ततो द्वन्द्वे' शोक–पु–स्त्रीवेदम्, नपुंसकवेदमुभयाभिलापम्, विविधाश्च भावान् हर्ष–विपादादीनभिप्रायान् आपद्यते प्राप्नोति । एवममुना राग–द्वेषवता लक्षणेन प्रकारेणानेकरूपाननन्तानुबन्ध्यादिभेदेन तारतम्यभेदेन चैवंविधान् 'विकारानिति गम्यते' कामगुणेपु शब्दादिपु सक्तोऽभिष्वङ्गवान् 'उपलक्षणाद् द्विष्टश्च' अन्यांश्चैतत्प्रभवान् विशेपान् क्रोधादिजनितान् परिताप–दुर्गतिपातादीन् । कीदृशः सन् ? इत्याह–कारुण्यास्पदीभूतो दीन. कारुण्यदीन' 'मध्यपदलोपी समासः' अत्यन्तदीन इत्यर्थ. । 'हिरिमे'त्ति ह्रीमान् लज्जावान् । कोपाद्यापन्नो ह्रीहैवाप्रीत्यादिकमनुभवन् परत्र तद्विपाकमतिकटुक भावयन् प्रायः कारुण्यं दैन्यं लज्जां च भजते । तथा 'वइस्से'त्ति आर्पत्वाद् द्वेष्यस्तद्दोपदुष्टत्वात् सर्वेपामप्रीत एवेति सूत्रद्वयार्थः ॥ १०२–१०३ ॥

राग-द्वेपोद्धरणोपायं, तदनुद्धरणे प्रकारान्तरेण दोपं चाह—

कप्पं न इच्छेज्ज सहायलिच्छू पच्छाणुतावेण तवप्पभावं ।
एवं वियारे अमियप्पयारे आवज्जई इंदियचोरवस्से ॥ १०४ ॥

व्याख्या—कल्पते स्वाध्यायादिक्रियासु समर्थो भवतीति कल्पो योग्यस्तम् 'अपेर्गम्यत्वात्' कल्पमपि किं पुनरकल्पं 'शिष्यादीनिति गम्यते' न इच्छेन्नाभिलपेत् सहायलिप्सुर्ममाङ्गविश्रामणादिसाहाय्यं करिष्यतीत्यभिलापुकः सन् । तथा पश्चादिति 'प्रस्तावाद् व्रतस्य तपसोऽङ्गीकाराद् वा' उत्तरकालमनुतापः, किमेतावन्मया कष्टमङ्गीकृतम् ? इति चित्तबाधात्मकः पश्चादनुतापस्तेन हेतुना 'उपलक्षणत्वादन्यथा वा' तपःप्रभावं तपःफलमिहैवामर्पौपध्यादिलब्धिप्रार्थनेन, भवान्तरे भोगादिनिदानकरणेन वा सम्भूतयतिवत् 'नेच्छेदिति प्रक्रमः' । किमेवं निषिध्यते ? इत्याह—एवमसुना प्रकारेण विकारान् दोपानमितप्रकाराननेकभेदानापद्येत प्राप्नोति । इन्द्रियाणि चौरा इव धर्मस्वापहरणादिन्द्रियचौरास्तद्वश्यः । अयमाशयः—तदनुग्रहबुद्ध्या कल्पं पुष्टालम्बनेन च तपःप्रभावं वाञ्छतोऽपि न दोपः । यस्तु विश्रामणाऽऽद्यर्थं कल्पं, भोगाद्यर्थं च तपोऽभिलपति तस्यावश्यमिन्द्रियचौरवश्यस्य विकारापत्तिरिति । एतेन च रागस्य हेतुद्वयपरिहार उद्धरणोपाय उक्तः 'उपलक्षणादन्येपामपि राग-द्वेपहेतूनां परिहारो ज्ञेयः' ॥ १०४ ॥

पुनर्दोषान्तरहेतुतामाह—

तओ से जायति पओयणाइं निमज्जिउं मोहमहण्णवंसि ।
सुहेसिणो दुक्खविणोयणट्ठा तप्पच्चयं उज्जमए य रागी ॥ १०५ ॥

व्याख्या–ततो विकारापत्तेरनन्तरं 'से' तस्य जायन्ते प्रयोजनानि विषयासेवन–प्राणिहिंसाऽऽदीनि । निमज्जितुमित्यन्तर्भावितणिगर्थत्वान्निमज्जयितुं 'प्रक्रमात् तमेव जीवम्' मोहो महार्णव इवातिदुस्तरतया मोहमहार्णवस्तस्मिन् । कीदृशस्य पुनरेतानि किमर्थं च जायन्ते ? इत्याह–सुखैषिणः सौख्याभिलाषिणो दुःखस्य विनोदार्थं परिहारार्थं । सुखैषितायां हि दुःखपरिहाराय विषयासेवनादिप्रयोजनसम्भव इति भावः । ततश्च तत्प्रत्ययमुक्तरूपप्रयोजननिमित्तं 'चस्यैवार्थत्वात्' उद्यच्छत्येव तत्प्रवृत्तावुत्सहत एवेत्यर्थः । रागी 'उपलक्षणत्वाद् द्वेषी च' सन् राग–द्वेषयोरेव सर्वानर्थहेतुत्वादिति ॥ १०५ ॥

राग–द्वेषरहितस्य किं स्याद् ? इत्याह—

विरज्जमाणस्स य इंदियत्था सद्दाइया तावइयप्पयारा ।
न तस्स सव्वे वि मणुन्नय वा निव्वत्तयती अमणुन्नयं वा ॥ १०६ ॥

व्याख्या—विरज्यमानस्य 'उपलक्षणादद्विपतश्च' इन्द्रियार्थाः शब्दादिकाः 'तावइय'त्ति यावन्तो लोके प्रतीताः तावन्तः प्रकाराः खर—मधुरादिभेदा येषां ते तावत्प्रकारा बहुप्रभेदा इत्यर्थः । न तस्य मनुजस्य सर्वेऽपि मनोज्ञतां निर्वर्तयन्ति जनयन्ति, अमनोज्ञतां वा, किन्तु राग—द्वेषवत एव । नहि स्वरूपेण रूपादयो मनोज्ञताममनोज्ञतां वा कर्तुमात्मनः क्षमाः, किंतु प्रतिपन्नाध्यवसायवशादिति । ततो वीतरागस्य तन्निर्वर्तनहेत्वभावात् कथममी मनोज्ञताममनोज्ञतां वा निर्वर्तयेयुस्तदभावे च कथं विषयसेवनाक्रोशनादिप्रयोजनोत्पत्तिः ? इति ॥ १०६ ॥

उपसंहरन्नाह—

एवं ससंकप्प—विकप्पणासुं संजायई समयमुवट्ठियस्स ।

अत्थे य संकप्पयओ तओ से पहीयए कामगुणेसु तण्हा ॥ १०७ ॥

व्याख्या—एवमुक्तप्रकारेण स्वस्यात्मनः सङ्कल्पा राग—द्वेष—मोहरूपाध्यवसायास्तेषां विकल्पनाः सर्वदोषमूलत्वादिपरिभावनाः स्वसङ्कल्प—विकल्पनास्तासूपस्थितस्योद्यतस्येति सम्बन्धः । किम् ? इत्याह—संजायते उत्पद्यते, का ? इत्याह—'समयं'ति 'आर्षत्वात्' समता माध्यस्थ्यम् । अर्थानिन्द्रियार्थान् रूपादीन् 'चस्य भिन्नक्रमत्वात्' सङ्कल्पयतश्च यथा नैवैते पापहेतवः, किन्तु रागादय एवेति चिन्तयतस्तत इति समतायाः सकाशात् 'से' तस्य साधोः प्रहीयते

प्रकर्षेण हानि याति । काऽसौ ? कामगुणेषु तृष्णाऽभिलापो लोभ इति यावत् । समताया हि प्रासायामुत्तरोत्तरगुणस्थानावाप्त्या क्षीयत एव लोभ इति भाव. ॥ १०७ ॥

तत कीदृशः सन् किं विधत्ते ? इत्याह—

स वीयरागो कयसव्वकिच्चो खवेइ नाणावरण खणेणं ।
तहेव ज दरिसणमावरेइ जं चतरायं पकरेइ कम्म ॥ १०८ ॥

व्याख्या–स इति प्रहीणतृष्णो वीतराग–द्वेषो भवति । तथा कृतसर्वकृत्यो मुक्तेः प्राप्तप्रायत्वात् । क्षपयति ज्ञानावरणं वक्ष्यमाणं क्षणेन । तथैव यद् दर्शनं चक्षुर्दर्शनाद्यावरयति, यचान्तरायं दानादिलब्धेर्विघ्नं प्रकरोति कर्मान्तरायनामकमित्यर्थ. । तदपि क्षपयतीति सम्बन्ध. । स हि क्षपितमोहनीयोऽन्तर्मुहूर्तं विश्रम्य तद्द्विचरमसमये निद्राप्रचले देवगत्यादिनामप्रकृतीश्च क्षपयति । चरमसमये ज्ञानावरणादित्रयमिति भावः ॥ १०८ ॥

तत्क्षयाच कं गुणमाप्नोति ? इत्याह—

सव्व तओ जाणइ पासए य अमोहणे होइ निरंतराए ।
अणासवे झाण–समाहिजुत्ते आउक्खए मोक्खमुवेइ सुद्धे ॥ १०९ ॥

व्याख्या—सर्वं ततो ज्ञानावरणादिक्षयाज्जानाति विशेषरूपतया, पश्यति च सामान्यरूपतया। 'चशब्दो भिन्नविषयत्वात् पृथगुपयोगत्वं समुच्चिनोति' ततश्चैतेनानयोर्युगपदुपयोगत्वं निराकृतम्। तथा च प्रज्ञप्तिः—"[1]जं समयं जाणति णो तं समयं पासति"। तथा "केवली णं भंते! इमं रयणप्पहं पुढविं आगारेहिं [हेऊहिं] पमाणेहिं संठाणेहिं परिवारेहि जं समयं जाणइ णो तं समयं पासति?। हंता! गोयमा! केवली णं" इत्यादि। तथा अमोहनो मोहरहितो भवति। तथा निष्क्रान्तोऽन्तरायान्निरन्तरायः, अनाश्रवो हिंसाऽऽदिनिवृत्तः, ध्यानं शुक्लरूपं तेन, समाधिः परमस्वास्थ्यं तेन युक्तो ध्यानसमाधियुक्तः, आयुषः 'उपलक्षणत्वान्नाम-गोत्र-वेद्यानां च' क्षय आयुःक्षयस्तस्मिन् सति मोक्षमुपैति प्राप्नोति शुद्धोऽपगतकर्ममल इति ॥ १०९ ॥

मोक्षगतश्च यादृग् स्यात् तदाह—

सो तस्स सव्वस्स दुहस्स मुक्को जं बाहई सययं जंतुमेयं।
दीहामयं विप्पमुक्को पसत्थो तो होइ अच्चंतसुही कयत्थो ॥ ११० ॥

---

१ यस्मिन् समये जानाति न तस्मिन् समये पश्यति। २ केवली भदन्त! इमां रत्नप्रभां पृथ्वीमाकारैः [हेतुभिः] प्रमाणैः संस्थानैः परिवारैर्यस्मिन् समये जानाति, न तस्मिन् समये पश्यति? हन्त गौतम! केवली।

व्याख्या-स मोक्षं प्राप्तो जन्तु 'तस्स'त्ति 'सुव्व्यत्ययात्' तस्माज्जाति-जरा-मरणादिरूपात् सर्वस्माद् दुःखान्मुक्तः पृथग्भूत., यद्दु'ख वाधते पीडयति सततं निरन्तरं जन्तुं प्राणिनमेतं प्रत्यक्षमनुभवोपदर्शनमेतत् । दीर्घाणि स्थितितः 'प्रक्रमात् कर्माणि' तान्यामया इव रोगा इव नानावाधाविधायितया दीर्घामयास्तेभ्यो विप्रमुक्तो दीर्घामयविप्रमुक्तोऽत एव प्रशस्त प्रशस्याऽर्ह.। 'तो' इति ततो दीर्घामयविप्रमोक्षाद् भवत्यत्यन्तसुखी। तत एव च कृतार्थ. कृतसकलकृत्य इति ॥ ११० ॥

निगमयितुमाह—

अणाइकालप्पभवस्स एसो सव्वस्स दुक्खस्स पमोक्खमग्गो ।

वियाहिओ ज समुविच्च सत्ता कमेण अच्चंतसुही हवंति ॥ १११ ॥ त्ति बेमि ॥

व्याख्या-अनादिकालप्रभवस्यानादिकालोत्पन्नस्यैपोऽनन्तरोक्त. सर्वस्य दु.खस्य प्रमोक्षमार्ग. प्रमोक्षोपायो व्याख्यातः । यं दुःखप्रमोक्षमार्गं समुपेत्य सम्यक् प्रतिपद्य सत्त्वा. प्राणिनः क्रमेणो[त्तरो]त्तरगुणप्रतिपत्तिरूपेणात्यन्तसुखिनो भवन्तीति । इति ब्रवीमीति प्राग्वत् ॥ १११ ॥ ग्र० ६५२ अ० १४ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविर-
चितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां प्रमादस्थानं
द्वात्रिंशमध्ययनं समाप्तमिति ॥ ३२ ॥

# अथ कर्मप्रकृतिनाम त्रयस्त्रिंशत्तममध्ययनम् ।

इह पूर्वाध्ययने प्रमादस्थानान्युक्तानि । तैश्च कर्म बध्यते, तस्य च का प्रकृतय , कियती वा स्थितिः ? इत्याद्यभिधायकमिद त्रयस्त्रिशमध्ययनमारभ्यते—

अट्ठ कम्माइं वोच्छामि आणुपुव्विं जहक्कमं । जेहिं बद्धो अयं जीवो संसारे परिवत्तए ॥ १ ॥

व्याख्या–अष्टेत्यष्टसङ्ख्यानि क्रियन्ते मिथ्यात्वादिहेतुभिर्जीवेनेति कर्माणि तानि वक्ष्यामि । 'आणुपुव्वि' ति 'सुब्व्यत्ययाद्' आनुपूर्व्या, इय च पश्चानुपूर्व्यादिरपि स्यादत आह–यथाक्रमं क्रमानतिक्रमेण पूर्वानुपूर्व्येत्यर्थ. । यै. कर्मभिर्बद्धः श्लिष्टोऽयं जीव. ससारे परिवर्तते विविधपर्यायानुभवनेन परिभ्रमति ॥ १ ॥

प्रतिज्ञातमाह—

नाणस्सावरणिज्जं च दसणावरणं तहा । वेयणिज्ज तहा मोहं आउकम्मं तहेव य ॥ २ ॥

नामकम्मं च गोयं च अतराय तहेव य । एवमेयाइं कम्माइं अट्ठेव उ समासओ ॥ ३ ॥

व्याख्या–गाथाद्वय स्पष्टम् । नवर 'तथैव चेति सर्वत्रासदपि 'कर्म' इति योज्यम्' एवमेतान्यष्टकर्माणि समासत. सक्षेपेण । विस्तरतस्तु यावन्तो जन्तुभेदास्तान्यपि तावन्तीत्यनन्तान्येवेति भाव. । अत्र च ज्ञान–दर्शनस्व-

भावोऽयमात्मेत्यन्तरङ्गत्वात् तयोरादितस्तदावरणग्रहणम् । तयोश्च समानेऽप्यन्तरङ्गत्वे विशेषज्ञानोपयोगे एव सर्वलब्धीनामाप्तेर्ज्ञानस्य प्राधान्यादादौ तदावरणस्य । तदनु सामान्योपयोगत्वाद् दर्शनावरणस्य । एवं शेषकर्मणामपि क्रमोपन्यासकारणानि बृहट्टीकातोऽवसेयानि ॥ २–३ ॥

इत्थं कर्मणो मूलप्रकृतीरुक्त्वोत्तरप्रकृतीराह—

नाणावरणं पंचविहं सुयमाभिणिबोहियं । ओहिनाणं तइयं मणनाणं च केवलं ॥ ४ ॥

व्याख्या–ज्ञानावरणं पञ्चविधं पञ्चप्रकारम् । तत् कथमिति ? आवार्यभेदादेवेहावरणस्य भेद इत्यावार्यस्य ज्ञानस्यैव भेदानाह–श्रुतम् १, आभिनिवोधिकम् २, अवधिज्ञानं तृतीयम् ३, मनोज्ञानम् ४, केवलम् ५, एतत्स्वरूपं च प्राग् मोक्षमार्गाध्ययन एवोक्तम् ॥ ४ ॥

द्वितीयावरणमाह—

निद्दा तहेव पयला निद्दानिद्दा य पयलपयला य । तत्तो य थीणगिद्धी उ पंचमा होइ नायव्वा ॥ ५ ॥

चक्खुमचक्खुओहिस्स दरिसणे केवले य आवरणे । एवं तु नवविगप्पं नायव्वं दंसणावरणं ॥ ६ ॥

अनयोर्व्याख्या–निद्रा सुखप्रतिबोधोच्यते १ । तथैव निद्रावत्, किञ्चित् प्रचलत्यस्यामासीनोऽपीति प्रचला २ । अतिशायिनी निद्रैव दुःखप्रतिबोधात्मिका निद्रानिद्रा ३ । प्रचलैवातिशायिनी चङ्क्रम्यमाणस्य प्रचलाप्रचला ४ ।

ततश्चात्यन्ताशुभानुभावतया ताभ्य उपरिवर्तिनी स्त्याना संहतोपचितेत्यर्थः, ऋद्धिर्गृद्धिर्वा यस्यां सा स्त्यानर्द्धिः स्त्यानगृद्धिर्वा, एतदुदये च वासुदेवार्धबल. प्रबलराग–द्वेषवांश्च जन्तुर्जायतेऽत एव दिनचिन्तितार्थसाधिन्यसौ पञ्चमी भवति ज्ञातव्या ५॥ 'चक्खु' त्ति 'मकारोऽलाक्षणिक.' चक्षुश्चाचक्षुश्चावधिश्च 'समाहारे' चक्षुरचक्षुरवधि तस्य दर्शने, चक्षुषा रूपसामान्यग्रहणे, अचक्षुंषि शेषेन्द्रिय–मनांसि तद्दर्शने तेषा स्वस्वविषयसामान्यावबोधे, अवधिदर्शनेऽवधिना रूपिद्रव्याणा सामान्यग्रहणे। केवले च 'प्रक्रमात् केवलदर्शने' सर्वद्रव्य–पर्यायाणा सामान्यावबोधे। आवरणमेतच्चक्षुर्दर्शनादिविषयभेदाच्चतुर्विधमत एवाह–एवमित्यनेन निद्रापञ्चविधत्वचक्षुर्दर्शनावरणादिचतुर्विधत्वात्मकेन प्रकारेण 'तु पूरणे' नवविकल्प नवभेदं ज्ञातव्य दर्शनावरणमिति गाथाद्वयार्थः ॥ ५–६ ॥

तृतीय कर्माह—

वेयणिय पि य दुविह सायमसायं च आहियं। सायस्स उ बहू भेया एमेवासायस्स वि ॥ ७ ॥

व्याख्या–वेदनीय 'प्रक्रमात् कर्म' अपि च द्विविध द्विभेदम्, स्वाद्यते इति नैरुक्तविधिना सातं सुखं शारीर मानसं च 'इहोपचारात् तद्धेतुकर्मैवमुक्तम्'। असातं च तद्विपरीतमाख्यातं कथितम् 'अर्हदादिभिरिति गम्यम्'। सातस्यापि 'तुरप्यर्थः' बहवो भेदास्तद्धेतुभूतभूतानुकम्पाऽऽदीनां बहुविधत्वात्। एवमेवेति बहव एव भेदा असातस्यापि, दुःख–शोकादितद्धेतुबहुभेदत्वात् ॥ ७ ॥

चतुर्थमाह—

मोहणिज्जं पि दुविहं दंसणे चरणे तहा । दंसणे तिविहं वुत्तं चरणे दुविहं भवे ॥ ८ ॥
सम्मत्तं चेव मिच्छत्तं सम्मामिच्छत्तमेव य । एयाओ तिन्नि पयडीओ मोहणिज्जस्स दंसणे ॥९॥
चरित्तमोहणं कम्मं दुविहं तु वियाहियं । कसायमोहणिज्जं तु नोकसायं तहेव य ॥ १० ॥
सोलसविहभेएणं कम्मं तु कसायजं । सत्तविह नवविहं वा कम्मं नोकसायजं ॥ ११ ॥

आसां व्याख्या–मोहनीयमपि द्विविधम्, दर्शने तत्त्वश्रद्धानरूपे चरणे चारित्रे तथा । कोऽर्थः ? दर्शनमोहनीयं चारित्रमोहनीयं च । तत्र दर्शने दर्शनविषयं मोहनीयं त्रिविधमुक्तम् । चरणे चरणविषयं मोहनीयं द्विविधं भवेत् ॥ दर्शनमोहनीयभेदानाह–सम्यक्त्वं शुद्धदलिकरूपम्, यदुदये तत्त्वरुचिः स्यात् । 'चैवेति पूरणे' मिथ्यात्वमशुद्धदलिकरूपम्, यतस्तत्त्वेऽतत्त्वरुचिरतत्त्वे तत्त्वरुचिरुत्पद्यते । सम्यग्मिथ्यात्वमेव च शुद्धाशुद्धदलिकरूपम्, यत उभयस्वभावता जन्तोः स्यात् । इह च सम्यक्त्वादयो जीवधर्मास्तद्धेतुत्वाद् दलिकेष्वेतद्व्यपदेशः । एतास्तिस्रः प्रकृतयो मोहनीयस्य दर्शने दर्शनविषयस्य ॥ चरित्रमोहनीयभेदानाह–चरित्रमोहनं कर्म यतो हि कथञ्चनाहमेतत् प्रतिपद्ये इति श्रद्धधानोऽपि तत्फलादि जानन्नपि न तत् प्रतिपद्यते । तत् पुनर्द्विविधं व्याख्यातं 'श्रुतधरैरिति शेषः' । कषायाः

क्रोधादयस्तद्रूपेण वेद्यतेऽनुभूयते यत् तत् कषायवेदनीयम्, 'च. समुच्चये' नोकषायाः कषायसहवर्तिनो हास्यादय-स्तद्रूपेण वेद्यते यत् तत् नोकषायवेदनीयम्, 'तथैवेति पूरणे' ॥ अनयोरपि भेदानाह–षोडशविधः षोडशप्रकारो यो भेदस्तेन कर्म क्रियमाणत्वात् 'तु' पुन॰ कषायेभ्यो जात कषायजं कषायमोहनीयम् । षोडशविधत्व चास्य क्रोध–मान–माया–लोभाना चतुर्णामपि प्रत्येकमनन्तानुबन्ध्यप्रत्याख्यान–प्रत्याख्यानावरण–सज्वलनभेदतश्चतुर्वि-धत्वात् । तथा 'विन्दुलोपात्' सप्तविध नवविधं वा कर्म नोकषायेभ्यो जातत्वान्नोकषायजम्, नो कषायवे-दनीयमित्यर्थ । तच्च हास्यादिषट्केन सामान्यविवक्षयैकेन वेदेन सह सप्तविधम् । तेनैव षट्केन वेदत्रयेण नवविधं स्यादिति गाथाचतुष्टयार्थ ॥ ८–११ ॥

आयु कर्माह—

नेरइय–तिरिक्खाउं मणुस्साउं तहेव य । देवाउयं चउत्थं तु आउकम्मं चउव्विहं ॥ १२ ॥

व्याख्या–'आयु शब्द प्रत्येकं योज्यते' नैरयिकाणां नरकवासिनामायुर्येन तेषु म्रियन्ते । तथा तिरश्चामेकेन्द्रि-यादीनामायुस्तिर्यगायुर्येन तेषु स्थिति स्यात् । तथा मनुष्याणामायुर्मनुष्यायुस्तद्भावावस्थितिहेतुतया । देवानां भवनपत्यादीनामायुर्देवायुर्येन तेष्ववस्थीयते चतुर्थं 'तुः पूरणे' । एवं चायु॰कर्म चतुर्विधम् ॥ १२ ॥

नामकर्माह—

णामं कम्मं दुविहं सुहमसुहं वियाहियं । सुहस्स उ बहू भेया एमेव असुहस्स वि ॥ १३ ॥

व्याख्या—नामकर्म द्विविधम्, शोभते सर्वावस्थास्वनेनात्मेति शुभं तद्विपरीतमशुभमाख्यातम् । शुभस्य तु बहवो भेदाः । एवमेवाशुभस्यापि, तदपि बहुभेदमिति भावः । तत्रोत्तरोत्तरभेदतः शुभनाम्नोऽनन्तभेदत्वेऽपि मध्यमापेक्षया सप्तत्रिंशद् भेदाः । तथाहि—मनुष्यगतिः १, देवगतिः २, पञ्चेन्द्रियजातिः ३, औदारिक—वैक्रियाहारक—तैजस-कार्मणशरीराणि ८, समचतुरस्रं संस्थानं ९, वज्रर्षभनाराचसंहननम् १०, औदारिक—वैक्रियाहारकाङ्गोपाङ्गानि त्रीणि १३, प्रशस्तवर्ण—गन्ध—रस—स्पर्शाश्चत्वारः १७, मनुष्य—देवानुपूर्वी [द्वयं] १९, अगुरुलघु २०, पराघातम् २१, उच्छ्वासम् २२, आतपः २३, उद्योतः २४, प्रशस्तविहायागतिः २५, त्रसम् २६, बादरम् २७, पर्याप्तम् २८, प्रत्येकम् २९, स्थिरम् ३०, शुभम् ३१, सुभगम् ३२, सुस्वरम् ३३, आदेयम् ३४, यशः कीर्तिः ३५, निर्माणम् ३६, तीर्थंकरनाम ३७ एताः सर्वा अपि शुभानुभावाच्छुभाः । तथा अशुभनाम्नोऽपि विमध्यमविवक्षया चतुस्त्रिंशद् भेदास्तद् यथा—नरकगतिः १, तिर्यग्गतिः २, एक—द्वि—त्रि—चतुरिन्द्रियजातिः ६, ऋषभनाराच—नाराच—अर्धनाराच—कीलिका—सेवार्तसंहननानि ११, न्यग्रोधमण्डल—सादि—वामन—कुब्ज—हुण्डसंस्थानानि १६, अप्रशस्तवर्ण—गन्ध—रस—स्पर्शाः २०, नरकानुपूर्वी २१, तिर्यगानुपूर्वी २२, उपघातः २३, अप्रशस्तविहायोगतिः २४, स्थावर २५,

सूक्ष्म २६, साधारण २७, अपर्याप्त २८, अस्थिर २९, अशुभ ३०, दुर्भग ३१, दु स्वर ३२, अनादेय ३३, अयशोऽकीर्ति ३४, एताश्चाशुभनारकत्वादिनिबन्धनत्वेनाशुभा । अत्र च बन्धन–सङ्घाते शरीरेभ्य', वर्णाद्यवान्तरभेदाश्च वर्णादिभ्य. पृथग् न विवक्ष्यन्ते इति नोक्तसङ्ख्याऽतिक्रम' ॥ १३ ॥

गोत्रकर्माह—

गोयं कम्मं दुविह उच्चं नीय च आहियं । उच्चं अट्ठविहं होइ एवं नीयं पि आहिय ॥ १४ ॥

व्याख्या–गोत्रं कर्म द्विविधम् । 'उच्च'त्ति इक्ष्वाकुजात्याद्युच्चैर्व्यपदेशहेतुजाति–कुलाद्यष्टविधबन्धहेतुत्वादष्टविधमुच्चैर्गोत्र भवति । एवमित्यष्टविधमेव जातिमदाद्यष्टबन्धहेतुत्वान्नीचमपि नीचैर्गोत्रमपि नीचैर्व्यपदेशहेत्वाख्यातम् ॥ १४ ॥

अन्तराय कर्माह—

दाणे लाभे य भोगे य उवभोगे वीरिए तहा । पचविहमंतरायं समासेण वियाहियं ॥ १५ ॥

व्याख्या–दीयत इति दानं तस्मिन् । लभ्यत इति लाभस्तस्मिन् । सकृद् भुज्यते पुष्पाहारादीति भोगस्तस्मिन् । उप इति पुनः पुनर्भुज्यते भवनाङ्गनाऽऽदीत्युपभोगस्तस्मिन् । तथा विशेषेण ईर्यते चेष्टयतेऽनेनेति वीर्यं तस्मिन् 'तथा

समुच्चये' 'सर्वत्रान्तरायमिति प्रक्रमः'। ततो विषयभेदात् पञ्चविधमन्तरायं समासेन व्याख्यातम्। तत्र यत् सति चतुरे ग्रहीतरि देये च वस्तुनि तत्फलमवगच्छन्नपि न दाने प्रवर्तते तद् दानान्तरायम्। यत् पुनर्विशिष्टेऽपि दातरि याचननिपुणोऽपि याचको न लभते तल्लाभान्तरायम्। सति विभवादौ यद्वशादाहार-माल्यादि न भुङ्क्ते तद् भोगान्तरायम्। यस्योदयात् सदपि वस्त्रालङ्कारादि नोपभुङ्क्ते तदुपभोगान्तरायम्। यद्वशाद् बलवान् नीरुग् वयःस्थस्तृणमपि कुब्जीकर्तुं न क्षमते तद् वीर्यान्तरायमिति ॥ १५ ॥

उक्तार्थनिगमनायोत्तरग्रन्थयोजनाय चाह—

**एयाओ मूलपयडीओ उत्तराओ य आहिया। पएसग्गं खित्त-काले य भावं च अदुत्तरं सुण ॥१६॥**

व्याख्या-एता अनन्तरोक्ता ज्ञानावरणाद्या मूलप्रकृतयः। उत्तरा इत्युत्तरप्रकृतयः श्रुतावरणाद्याः 'चशब्दः श्रुतादीनामप्यक्षरानक्षरादिभेदतो बहुविधत्वसूचकः' आख्याताः कथिताः। अथ प्रदेशाः परमाणवस्तेषामग्रं परिमाणं प्रदेशाग्रम्। क्षेत्र-कालौ च तत्र क्षेत्रमाकाशम्, कालो बद्धस्य कर्मणो जीवप्रदेशाविचटनात्मकः स्थितिकालः। भावं चानुभागलक्षणं चतुःस्थानिक-त्रिस्थानिकरसमित्यर्थः। अतः प्रकृत्यभिधानात् उत्तरमित्यूर्ध्वं शृणु ॥ १६ ॥

प्रदेशाग्रमाह—

**सव्वेसिं चेव कम्माणं पएसग्गमणंतगं। गंठियसत्ताईयं अंतो सिद्धाण आहियं ॥ १७ ॥**

व्याख्या—सर्वेषामपि, न पुन' केषांचिदेव कर्मणाम् 'चः पूरणे, एवोऽपिशब्दार्थे.' ज्ञानावरणादीनां प्रदेशाग्र परमाणुपरिमाणमनन्तकम्, अनन्तपरमाणुनिष्पन्नत्वात् वर्गणानाम्। तच्चानन्तक ग्रन्थिगसत्त्वा ये ग्रन्थि यावद् गत्वाऽपि तद्भेदाकरणेन कदाचिदपि नोपरिष्टाद् गन्तारस्ते चाभव्या एव तानतीतं तेभ्योऽनन्तगुणत्वेनातिक्रान्तं ग्रन्थिगसत्त्वातीतम् । तथाऽन्तर्मध्ये सिद्धानामाख्यात कथितम् 'अर्हदादिभिरिति गम्यते' । सिद्धेभ्यो हि कर्माणवोऽनन्तभाग एव, तदपेक्षया सिद्धानामनन्तगुणत्वात्। अतः सङ्ख्यामपेक्ष्य सिद्धान्तर्वर्ति तदनन्तकमुक्तम्। एकसमयग्राह्यकर्मपरमाण्वपेक्षं चैतत्सङ्ख्यानमिति ॥ १७ ॥

क्षेत्रमाह—

सव्वजीवाण कम्म तु सगहे छद्दिसागयं । सव्वेसु वि पएसेसु सव्वं सव्वेण बद्धगं ॥ १८ ॥

व्याख्या—सर्वजीवानामेकेन्द्रियाद्यशेषभेदानां कर्म ज्ञानावरणादि 'तु' पूरणे' सङ्ग्रहे सङ्ग्रहक्रियायां 'योग्यं स्यादिति शेषः' कीदृशं सद्? इत्याह—'छद्दिसागय'त्ति षण्णां दिशा समाहारः षड्दिशं तत्र गतम् । तत्र चतस्रो दिशः पूर्वाद्या ऊर्ध्वाधो दिग्द्वयमिति षट् स्युरिति । यत्र ह्याकाशे जीवोऽवगाढस्तत्रैव ये कर्मपुद्गलास्ते रागादिस्नेहयोगत आत्मनि लगन्ति। न क्षेत्रान्तरावगाढा भिन्नदेशस्थानां तद्भावायोग्यत्वात्। यथा ह्यग्नि' स्वदेशस्थान् प्रायोग्यपुद्गलानात्मसात् करोत्येवं जीवोऽपि स्वदेशस्थान् कर्मपुद्गलानिति । किञ्चिद् विदिग्व्यवस्थितमपि कर्म आत्मा गृह्णाति,

परमल्पत्वान्न विवक्षितमिति । तथा क्षेत्रप्रस्तावे यद् दिगभिधानं तत् तासामाकाशादभेदज्ञापनार्थं तद्भेदाप्रतीतेः । तथा षड्दिग्गतत्वं द्वीन्द्रियादीन् पञ्चेन्द्रियान्तानेवाधिकृत्य नियमेन ज्ञेयम् । एकेन्द्रियाणामन्यथाऽपि सम्भवात् । यदागमः—"[1]एगिंदिया णं भंते ! तेयाकम्मपुग्गलाणं गहणं करेमाणे किं तिदिसिं करेइ जाव छद्दिसिं करेइ ? । गोयमा ! सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं सिय छद्दिसिं करेइ । बेंदिया णं भंते ! पुच्छा ? गोयमा ! बेंदिया जाव पंचेंदिया नियमा छद्दिसिं करेइ" इत्यादि । तच्च गृहीतं सत् केन सह, कियत्, कथं वा स्याद् ? इत्याह—'सव्वेसु'त्ति 'सुब्व्यत्ययात्' सर्वैरपि प्रदेशैरात्मसम्बन्धिभिः, सर्वं ज्ञानावरणादि न त्वन्यतरदेव । आत्मा हि सर्वप्रकृतिप्रायोग्यपुद्गलान् सामान्येनादाय तान्येवाऽध्यवसायविशेषात् पृथग् ज्ञानावरणादिरूपत्वेन परिणमयति । सर्वेण 'गम्यमानत्वात् प्रकृति–स्थित्यादिना प्रकारेण' बद्धं अन्योन्यसम्बद्धतया हि श्रृङ्खलाऽवयवानामिव क्षीरोदकवद् वाऽऽत्मप्रदेशैः श्लिष्टं तदेव बद्धकमिति ॥ १८ ॥

कालमाह—

उदहिसरिनामाणं तीसई कोडिकोडीओ । उक्कोसिया ठिई होइ अंतोमुहुत्तं जहन्निया ॥ १९ ॥
आवरणिज्जाण दुन्हं पि वेयणिज्जे तहेव य । अंतराए य कम्मंमि ठिई एसा वियाहिया ॥ २० ॥

१ एकेन्द्रियो भदन्त ! तेजःकर्मपुद्गलानां ग्रहणं कुर्वन् किं त्रिदिशं करोति यावत् षड्दिशं करोति ? । गौतम ! स्यात् त्रिदिशं स्याच्चतुर्दिशं स्यात् पञ्चदिशं स्यात् षड्दिशं करोति । द्वीन्द्रियो भदन्त ! पृच्छा ? गौतम ! द्वीन्द्रियो यावत् पञ्चेन्द्रियो नियमात् षड्दिशं करोति ॥

उदहिसरिनामाणं सत्तरिं कोडिकोडीओ । मोहणिज्जस्स उक्कोसा अंतोमुहुत्तं जहन्निया ॥ २१ ॥

तित्तीसा सागरोवम उक्कोसेण वियाहिया । ठिई उ आउकम्मस्स अतोमुहुत्तं जहन्निया ॥ २२ ॥

उदहिसरिनामाण वीसई कोडिकोडीओ । नाम—गोयाण उक्कोसा अट्ठमुहुत्ता जहन्निया ॥ २३ ॥

आसा व्याख्या—उदधि समुद्रस्तेन सदृग् नाम येषा तान्युदधिसदृग्नामानि सागरोपमाणि तेषा त्रिंशत् कोटीकोट्य उत्कृष्टा स्थितिर्भवति । तथा मुहूर्तस्यान्तरन्तर्मुहूर्तम्, मुहूर्तमपि न्यूनमित्यर्थो जघन्यिका 'प्रक्रमात् स्थिति'॥ केषाम्? इत्याह—आवरणीययोरन्यत्रैतद्व्यपदेशाश्रवणात् ज्ञानावरणीय—दर्शनावरणीययोर्द्वयोरपि, वेदनीये तथैव चान्तराये च कर्मणि स्थितिरेषा व्याख्याता । इह वेदनीयस्यापि जघन्या स्थितिरन्तर्मुहूर्तमाना सूत्रकृतोक्ता । अन्ये तु द्वादशमुहूर्तमानामेव ता वेदनीयस्येच्छन्ति, तदभिप्रायं न विद्म. ॥ उदधिसदृशनाम्ना सप्ततिकोटीकोट्यो मोहनीयस्योत्कृष्टाऽन्तर्मुहूर्तं जघन्यिका स्थितिः॥ त्रयस्त्रिंशत् सागरोपमाणि 'आर्षत्वात् सुपोर्लुक्' उत्कृष्टेन व्याख्याता स्थिति. 'तु' पूरणे' आयुःकर्मणोऽन्तर्मुहूर्तं जघन्यिका ॥ उदधिसदृशनाम्नामर्थात् सागरोपमानां विंशतिः कोटीकोट्यो नाम-गोत्रयोरुत्कृष्टाऽष्टमुहूर्ता जघन्यिकेति गाथापञ्चकार्थ ॥१९—२३॥ मूलप्रकृतीनामुत्कृष्टाऽऽदिस्थितिरुक्तोत्तरप्रकृतीनां बृहट्टीकातोऽनसेया॥

सम्प्रति भावमाह—

सिद्धाणणंतभागो अणुभागा हवंति उ । सव्वेसु वि पएसग्गं सव्वजीवे अइच्छियं ॥ २४ ॥

व्याख्या—सिद्धानामनन्तभागवर्त्तित्वात् तदनन्तभागोऽनुभागा रसविशेषा भवन्ति । 'तुः पूरणे' अयं चानन्तभागोऽनन्तसङ्ख्य एवेत्यनेनैषामानन्त्यमेवेत्थमुक्तम् । तथा सर्वेष्वपि 'प्रक्रमादनुभागेषु' प्रदेशा बुद्ध्या विभज्यमानास्तद्विभागैकदेशास्तेषामग्रं प्रदेशाग्रम्, 'सव्वजीवे अइच्छियं'ति सर्वजीवेभ्यो भव्याभव्येभ्योऽतिक्रान्तम्, ततोऽपि तेषामनन्तगुणत्वेनाधिकत्वादिति ॥ २४ ॥

उपसंहारमाह—

तम्हा एएसि कम्माणं अणुभागा वियाणिया । एएसि संवरे चेव खवणे य जए बुहे ॥२५॥ त्ति बेमि ॥

व्याख्या—यस्मादेवंविधाः प्रकृतिबन्धादयस्तस्मादेतेषामनन्तरोक्तानां कर्मणां ज्ञानावरणादीनामनुभागान् 'उपलक्षणात् प्रकृतिबन्धादींश्च' विज्ञाय विशेषेण कटुकविपाकबन्धत्वलक्षणेन भवहेतुत्वलक्षणेन वाऽवबुध्यैतेषां कर्मणां संवरे अनुपात्तानामुपादाननिरोधे 'चैवेति समुच्चयावधारणे' क्षपणे चोपात्तानां निर्जरणे 'जए' त्ति यतेतैव यत्नं कुर्यादेव बुधस्तत्त्वावगमवान् । इति ब्रवीमीति पूर्ववत् ॥ २५ ॥ ग्रं० १६० अ० ७ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां कर्मप्रकृतिनामकं त्रयस्त्रिंशमध्ययनं समाप्तम् ॥ ३३ ॥

## चतुस्त्रिंशं लेश्याऽध्ययनम् ।

अत्र पूर्वाध्ययने कर्मप्रकृतय उक्तास्तत्स्थितिश्च लेश्यावशत इत्यतस्तदभिधायकं चतुस्त्रिंशमध्ययनमारभ्यते ।

लेसज्झयणं पवक्खामि आणुपुव्विं जहक्कम । छण्ह पि कम्मलेसाण अणुभावे सुणेह मे ॥ १ ॥

व्याख्या—लेश्याऽभिधायकमध्ययन लेश्याऽध्ययन प्रवक्ष्यामि प्रकर्षेण तासामेव नाम—वर्णादिनिरूपणात्मकेनाभिधास्ये । आनुपूर्व्या यथाक्रममिति च प्राग्वत् । तत्र षण्णामपि षट्सङ्ख्यानामपि कर्मलेश्यानां कर्मस्थितिविधातृतद्विशिष्टपुद्गलरूपाणामनुभावान् रसविशेषान् शृणुत मे मम 'कथयत इति शेषः' ॥ १ ॥

एतदनुभावाश्च नामादिप्ररूपणात एव स्युरिति तत्प्ररूपणाय द्वारमाह—

नामाइं वण्ण-रस-गंध-फास-परिणाम—लक्खण । ठाणं ठिई गई च आउं लेसाणं तु सुणेह मे ॥ २ ॥

व्याख्या—नामानि वर्ण—रस—गन्ध—स्पर्श—परिणाम—लक्षणमिति पदपञ्चस्य समाहारः, तत्र परिणामो जघन्यादिः, लक्षणं पञ्चाश्रवाऽऽसेवनादि। स्थानमुत्कर्षापकर्षरूपम्। स्थितिमवस्थानकालम्। गतिं च नरकादिकाम्, यतो या अवाप्यते। आयुर्यावति तस्मिन्नवशिष्यमाणे आगामिभवलेश्यापरिणामस्तदिह गृह्यते। लेश्यानाम् 'तुः पूरणे' 'सुणेह मे'त्ति प्राग्वत् ॥ २ ॥

नामान्याह—

किण्हा नीला य काऊ य तेऊ पम्हा तहेव य। सुक्कलेसा य छट्ठा य नामाइं तु जहक्कमं ॥ ३ ॥

[ व्याख्या ]–स्पष्टा ॥ ३ ॥

वर्णमाह—

जीमूयनिद्धसंकासा गवल–रिट्ठगसंनिभा। खंजंजण–नयणनिभा किण्हलेसा उ वण्णओ ॥ ४ ॥
नीलासोगसंकासा चासपिच्छसमप्पभा। वेरुलियनिद्धसंकासा नीललेसा उ वण्णओ ॥ ५ ॥
अयसीपुप्फसंकासा कोइलच्छविसंनिभा। पारेवयगीवनिभा काउलेसा उ वण्णओ ॥ ६ ॥
हिंगुलुयधाउसंकासा तरुणाइच्चसंनिभा। सुयतुंड–पईवनिभा तेउलेसा उ वण्णओ ॥ ७ ॥
हरियालभेयसंकासा हलिद्दाभेयसन्निभा। सणासणकुसुमनिभा पम्हलेसा उ वण्णओ ॥ ८ ॥
संखंक–कुंदसंकासा खीरपूरसमप्पभा। रयय–हारसंकासा सुक्कलेसा उ वण्णओ ॥ ९ ॥

आसां व्याख्या–'जीमूयनिद्ध' त्ति 'प्राकृतत्वात्' स्निग्धश्चासौ सजलत्वेन जीमूतश्च मेघः स्निग्धजीमूतस्तद्वत् सं सम्यक् काशते वर्णतः प्रकाशते इति संकाशा तत्सदृशीत्यर्थः। तथा गवलं माहिषं शृङ्गम्, रिष्टो द्रोणकाको

रिष्टकं फलविशेषो वा तत्सनिभा। 'खंज'त्ति खञ्जनं स्नेहाल्यक्तशकटाक्षघर्षणोद्भूतम्, अञ्जनं च कज्जलम्, नयनं चक्षुरिहोपचारात् तदेकदेशस्तन्मध्यवर्ती कृष्णसारस्तन्निभा तत्समाना कृष्णलेश्या 'तुर्विशेषार्थे' वर्णतो वर्णमाश्रित्यैव, न रसादीन्येवमग्रेऽपि । ४ । नीलश्चासावशोकश्च वृक्षविशेषो नीलाशोकस्तत्सङ्काशा रक्ताशोकव्यवच्छेदार्थं नीलग्रहणम्। चासः पक्षिविशेषस्तस्य पिच्छ पक्षं तत्समप्रभा । स्निग्धो दीप्तो वैडूर्यो मणिविशेषस्तत्सङ्काशा तत्सदृशी 'पदविपर्यय प्राग्वत्' नीललेश्या तु वर्णतो नीलेत्यर्थ. । ५ । अतसी धान्यविशेषस्तत्पुष्पसङ्काशा। कोकिल. परभृतस्तस्य छविस्तत्सनिभा । पारापत. पक्षिविशेषस्तस्य ग्रीवा कण्ठस्तन्निभा कापोतलेश्या तु वर्णत. किञ्चित् कृष्णा किञ्चिच लोहितेति भाव । तथा च प्रज्ञापना —'काऊलेसा काललोहिएण वण्णेण वणिज्जइ'त्ति । ६ । हिङ्गुलुकः प्रतीतो धातुः पाषाणविशेषस्तत्सङ्काशा । तरुणो नवोदित आदित्यस्तत्संनिभा । शुकः कीरस्तस्य तुण्डं मुख चञ्चूः तच प्रदीपश्च तन्निभा । तेजोलेश्या तु वर्णतो रक्तेति भाव' । ७ । हरितालो धातुविशेषस्तस्य भेदो द्विधाभावस्तत्सङ्काशा भेदे हि वर्णप्रकर्षो दृश्यते। हरिद्रा प्रसिद्धा तस्या भेदस्तन्निभा । शणो धान्यविशेषोऽशनो बीयकस्तयोः कुसुमं तन्निभा पद्मलेश्या तु वर्णत. पीतेति भाव. । ८ । शङ्खः प्रतीतोऽङ्को रत्नविशेष, कुन्दं कुन्दपुष्पं तत्सङ्काशा । क्षीर

---

१ कापोतलेश्या काललोहितेन वर्णेन वर्ण्यते इति ।

दुग्धं तस्य पूरः प्रवाहस्तत्समप्रभा । रजतं रूप्यम्, हारो मुक्ताकलापस्तत्सङ्काशा शुक्ललेश्या 'तुः पूरणे' वर्णतः शुक्लेति तत्त्वम् । ९ । इति गाथापञ्चकार्थः ॥ ४–९ ॥

रसमाह—

जह कडुयतुंबगरसो निंबरसो कडुयरोहिणिरसो वा । इत्तो वि अणंतगुणो रसो उ किण्हाइ नायव्वो॥१०॥
जह तिगडुयस्स य रसो तिक्खो जह हत्थिपिप्पलीए वा । इत्तो वि अणंतगुणो रसो उ नीलाइ नायव्वो॥११॥
जह तरुणअंबयरसो तुवरकविट्ठस्स वा वि जारिसओ । इत्तो वि अणंतगुणो रसो उ काऊइ नायव्वो ॥ १२ ॥
जह परिणयंबगरसो पक्ककविट्ठस्स वा वि जारिसओ । इत्तो वि अणंतगुणो रसो उ तेऊइ नायव्वो ॥ १३ ॥
वरवारुणीइ व रसो विविहाण व आसवाण जारिसओ । महु-मेरगस्स व रसो इत्तो पम्हाइ परएणं ॥ १४ ॥
खज्जूर-मुद्दियरसो खीररसो खंड–सक्कररसो वा । इत्तो वि अणंतगुणो रसो उ सुक्काइ नायव्वो ॥ १५॥

आसां व्याख्या–'यथेति सादृश्ये' ततो यादृक् कटुकतुम्बकरसः, निम्बरसः, कटुका चासौ रोहिणी च तरुविशेषत्वक् कटुकरोहिणी तद्रसो वा, इतोऽपि कटुकतुम्बरसादेरनन्तगुणो रसास्वादः कृष्णायाः कृष्णलेश्याया ज्ञातव्योऽतिकटुक इत्यर्थः । १० । यथा यादृशस्त्रिकटुकस्य शुंठि–मिरिच–पिप्पल्या रसस्तीक्ष्णो यथा हस्तिपिप्पल्या

गजपिप्पल्या वा रसोऽतोऽप्यनन्तगुणो रसस्तु नीलाया अतितीक्ष्ण इति भावः । ११ । यथा तरुणमपरिपक्कं यदाम्रकमाम्रफल तद्रस', तुवर सकषायमर्थादपक्क यत् कपित्थ कपित्थफलं तस्य वा 'अपिः पूरणे' यादृश. 'रस इति प्रक्रम', अतोऽप्यनन्तगुणो रसस्तु कापोताया ज्ञातव्योऽतिकषाय इति हृदयम् । १२ । यथा परिणतं परिपक्व यदाम्रकं तद्रसः, पक्ककपित्थस्यापि यादृशो रसोऽतोऽप्यनन्तगुणो रसस्तु तैजस्या ज्ञातव्योऽम्ल किञ्चिन्मधुरश्चेति तात्पर्यम् । १३ । वरवारुणी प्रधानमदिरा तस्या वा रस', विविधानामासवाना पुष्पप्रभवमद्याना यादृशको रसः, मधु मद्यविशेषो मैरेयं सरकस्तयो. समाहारे मधु–मैरेय तस्य वा रसोऽतो वरवारुणीरसात् पद्माया. 'प्रक्रमाद् रसः' 'परकेण'त्ति अनन्तगुणत्वात् तदतिक्रमेण 'वर्तते इति गम्यम्' अयं च किञ्चिदम्लकषायो मधुरश्चेति भावनीयम् । १४ । खर्जूर पिंडखर्जूरादि, मृद्वीका द्राक्षा एतद्रसस्तथा क्षीररस', खण्डं चेक्षुविकार. शर्करा च तत्प्रभवा तद्रसो वा 'यादृश इति शेष.' अतोऽप्यनन्तगुणो रसस्तु शुक्लाया ज्ञातव्योऽत्यन्तमधुर. । १५ । इति गाथापञ्चार्थ' ॥ १०–१५ ॥

गन्धमाह—

जह गोमडस्स गंधो सुणगमडस्स व जहा अहिमडस्स। इत्तो वि अणंतगुणो लेसाणं अप्पसत्थाणं॥१६॥

जह सुरहिकुसुमगंधो गंधवासाण पिस्समाणाणं। इत्तो वि अणंतगुणो पसत्थलेसाण तिण्हं पि ॥ १७॥

अनयोर्व्याख्या—यथा गवां मृतकं मृतकशरीरं कलेवरं तस्य गन्धः, श्वा सारमेयं तस्य मृतकस्य वा, यथाऽहिः सर्पस्तन्मृतकस्य 'गन्ध इति सम्बन्धः' 'सूत्रत्वान्मृतकशब्दे कलोपः'। अतोऽप्येतत्प्रकारादपि गन्धादनन्तगुणोऽतिदुर्गन्धतया लेश्यानामप्रशस्तानामशुभानां कृष्ण—नील—कापोतानां 'गन्ध इति प्रक्रमः'। इह लेश्यानामप्रशस्तत्वं गन्धाद्यशुभत्वादिति ॥ यथा सुरभिकुसुमानां जाति—चम्पकादीनां पुष्पाणां गन्धः सुरभिकुसुमगन्धः, तथा गन्धाश्च कोष्ठपुटपाकनिष्पन्ना वासाश्चेतरे गन्धवासास्तेषां पिष्यमाणानां चूर्ण्यमानानां वा यथा गन्धोऽतोऽप्येवंविधादपि गन्धादनन्तगुणोऽतिसुगन्धितया प्रशस्तलेश्यानां तिसृणामपि तैजसी—पद्म—शुक्लानां 'गन्ध इति प्रक्रमः'। इहापि प्रशस्तत्वं गन्धस्य शुभत्वादिति गाथाद्वयार्थः ॥ १६—१७ ॥

स्पर्शमाह—

जह करगयस्स फासो गोजिब्भाए य सागपत्ताणं। इत्तो वि अणंतगुणो लेसाणं अप्पसत्थाणं ॥१८॥
जह बूरस्स व फासो नवणीयस्स व सिरीसकुसुमाणं। इत्तो वि अणंतगुणो पसत्थलेसाण तिण्हं पि ॥ १९ ॥

अनयोर्व्याख्या—यथा क्रकचस्य करपत्रस्य स्पर्शः, गोर्जिह्वा गोजिह्वा तस्याः, तथा शाको वृक्षविशेषस्तत्पत्राणां

'स्पर्श इति प्रक्रम.' अतोऽप्येतत्प्रकारादपि स्पर्शादनन्तगुणोऽतिशायितया यथाक्रममाद्यानां तिसृणां लेश्यानामप्रशस्ताना स्पर्शोऽतिकर्कश इति हृदयम् ॥ यथा बूरस्य वनस्पतिविशेषस्य स्पर्श, नवनीतस्य म्रक्षणस्य, यथा वा शिरीषकुसुमाना स्पर्शोऽतोऽपि स्पर्शादनन्तगुणोऽतिसुकुमारतया यथाक्रमं प्रशस्तलेश्यानां तिसृणामप्यन्त्यानां 'स्पर्श इति प्रक्रम.' ॥ इहोक्तेषु दृष्टान्तेषु यथा वर्णादितारतम्यं तथा लेश्याना स्वस्थानेऽपि वर्णादिवैचित्र्यं ज्ञेयमिति गाथाद्वयार्थः ॥ १८–१९ ॥

परिणाममाह—

तिविहो व नवविहो वा सत्तावीसइविहेक्कसीओ वा । दुसओ तेयालो वा लेसाणं होइ परिणामो॥२०॥

व्याख्या–त्रिविधो नवविधो वा सप्तविंशतिविधो वा 'विधशब्दस्य सम्बन्धाद्' एकाशीतिविधो वा त्रिचत्वारिंशदधिकद्विशतविधो वा लेश्यानां भवति परिणामस्तत्तद्रूपगमनात्मक । इह च त्रिविधो जघन्य–मध्यमोत्कृष्टभेदेन, नवविधो यदेषामपि जघन्यादीनां स्वस्थानतारतम्यचिन्ताया प्रत्येकं जघन्यादित्रयेण गुणनात् । एवं पुनः पुनस्त्रिकगुणनया सप्तविंशतिविधत्वमेकाशीतिविधत्वं त्रिचत्वारिंशदधिकद्विशतविधत्व च भावनीयम् । उपलक्षणं चैतद्, एव तारतम्यचिन्तायां सङ्ख्यानियमस्याभावात्, बहु–बहुविधभेदत्वादेतत्सङ्ख्यानाञ्च । तथा च प्रज्ञापना—

"किण्हलेसा णं भंते ! कतिविधं परिणामं परिणमति ? गोयमा ! तिविहं वा नवविहं वा सत्तावीसइविहं वा इक्कासीइविहं वा तेयालब्भहियदुसयविहं वा बहुं वा बहुविहं वा परिणामं परिणमति । एवं जाव सुक्कलेसा" इति ॥ २० ॥

कृष्णलेश्यालक्षणमाह—

**पंचासवप्पवत्तो तीहिं अगुत्तो छसु अविरओ य । तिव्वारंभपरिणओ खुद्दो साहस्सिओ नरो ॥ २१ ॥**
**निद्धंधसपरिणामो निस्संसो अजिइंदिओ । एयजोगसमाउत्तो किण्हलेसं तु परिणमे ॥ २२ ॥**

अनयोर्व्याख्या—पञ्चाश्रवा हिंसाऽऽदयस्तत्र प्रवृत्तः । त्रिभिः 'प्रस्तावान्मनो–वाक्–कायैः' अगुप्तोऽनियन्त्रितो मनोगुप्त्यादिरहित इत्यर्थः । षट्सु पृथिवीकायादिष्वविरतोऽनिवृत्तः 'तदुपमर्दकत्वादेरिति गम्यम्' । तीव्रा उत्कटा आरम्भाः सावद्यव्यापारास्तत्परिणतः तदात्मतां गतः । क्षुद्रः सर्वेषामहितैषी कृपणो वा । सहसा गुण–दोषानविचार्य प्रवर्तते इति साहसिकश्चौरादिवदित्यर्थः । नरः पुमान् 'उपलक्षणत्वात् स्त्र्यादिर्वा' ॥ निद्धंधसोऽत्यन्तमैहिकामुष्मिकापायशङ्काविकलः परिणामोऽध्यवसायो यस्य स तथा । 'निस्संसो'त्ति नृशंसो निस्तृंशो जीवान् हिंसन् न मनागपि शङ्कते । अजितेन्द्रियः । एते च योगाश्च काय–वाग्–मनोव्यापारा एतद्योगाः पञ्चाश्रवप्रवृत्तत्वादयस्तैः

१ कृष्णलेश्या भदन्त ! कतिविधं परिणामं परिणमति ? गौतम ! त्रिविधं वा नवविधं वा सप्तविंशतिविधं वा एकाशीतिविधं वा त्रिचत्वारिंशदभ्यधिकद्विशतविधं वा बहुं वा बहुविधं वा परिणामं परिणमति । एवं यावत् शुक्लेश्या ॥

समायुक्तः कृष्णलेश्यामेव 'तुरेवार्थे' परिणमेत् तद्द्रव्यसाचिव्येन, तथाविधद्रव्यसम्पर्कात् स्फटिकवत् तदुपरञ्जनात् तद्रूपता भजेत्। उक्त हि—

"कृष्णादिद्रव्यसाचिव्यात् परिणामो य आत्मन'। स्फटिकस्येव तत्राय लेश्याशब्दः प्रयुज्यते" ॥ १ ॥

एतेन पञ्चाश्रवप्रवृत्तादीना भावे एव कृष्णलेश्याया सद्भावोपदर्शनादमीपा लक्षणत्वमुक्तम्। यो हि यत्सद्भावे भवति स तस्य लक्षणम्, यथौष्ण्यमग्नेः। एवमुत्तरत्रापि लक्षणत्वभावना कार्या। इति गाथाद्वयार्थः॥२१–२२॥

नीललेश्यालक्षणमाह—

ईसा–अमरिस–अतवो अविज्ज माया अहीरिया। गिद्धी पओसे य सढे पमत्ते रसलोलुए ॥ २३ ॥
सायगवेसए य आरम्भाविरओ खुद्दो साहस्सिओ नरो। एयजोगसमाउत्तो नीललेस तु परिणमे॥२४॥

अनयोर्व्याख्या–ईर्ष्या परगुणासहनम्। अमर्षश्चात्यन्ताभिनिवेशः। अतपश्च तपोविपर्ययः 'अमीषां समाहारः'। 'अविज्ज'त्ति अविद्या कुशास्त्ररूपा। माया वञ्चनात्मिका। अह्रीकता चासदाचारविषया निर्लज्जता। गृद्धिरभिकाङ्क्षा 'विषयेष्विति गम्यते'। प्रदोषश्च प्रद्वेष'। मत्वर्थीयलोपादभेदोपचाराद् वा सर्वत्र तद्वान् जन्तुरेव ज्ञेय। अत एव शठोऽलीकभाषी। प्रमत्तः प्रकर्षेण जात्यादिमदावलिप्त॰। तथा रसलोलुपो रसलम्पटः॥ सात सुखं तद्गवेषकश्च कथं मम सुखं स्यादिति बुद्धिमान्। आरम्भात् प्राण्युपमर्दादावविर-

तोऽनिवृत्तः। तथा क्षुद्रः सकपटी। साहसिकः साहसवान्। एतद्योगसमायुक्तो नरः स्त्री वा नीललेश्यां तु परिणमेदिति गाथायुग्मार्थः ॥ २३–२४ ॥

कापोतलेश्यालक्षणमाह—

वंके वंकसमायारे नियडिल्ले अणुज्जुए। पलिउंचग ओवहिए मिच्छदिट्ठी अणारिए ॥ २५ ॥
उप्पासगदुट्ठवाई य तेणे यावि य मच्छरी। एयजोगसमाउत्तो काउलेसं तु परिणमे ॥ २६ ॥

अनयोर्व्याख्या—वक्रो वचसा, वक्रसमाचारः क्रियया, निकृतिः शाठ्यं तद्वान् मनसा, अनृजुकः कथञ्चिद् ऋजूकर्तुमशक्यतया, 'पलिउंचग'त्ति प्रतिकुञ्चकः स्वदोषप्रच्छादकतया, उपधिना छद्मना चरत्यौपधिकः सर्वत्र व्याजतः प्रवृत्तेः, एकार्थिकानि वैतानि नानादेशजशिष्यानुग्रहायोपात्तानि। मिथ्यादृष्टिरनार्यः प्राग्वत्॥ 'उप्पासग'त्ति उत्प्रासकं यथा पर उत्प्रास्यते, दुष्टं च रागादिदोषवद् यथा स्यादित्येवंवदनशील उत्प्रासकदुष्टवादी, 'चः समुच्चये' स्तेनश्चौरः, 'अपि चेति पूरणे' मत्सरः परसम्पदसहनं स विद्यतेऽस्येति मत्सरी। एतद्योगसमायुक्तः कापोतलेश्यां परिणमेत् 'तुः पुनः' इति सूत्रद्वयार्थः ॥ २५–२६ ॥

तेजोलेश्यालक्षणमाह—

नीयावत्ती अचवले अमाई अकुतूहले। विणीयविणए दंते जोगवं उवहाणवं ॥ २७ ॥

पियधम्मे दढधम्मेऽवज्जभीरू हिएसए । एयजोगसमाउत्तो तेउलेसं तु परिणमे ॥ २८ ॥

अनयोर्व्याख्या–नीचैर्वृत्ति. काय-मनो-वाग्भिरनुत्सिक्तोऽचपलोऽमायी।अकुतूहल. कुहुकादिष्वकौतुकवान्। विनीतविनय कृतगुर्वाद्युचितप्रतिपत्ति । दान्त इन्द्रिय–नोइन्द्रियदमेन । योग. स्वाध्यायादिव्यापारस्तद्वान् । उपधानं श्रुतोपचारस्तद्वान् ॥ प्रियधर्माऽभीष्टधर्मानुष्ठानो दृढधर्माऽङ्गीकृतव्रतादिनिर्वाहक । यतोऽवद्यभीरुः पापभीरुः पापभीलुको हितैपको मुक्तिगवेपक । एतद्योगसमायुक्त. तेजोलेश्या तु परिणमेदिति गाथायुगलार्थः ॥ २७–२८ ॥

पद्मलेश्यालक्षणमाह—

पयणुक्कोह–माणे य मायालोभे य पयणुए । पसंतचित्ते दतप्पा जोगवं उवहाणवं ॥ २९ ॥

तहा पयणुवाई य उवसते जिइदिए । एयजोगसमाउत्तो पम्हलेस तु परिणमे ॥ ३० ॥

अनयोर्व्याख्या–प्रतनू अतीवाल्पौ क्रोध–मानौ यस्य स तथा । माया लोभश्च प्रतनुकौ 'यस्येति शेप '। प्रशान्तं प्रशमवच्चित्तं यस्य स तथा । दान्तोऽहितप्रवृत्तिनिवारकत्वेन वशीकृत आत्मा येन स तथा । शेपं प्राग्वत् ॥ तथा प्रतनुवादी स्वल्पभापक । 'चोऽग्रे योक्ष्यते' उपशान्तो जितेन्द्रियश्च। एतद्योगसमायुक्त. पद्मलेश्यां तु परिणमेदिति सूत्रयुग्मार्थं ॥ २९–३० ॥

शुक्ललेश्यालक्षणमाह—

अट्ट-रुद्दाणि वज्जित्ता धम्म-सुक्काणि झायए । पसंतचित्ते दंतप्पा समिए गुत्ते य गुत्तिसु ॥ ३१ ॥
सरागे वीयरागे वा उवसंते जिइंदिए । एयजोगसमाउत्तो सुक्कलेसं तु परिणमे ॥ ३२ ॥

अनयोर्व्याख्या—आर्त-रौद्रध्याने वर्जयित्वा धर्म-शुक्ले शुभध्याने ध्यायेद् । प्रशान्तचित्तो दान्तात्मेति च पूर्ववत् । समितः पञ्चभिः समितिभिः । गुप्तश्च निरुद्धसर्वात्मव्यापारो गुप्तिभिर्मनोगुप्त्यादिभिः 'तृतीयाऽर्थे सप्तमी' ॥ स च सरागोऽक्षीणानुपशान्तकषायः, वीतरागस्ततोऽन्यः । उपशान्तो जितेन्द्रियश्च प्राग्वत् । एतद्योगसमायुक्तः शुक्ललेश्यां तु परिणमेत् । इह च शुभलेश्यासु केषाञ्चिद् विशेषणानां पुनर्ग्रहणेऽपि लेश्याऽन्तरविषयत्वान्न पौनरुक्त्यम्, पूर्वपूर्वापेक्षयोत्तरोत्तरेषां विशुद्धितः प्रकृष्टत्वं भावनीयम् । विशिष्टलेश्याश्चापेक्ष्यैवं लक्षणाभिधानमिति न देवादिभिर्व्यभिचारः । अत्र लेश्यालक्षणेषु दृष्टान्तः—

कश्चिज्जम्बूतरुर्दृष्टः षड्भिः पुम्भिः क्षुधालुभिः । महान् पक्वफलाकीर्णस्तत्फलानि बुभुक्षुभिः ॥ १ ॥
तेष्वेकः प्रोचिवानेनं मूलाच्छित्त्वा प्रपात्य च । फलान्यद्मः सुखेनैव, द्वैतीयीकोऽवदत् किल ॥ २ ॥
छिन्नेन तरुणा किं ते कार्यम्? शाखा महत्तमाः । छित्त्वाऽऽस्वाद्य फलव्यूहं भविष्यामः सुतृप्तिकाः ॥ ३ ॥

तार्तीयीकोऽब्रवीदेवं प्रशाखाभ्य' क्षुधाशम. । कार्यस्तुर्योऽवदद् गुच्छा ग्राह्याः स्वोदरपूरका. ॥ ४ ॥
पञ्चमोऽवददाम्रोऽस्य फलौघ इह खाद्यते । पष्ठोऽवक् पतितैस्तैस्तु भविताप्त. क्षुधाच्छिदः ॥ ५ ॥
दृष्टान्तोपनयश्चैव यस्तरुच्छेदक. स तु । कृष्णलेश्यो महाशाखाच्छेत्ताऽसौ नीललेश्यकः ॥ ६ ॥
प्रशाखाच्छित् स कापोती गुच्छच्छेत्ता स तैजसः । पद्मलेश्य फलत्रोटी शुक्लः पतितभक्षक. ॥ ७ ॥

॥ इति षड्लेश्याज्ञापकोदाहरणम् ॥ ३१–३२ ॥

सम्प्रति स्थानद्वारमाह—

असखिज्जाणोसप्पिणीण उस्सप्पिणीण जे समया । संखाईया लोगा लेसाण हवंति ठाणाइं ॥ ३३ ॥

व्याख्या—असङ्ख्येयानामवसर्पिणीनामुत्सर्पिणीनां च ये समया । कियन्तः? इत्याह—सङ्ख्यातीता लोका । कोऽर्थ.? असङ्ख्येयलोकाकाशप्रदेशपरिमाणानि लेश्याना भवन्ति स्थानानि प्रकर्षापकर्षकृतानि, अशुभाना सक्लेशरूपाणि, शुभानां च विशुद्धिरूपाणि । 'तत्प्रमाणानीति शेष.' ॥ ३३ ॥

स्थितिमाह—

मुहुत्तद्ध तु जहन्ना तित्तीसा सागरा मुहुत्तहिया । उक्कोसा होइ ठिई नायव्वा किण्हलेसाए ॥ ३४ ॥

मुहुत्तद्धं तु जहन्ना दस उदही पलियमसंखभागमब्भहिया। उक्कोसा होइ ठिई नायव्वा नीललेसाए ॥३५॥
मुहुत्तद्धं तु जहन्ना तिण्णुदही पलियमसंखभागमब्भहिया। उक्कोसा होइ ठिई नायव्वा काउलेसाए ॥ ३६ ॥
मुहुत्तद्धं तु जहन्ना दुन्नुदही पलियमसंखभागमब्भहिया। उक्कोसा होइ ठिई नायव्वा तेउलेसाए ॥ ३७ ॥
मुहुत्तद्धं तु जहन्ना दस उदही हुंति मुहुत्तमब्भहिया। उक्कोसा होइ ठिई नायव्वा पम्हलेसाए ॥ ३८ ॥
मुहुत्तद्धं तु जहन्ना तित्तीसं सागरा मुहुत्तहिया। उक्कोसा होइ ठिई नायव्वा सुक्कलेसाए ॥ ३९ ॥

आसां व्याख्या—मुहूर्तसार्धो मुहूर्तार्धस्तं 'कालात्यन्तसंयोगे द्वितीया' 'तुरेवार्थे' अन्तर्मुहूर्तमेव जघन्या, त्रयस्त्रिंशत् सागरोपमाणि मुहूर्ताधिकान्युत्कृष्टा स्थितिः कृष्णलेश्यायाः। इहोत्तरत्र च समप्रविभागलक्षणस्यार्धशब्दार्थस्याविवक्षितत्वान्मुहूर्तार्धशब्देनान्तर्मुहूर्तमेव ज्ञेयम्। मुहूर्तशब्देन च पूर्वोत्तरसंभवसम्बन्ध्यन्तर्मुहूर्तद्वयं द्रष्टव्यम् ॥ मुहूर्तार्धं तु जघन्या, दशेति दशसङ्ख्यानि उदधय इत्युदध्युपमानि सागरोपमाणीत्यर्थः। पल्योपमासङ्ख्येयभागाभ्यधिकान्युत्कृष्टा भवति स्थितिर्नीललेश्यायाः। इह पूर्वोत्तरभवान्तर्मुहूर्तद्वयप्रक्षेपेऽपि पल्योपमासङ्ख्येयभाग एव। असङ्ख्येयभागानामसङ्ख्येयभेदत्वादिति भावः। एवमुत्तरत्रापि भावनीयम् ॥ उत्तरसूत्रेष्वक्षरसंस्कारस्तु कृत एव, नवरं त्रय उदधयः सागरोपमाणि ॥ द्वावुदधी द्वे सागरोपमे ॥ दशोदधयो दश सागरोपमाणि ॥

मुहूर्ताऽर्धं तु जघन्या, त्रयस्त्रिंशत् सागरोपमाणि मुहूर्ताधिकानि। मुहूर्तार्धशब्देनान्तमुहूर्तकालमेव प्राग्वत् । इति गाथापट्कार्थ ॥ ३४–३९ ॥

पूर्वोक्तमुपसंहरन्नुत्तरग्रन्थसम्बन्धमाह—

एसा खलु लेसाण ओहेण ठिई उ वन्निया होइ। चउसु वि गईसु इत्तो लेसाण ठिई उ वुच्छामि ॥४०॥

व्याख्या–स्पष्टा। नवरमोघेन सामान्येन गत्यविवक्षयेत्यर्थ । चतसृष्वपि गतिषु नरकादिषु 'प्रत्येकमिति शेष'। अत ओघस्थित्यनन्तर लेश्याना स्थितीर्वक्ष्ये ॥ ४० ॥

तामेवाह—

दस वाससहस्साइ काऊइ ठिई जहन्निया होइ । तिन्नुदही पलियमसखभागं च उक्कोसा ॥ ४१ ॥

तिण्णुदही पलियमसखभागो उ जहन्न नीलठिई। दस उदही पलियमसखभाग च उक्कोसा ॥ ४२ ॥

दस उदही पलियमसखभाग जहन्निया होइ। तित्तीससागराइ उक्कोसा होइ किण्हाए ॥ ४३ ॥

आसा व्याख्या–दश वर्षसहस्राणि कापोताया स्थितिर्जघन्यिका भवति, त्रय उदधय. सागरोपमाणि पल्योपमासङ्ख्येयभागश्चोत्कृष्टा। इय च जघन्या रत्नप्रभाया, तस्या जघन्यतो दशवर्षसहस्रायुष्कात्। उत्कृष्टा च वालुकाप्रभो-

परितनप्रस्तटनारकाणामेतावत्स्थितिकानामिति ॥ अथ उदधयः पल्योपमासङ्ख्येयभागश्च 'मकारोऽलाक्षणिकः' जघन्या स्थितिर्नीलाया वालुकायामेतावत्स्थितिकानामेव । उत्कृष्टा च दशोदधयः पल्योपमासङ्ख्येयभागश्च धूमप्रभोपरितनप्रस्तटनारकाणामेतावत्स्थितीनाम् ॥ दशोदधयः पल्योपमासङ्ख्येयभागश्च जघन्यिका भवति स्थितिर्धूमप्रभायामेतावत्स्थितिकानामेव । त्रयस्त्रिंशत् सागरोपमाण्युत्कृष्टा भवति कृष्णायाः 'स्थितिरिति प्रक्रमः' । इयं च महातमःप्रभायामेतावदायुषामेव । इह च नारकाणामुत्तरत्र देवानां द्रव्यलेश्यास्थितिरेवैवं चिन्त्यते, तद्भावलेश्यानां परिवर्तमानतयाऽन्यथाऽपि स्थितेः सम्भवात् । उक्तं हि—

"देवाण णारयाण य दव्वलेसा हवंति एयाओ । भावपरावत्तीए सुर-णेरइयाण छलेसा" ॥ १ ॥

इति गाथात्रयार्थः ॥ ४१-४३ ॥

पूर्वोक्तं निगमयन्नुत्तरग्रन्थं प्रस्तावयन्नाह—

**एसा नेरइयाणं लेसाणं ठिई उ वन्निया होइ । तेण परं वुच्छामि तिरिय-मणुस्साण देवाणं ॥४४॥**

व्याख्या—स्पष्टा, नवरं 'तेण परं'ति ततः परम् ॥ ४४ ॥

---

१ देवानां नारकाणां च द्रव्यलेश्या भवन्त्येताः । भावपरावृत्त्या सुर-नैरयिकाणां षड्लेश्याः ॥ १ ॥

प्रतिज्ञातमेवाह—

अंतोमुहुत्तमद्धं लेसाण ठिई जहि जहिं जा उ । तिरियाण नराणं च वज्जित्ता केवलं लेसं ॥ ४५ ॥

व्याख्या—अन्तर्मुहूर्ताद्धा अन्तर्मुहूर्तकालं लेश्यानां स्थिति 'जघन्योत्कृष्टा चेति शेष.'। कासाम्? इत्याह—यस्मिन् यस्मिन्निति पृथ्वीकायादौ सम्मूर्छितमनुष्यादौ च या कृष्णाद्या 'तु' पूरणे' तिरश्चा मनुष्याणां च मध्ये सम्भवन्ति। तत्र तासामेतावती स्थितिरित्यर्थं । ननु शुक्लाया अपि किमेव स्थिति ? न, इत्याह—वर्जयित्वा केवलां शुद्धां शुक्लेश्यामित्यर्थ.॥४५॥

अस्या स्थितिमाह—

मुहुत्तद्धं तु जहन्ना उक्कोसा होइ पुव्वकोडी उ । नवहि वरिसेहि ऊणा नायव्वा सुक्कलेसाए ॥ ४६ ॥

व्याख्या—मुहूर्तार्धं प्राग्वदन्तर्मुहूर्तमेव जघन्या । उत्कृष्टा भवति पूर्वकोटी 'तुर्विशेषणे' को विशेष ? इत्याह—नवभिर्वर्षैर्न्यूना ज्ञातव्या शुक्लेश्याया. 'स्थितिरिति प्रक्रम' । इह पूर्वकोट्यायुपोऽष्टवार्षिकस्य व्रतपरिणामे सत्यपि न शुक्लेश्यासम्भव इति नववर्षोनत्वमुक्तम् ॥ ४६ ॥

एसा तिरियनराण लेसाण ठिई उ वन्निया होइ । तेण परं वुच्छामि लेसाण ठिई उ देवाणं ॥४७॥

व्याख्या—सुगमा ॥ ४७ ॥

तत्स्थितिमाह—

दस वाससहस्साइं किण्हाइ ठिई जहन्निया होइ। पलियमसंखिज्जइमो उक्कोसा होइ किण्हाए ॥ ४८ ॥

व्याख्या–दश वर्षसहस्राणि कृष्णायाः स्थितिर्जघन्यिका भवति। भवनपति–व्यन्तराणां जघन्यतोऽप्येतावत्स्थितिकानामेवास्याः सम्भवात्। पल्योपमासङ्ख्येयतमः' प्रस्तावाद् भागश्च' उत्कृष्टा भवति कृष्णायाः 'स्थितिरिति [प्रक्रमः]' एवंविधविमध्यमायुषामेव भवनपति–व्यन्तराणामुत्कृष्टा द्रष्टव्या ॥ ४८ ॥

नीलायाः स्थितिमाह—

जा किण्हाइ ठिई खलु उक्कोसा सा उ समयमब्भहिया। जहन्नेणं नीलाए पलियमसंखं च उक्कोसा ॥४९॥

व्याख्या–या कृष्णायाः स्थितिः 'खलुरलङ्कारे' उत्कृष्टाऽनन्तरोक्ता सा तु सैव समयाभ्यधिका जघन्येन नीलायाः, तेषां जघन्यतोऽप्येतावत्स्थितिकत्वात्। 'पलियमसंखं च'त्ति पल्योपमासङ्ख्येयभागश्चोत्कृष्टा स्थितिर्नवरं बृहत्तरोऽयं भागः ॥ ४९ ॥

जा नीलाइ ठिई खलु उक्कोसा सा उ समयमब्भहिया। जहन्नेणं काऊए पलियमसंखं च उक्कोसा ॥५०॥

व्याख्या–या नीलायाः स्थितिरुत्कृष्टा सैव समयाभ्यधिका जघन्येन कापोतायाः। पल्योपमासङ्ख्येयभागश्चोत्कृष्ट स्थितिरेतावदायुषां भवनपति–व्यन्तराणामिहापि पूर्वस्माद् बृहत्तमो भागो ज्ञेयः ॥ ५० ॥

इत्थं निकायद्वयसाध्यलेश्यात्रयमुक्त्वा चतुर्निकायसम्भाविनीं तेजोलेश्यास्थितिमाह—

तेण परं वुच्छामि तेउलेसा जहा सुरगणाणं । भवणवइ–वाणमंतर–जोइस–वेमाणियाणं च ॥ ५१ ॥

व्याख्या–ततः परं प्रवक्ष्यामि तेजोलेश्या यथा येनावस्थानप्रकारेण सुरगणानां भवति 'तथेत्युपस्कारः' । केषाम् ? इत्याह–भवनपति–व्यन्तर–ज्योतिर्वैमानिकानाम् 'च' पूरणे' ॥ ५१ ॥

प्रतिज्ञातमाह—

पलिओवमं जहन्ना उक्कोसा सागरा उ दुन्नहिया । पलियमसंखिज्जेणं होइ भागेण तेऊए ॥ ५२ ॥

व्याख्या–पल्योपमं जघन्या । तथोत्कृष्टा सागरे तु सागरोपमे द्वे द्विसङ्ख्ये अधिके पल्योपमासङ्ख्येयेन भागेन भवति तैजस्यास्तेजोलेश्यायाः 'स्थितिरिति प्रक्रमः' । इयं च सामान्योपक्रमेऽपि वैमानिकनिकायविषयतया नेया । तत्र सौधर्मेशानदेवानां जघन्योत्कृष्टाभ्यामेतावदायुषः सम्भवात् । उपलक्षणाच्छेषनिकायानामपि तेजोलेश्या स्थितिर्ज्ञेया ॥५२॥

दस वाससहस्साइं तेऊइ ठिई जहन्निया होइ । दुन्नुदही पलिओवमअसंखभागं च उक्कोसा ॥ ५३ ॥

व्याख्या–स्पष्टा, नवरमनेन निकायभेदमनङ्गीकृत्यैव लेश्यास्थितिरुक्ता । तैजसा दशवर्षसहस्रात्मिका जघन्या स्थितिर्भवनपति–व्यन्तराणाम् । उत्कृष्टा त्वीशाने एवेति ॥ ५३ ॥

पद्मायाः स्थितिमाह—

जा तेऊइ ठिई खलु उक्कोसा सा उ समयमब्भहिया । जहन्नेणं पम्हाए दस उ मुहुत्ताहियाइं उक्कोसा॥५४॥

व्याख्या—या तैजस्याः स्थितिः खलूत्कृष्टा 'सा उ'त्ति 'तुरेवार्थे' सैव समयाधिका जघन्येन पद्मायाः 'स्थितिरिति प्रक्रमः' । दशैव 'प्रस्तावात् सागरोपमाणि' मुहूर्ताधिकान्युत्कृष्टा । इयं च जघन्या सनत्कुमारे, उत्कृष्टा च ब्रह्मलोके, अनयोरेवैतदायुष्कसम्भवात् ॥ ५४ ॥

शुक्ललेश्यास्थितिमाह—

जा पम्हाइ ठिई खलु उक्कोसा सा उ समयमब्भहिया । जहन्नेणं सुक्काए तित्तीसमुहुत्तमब्भहिया ॥५५॥

व्याख्या—या पद्मायाः स्थितिः खलूत्कृष्टा सैव समयाभ्यधिका जघन्येन शुक्लायाः 'स्थितिरिति प्रक्रमः' । त्रयस्त्रिंशन् मुहूर्ताभ्यधिकानि सागरोपमाणि 'उत्कृष्टेति गम्यते' । अस्याश्च लान्तकाख्यषष्ठदेवलोकादारभ्य सर्वार्थसिद्धिं यावत् सम्भवादत्रैवैतावदायुषो भाव इति कृत्वा ॥ ५५ ॥

गतिद्वारमाह—

किण्हा नीला काऊ तिन्नि वि एयाओ अहम्मलेसाओ । एयाहिं तिहिं वि जीवो दुग्गइं उववज्जई ॥ ५६ ॥

तेऊ पम्हा सुक्का तिन्नि वि एयाओ धम्मलेसाओ । एयाहिं तिहि वि जीवो सुग्गइं उववज्जई ॥ ५७ ॥

अनयोर्व्याख्या–कृष्णाद्यास्तिस्रो लेश्या अधर्मलेश्या पापोपादानहेतुत्वात्, अधमलेश्या वा अविशुद्धत्वेन । एताभिस्तिसृभिर्लेश्याभिर्जीवो दुर्गतिं नरक–तिर्यग्गतिरूपामुपपद्यते 'धातूनामनेकार्थत्वात्' प्राप्नोति ॥ तैजस्या-द्यास्तिस्रोऽप्येता लेश्या धर्मलेश्या विशुद्धत्वेनासां धर्महेतुत्वात् । अत एवैताभिस्तिसृभिर्लेश्याभिर्जीव' सुगतिं देव-मनुष्यगतिलक्षणां मुक्तिं वोपपद्यते तथाविधायुर्बन्धत इति गाथाद्वयार्थः ॥ ५६–५७ ॥

ननु जन्मान्तरभाविलेश्यायाः किं प्रथमसमये परभवायुष उदयः ? उत चरमसमयेऽथान्यथा वा ? इत्याशङ्क्यायुर्द्वारावसर एव तदुत्तरमाह—

लेसाहिं सव्वाहिं पढमे समयंमि परिणयाहिं तु । न हु कस्सइ उववाओ परभवे अत्थि जीवस्स ॥ ५८ ॥

लेसाहि सव्वाहिं चरमे समयमि परिणयाहि तु । न हु कस्सइ उववाओ परभवे अत्थि जीवस्स ॥ ५९ ॥

अनयोर्व्याख्या–सर्वाभिर्लेश्याभिः षड्भिरपि प्रथमे समये तत्प्रतिपत्तिकालापेक्षया परिणताभिरात्मरूपतामापन्नाभिः 'तु' पूरणे 'न हु'त्ति नैव कस्याप्युत्पत्तिः परभवेऽस्ति जीवस्य ॥ [ सर्वाभिः ] लेश्याभिश्चरमसमयेऽन्त्यसमये परिणताभिस्तु 'न हु' नैव कस्याप्युत्पत्ति. परभवे भवति जीवस्य ॥ ५८–५९ ॥

कदा तर्हि? इत्याह—

**अंतोमुहुत्तंमि गए अंतमुहुत्तंमि सेसए चेव । लेसाहिं परिणयाहिं जीवा गच्छंति परलोयं ॥ ६० ॥**

व्याख्या—अन्तर्मुहूर्ते गते एवातिक्रान्ते, तथाऽन्तर्मुहूर्ते शेषके चैवावतिष्ठमाने एव, लेश्याभिः परिणताभिरुपलक्षिता जीवा गच्छन्ति परलोकं भवान्तरम् । इत्थं चैतत्; मृतिकाले भाविभवलेश्यायाः, उत्पत्तिकाले चातीतभवलेश्यायाः सद्भावात् । देवानां नारकाणां च च्यवनानन्तरं नर-तिर्यक्षूत्पन्नानां प्राग्भवलेश्यायास्तावत्कालमवस्थितत्वात् । नर-तिरश्चां देव-नारकेषूत्पत्स्यमानानां मृतिकालेऽन्तर्मुहूर्तमुत्तरभवलेश्याया अन्तर्मुहूर्तमवश्यम्भावात् । न चैतदन्यथा, उक्तं च—

"[1]तिरि नर आगामिभवलेसाए अइगए सुरा निरया । पुव्वभवलेससेसे अंतमुहुत्ते मरणमिंति" ॥ १ ॥

अत एव देव-नारकाणां लेश्यायाः प्रागुत्तरभवान्तर्मुहूर्तद्वयसहितनिजायुःकालं यावदवस्थितत्वमुक्तमागमे । तथा च प्रज्ञापनासूत्रम्—"[2]जल्लेसाइं दव्वाइं आयइत्ता कालं करेइ, तल्लेसेसु उववज्जइ । तथा कण्हलेसे नेरइए उववज्जति, कण्हलेसे उवट्टइ" ॥ इत्यादि । देवालापकोऽप्येवम् । अनेनान्तर्मुहूर्तावशेषे आयुषि परभवलेश्यापरिणाम इति भावः ॥ ६० ॥

१ तिर्यञ्चो नरा आगामिभवलेश्याया अतिगते, सुरा नैरयिकाः । पूर्वभवलेश्याशेषेऽन्तर्मुहूर्ते मरणं यान्ति ॥ १ ॥
२ यल्लेश्यानि द्रव्याण्यादाय कालं करोति, तल्लेश्येषूपपद्यते । तथा कृष्णलेश्यो नैरयिक उपपद्यते, कृष्णलेश्य उद्वर्तते ॥

सम्प्रत्यध्ययनार्थमुपसंजिहीर्पुराह—

तम्हा एयासि लेसाणं अणुभागे वियाणिया ।
अप्पसत्थाओ वज्जित्ता पसत्थाओ अहिट्ठिए मुणि ॥ ६१ ॥ त्ति बेमि ॥

व्याख्या–यस्मादप्रशस्ता एता दुर्गतिहेतवः । प्रशस्ताश्च सुगतिहेतवः । तस्मादेतासामनन्तरमुक्तानां लेश्यानामनुभागं विज्ञायाप्रशस्ता, कृष्णाद्यास्तिस्रो वर्जयित्वा प्रशस्तास्तैजसाद्यास्तिस्रोऽधितिष्ठेत भावप्रतिपत्त्याऽऽश्रयेन्मुनिरिति ब्रवीमीति प्राग्वत् ॥ ६१ ॥ ग्रं० २६९ अ० १६ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां लेश्याऽध्ययननामकं चतुस्त्रिंशमध्ययनं समाप्तम् ॥ ३४ ॥

# अथानगारमार्गगतिनामकं पञ्चत्रिंशमध्ययनम् ।



अनन्तराध्ययने लेश्या उक्तास्ताश्चाप्रशस्तास्त्याज्याः, प्रशस्ताश्चाधिष्ठातव्याः । एतच्च भिक्षुगुणवतैव कर्तुं शक्यमिति भिक्षुगुणाभिधायकं पंचत्रिंशमध्ययनमारभ्यते—

सुणेह मे एगग्गमणे(णा) मग्गं बुद्धेहिं देसियं । जमायरंतो भिक्खू दुक्खाणंतकरो भवे ॥ १ ॥

व्याख्या—शृणुत मे मम 'कथयत इति शेषः' एकाग्रमनसः 'शिष्या इति शेषः' । किम् ? इत्याह—मार्गं 'प्रक्रमान्मुक्तेः' बुद्धैरवगतसम्यक्तत्त्वैरर्हदादिभिरर्थतः, सूत्रतो गणधरादिभिर्देशितम् । यं मार्गमाचरन्नासेवमानो भिक्षुरनगारो दुःखानां मानसादीनामन्तः पर्यन्तस्तत्करणशीलोऽन्तकरो भवेत् सर्वकर्मनिर्मूलनादिति भावः ॥ १ ॥

यथाप्रतिज्ञातमाह—

गिहवासं परिच्चज्ज पव्वज्जामस्सिए मुणी । इमे संगे वियाणिज्जा जेहिं सज्जंति माणवा ॥ २ ॥

तहेव हिंसं अलियं चोज्जं अब्बंभसेवणं । इच्छा कामं च लोहं च संजओ परिवज्जए ॥ ३ ॥

अनयोर्व्याख्या—गृहवासं गृहावस्थानं परित्यज्य प्रव्रज्यां सर्वसङ्गत्यागलक्षणां दीक्षामाश्रितो मुनिरिमान् प्रत्यक्षान् सङ्गान् पुत्रादिप्रतिबन्धान् विजानीयाद् भवहेतवोऽमीति विशेषेणावबुध्येत । ज्ञानस्य विरतिफलत्वात् प्रत्याच-

क्षीतेत्युक्तं स्यात्। सङ्गस्वरूपमाह—'जेहिं'ति 'सुब्व्यत्ययाद्' येषु सज्यन्ते प्रतिबध्यन्ते मानवाः 'उपलक्षणत्वादन्येऽपि जीवा'॥ तथैव हिंसां प्राणनाशम्, अलीकं, चौर्यं च स्पष्टम्, अब्रह्मसेवन मैथुनाचरणम्, इच्छा, काममप्राप्तवस्तुकाङ्क्षारूपम्, लोभं च लब्धवस्तुगृद्ध्यात्मकमनेनोभयेनापि परिग्रह उक्तस्त च संयतो यतिः परिवर्जयेत् । अनेन मूलगुणा उक्ताः। इति गाथाद्वयार्थः ॥ २—३ ॥

अथोपाश्रयाचारविधिमाह—

मणोहरं चित्तघरं मल्लधूवेण वासियं । सकवाडं पंडुरुल्लोयं मणसा वि न पत्थए ॥ ४ ॥

व्याख्या-मनोहरं चित्ताक्षेपकम्, चित्रप्रधानं गृहं चित्रगृहम्, कीदृशं? माल्यैर्ग्रथितपुष्पैर्धूपनैश्चागुरु-तुरुष्कादिभिर्वासित सुरभीकृतम्, सह कपाटेन वर्तत इति सकपाटम्, तदपि पाण्डुरोल्लोचं श्वेतचन्द्रोदयं मनसाऽप्यास्तां वचसा न प्रार्थयेन्नाभिलषेत्, किं पुनस्तत्र तिष्ठेदिति भावः ॥ ४ ॥

कुत.? इत्याह—

इंदियाणि उ भिक्खुस्स तारिसंमि उवस्सए। दुक्कराइं निवारेउं (तु धारेउं) कामरागविवड्ढणे॥५॥

व्याख्या-इन्द्रियाणि 'तुः' यस्माद् भिक्षोर्यतेस्तादृशे उपाश्रये दुष्कराणि 'करोतेः सर्वधात्वर्थत्वाद्' दु.शकानि

'तुरेवार्थे' निवारयितुं नियन्त्रयितुं 'स्वस्वविषयप्रवृत्तेरिति गम्यते' । किम्भूते ? कामा मनोज्ञा इन्द्रियविषयास्तेषु रागस्तस्य विवर्धने । तथा च तथाविधचित्तव्याक्षेपसम्भवान्मूलगुणस्यातीचारदोपसम्भव इत्युपदेश इति भावः॥५॥

तर्हि कीदृशे स्थेयम् ? इत्याह—

सुसाणे सुन्नगारे वा रुक्खमूले व एगओ । पइरिक्के परकडे वा वासं तत्थाभिरोयए ॥ ६ ॥

फासुयंमि अणाबाहे इत्थीहिं अणभिद्दुए । तत्थ संकप्पए वासं भिक्खू परमसंजए ॥ ७ ॥

अनयोर्व्याख्या—श्मशाने शून्यागारे वा वृक्षमूले वा 'एगउ' त्ति एकको राग–द्वेपरहितोऽसहायो वा । 'पइरिक्के'त्ति देशीभाषयैकान्ते स्त्र्याद्यसङ्कुले परकृते परैरन्यैर्निष्पादिते 'स्वार्थमिति गम्यम्' वासमवस्थानं तत्र श्मशानादावभिरोचयेत् प्रतिभासयेद् 'अर्थादात्मनः' 'भिक्षुरिति योगः'॥ प्रासुकेऽचित्तीभूते भूभागेऽनाबाधे स्वस्य परेषां च बाधारहिते स्त्री–पण्डकादिभिरनभिद्रुते तदुपद्रवरहिते तत्र प्रागुक्तश्मशानादौ सङ्कल्पयेत् सम्यक् कुर्याद् वासमवस्थानं भिक्षुः । स च शाक्यादिरपि स्यादत आह—परमसंयतो मोक्षोद्यतोऽर्हन्मार्गाश्रित इति । प्रागभिरोचयेदित्युक्ते कश्चिद् रुचिमात्रेणैव तुष्येदित्यत्र सङ्कल्पयेत् कुर्यादित्युक्तम् ॥ ६–७ ॥

परकृत इति किमुक्तम्? अत आह—

न सय गिहाइं कुविज्जा नेव अन्नेहि कारए। गिहकम्मसमारंभे भूयाणं दिस्सए वहो ॥ ८ ॥

व्याख्या—न स्वयं गृहाणि कुर्वीत। नैवान्यैर्गृहस्थादिभिः कारयेद्'उपलक्षणत्वान्नापि कुर्वन्तमनुमन्येत'। यतो गृहकर्मेष्टका—मृदानयनादि तस्य समारम्भस्तस्मिन् भूतानामेकेन्द्रियादीना दृश्यते वधो विनाशः ॥ ८ ॥

पुन केषाम्? इत्याह—

तसाणं थावराण च सुहुमाण बायराण य। तम्हा गिहसमारंभ संजओ परिवज्जए ॥ ९ ॥

व्याख्या—त्रसानां द्वीन्द्रियादीनाम्, स्थावराणां पृथिव्यादीनां 'च समुच्चये', सूक्ष्माणा श्लक्ष्णानामङ्गापेक्षया, बादराणा स्थूलाना तथैव। यस्मादेवं वधस्तस्माद् गृहसमारम्भ संयतः परिवर्जयेदिति गाथाऽर्थः ॥ ९ ॥

अथाहारचिन्तामाह—

तहेव भत्त—पाणेसु पयणे पयावणेसु य। पाण—भूयदयट्ठाए न पए न पयावए ॥ १० ॥

जल—धन्ननिस्सिया जीवा पुढवी—कट्ठनिस्सिया। हम्मंति भत्त—पाणेसु तम्हा भिक्खू न पयावए॥११॥

अनयोर्व्याख्या—तथैव भक्तान्योदनादीनि, पानानि पयःप्रभृतीनि तेषु पचनानि स्वयं क्वथनादीनि, पाचनानि

च तान्येवान्यैः पचन-पाचनानि तेषु च 'भूतवधो दृश्यत इति प्रक्रमः'। ततः किम्? इत्याह-प्राणा द्वीन्द्रियादयः, भूताः पृथ्व्यादयस्तेषां दयाऽर्थं रक्षाऽर्थं न पचेत् स्वयं, न पाचयेदन्यैरिति॥ अमुमेवार्थं स्पष्टतरमाह—जलं च धान्यं च तेषु निश्रितास्तत्रान्यत्र चोत्पन्ना वा तन्निश्रिता जीवाः पृथिवी-काष्ठनिश्रिता हन्यन्ते भक्त-पानेषु पच्यमानेषु। यत एवं तस्माद् भिक्षुने पाचयेद् 'अपेर्गम्यत्वान्न स्वयं पचेदन्यं वा पचन्तं नानुमन्येत' इति गाथाद्वयार्थः॥१०-११॥

अपरं च—

विसप्पे सव्वओ-धारे बहुपाणविणासणे। नत्थि जोइसमे सत्थे तम्हा जोइं न दीवए॥ १२॥

व्याख्या-विसर्पतीति विसर्पं यत् स्वल्पमपि बहु भवति। सर्वतः सर्वासु दिक्षु धारा जीवनाशिनी शक्तिरस्येति सर्वतोधारं सर्वदिगवस्थितजन्तूपघातकत्वादत एव बहुप्राणविनाशनं नास्ति ज्योतिःसममग्नितुल्यं शस्त्रमन्यदिति। 'सर्वत्र लिङ्गव्यत्ययः प्राकृतत्वात्'। तस्माज्ज्योतिर्वह्निं न दीपयेन्न ज्वालयेदनेन पचनस्याग्निज्वलनाविनाभावित्वात् तत्त्याग एव समर्थितः। तत्प्रसङ्गतः शीतापनोदाद्यर्थमपि तदारम्भनिषेध एवावसेयः॥ १२॥

पचनादौ जीवघातहेतुत्वान्निषेधोऽस्तु, तदभावमिच्छता क्रय-विक्रयाभ्यां निर्वाहः क्रियत इत्याशङ्क्याह—

हिरण्णं जायरूवं च मणसा वि न पत्थए। समलेट्ठु-कंचणे भिक्खू विरए कय-विक्कए॥ १३॥

किणंतो कइओ होइ विक्किणंतो य वाणिओ । कय–विक्कयंमि वट्टंतो भिक्खू हवइ न तारिसो ॥१४॥
भिक्खियव्व न केयव्वं भिक्खुणा भिक्खवत्तिणा।कय–विक्कओ महादोसो भिक्खवित्ती सुहावहा ॥१५॥

आसा व्याख्या–हिरण्यं हेम, जातरूप रूप्यं 'चशब्दाद् धन–धान्यादि' मनसाऽप्यास्तां वाचा न प्रार्थयेन्ममामुकं स्यादिति । 'अपेर्गम्यत्वात्' प्रार्थयेदपि न, किं पुन. परिगृह्णीयाद् 'भिक्षुरिति योगः' । कीदृशः ? समलेष्टु—काञ्चनः । विरतो निवृत्तः । कुत ? क्रयो मूल्येनान्यस्माद् वस्तुग्रहणम्, विक्रयो मूल्येनान्यस्य स्ववस्तुदानं तत. समाहारस्तस्मात् 'पञ्चम्यर्थे सप्तमी' ॥ किमित्येवम् ? अत आह–क्रीणन् क्रयिको भवतीतरलोकवत् । विक्रीणानश्च वणिग् भवति । वाणिज्यप्रवृत्तत्वादिति भाव. । अत एव क्रय-विक्रये वर्तमानो भिक्षुर्भवति न तादृशो यादृशः सूत्रोक्तो भावभिक्षुरिति भाव ॥ तत. किम्? इत्याह–भिक्षितव्यं याचितव्यं 'तथाविध वस्त्विति गम्यम्', न क्रेतव्यं मूल्येन गृहीतव्यम्, केन? भिक्षुणा।कीदृशा? भिक्षयैव वृत्तिर्निर्वाहोऽस्येति भिक्षावृत्तिस्तेन । यतः क्रय–विक्रयो महादोषो भिक्षावृत्ति. शुभावहा सुखावहा वा इहलोक–परलोकयोरिति गाथात्रयार्थः ॥ १३–१५ ॥

भिक्षितव्यमित्युक्त तच्चैकत्रैवापि स्यादत आह—

समुयाणं उंछमेसिज्जा जहासुत्तमणिदियं । लाभालाभंमि सतुट्ठे पिंडवायं चरे मुणी ॥ १६ ॥

व्याख्या—समुदानं भैक्ष्यं तच्चोञ्छमिवोञ्छमन्यान्यगृहादल्पाल्पमीलनान्मधुकरवृत्त्या हि भ्रमत एव स्यादिति, एषयेद् गवेषयेद् यथासूत्रं श्रुतानतिक्रमेणात एवानिन्दितमजुगुप्सितं जात्यादिजुगुप्सितजनसम्बन्धि वा न स्यात्। तथा लाभालाभेऽशनादेः प्राप्तावप्राप्तौ च सन्तुष्टः सन्तोषवान् पिण्डपातं भिक्षाऽटनं तच्चरेदासेवेत मुनिः ॥ १६ ॥

यथा भुञ्जीत तथाऽऽह—

अलोलो न रसे गिद्धो जिब्भादंतो अमुच्छिए। न रसट्ठाए भुंजिज्जा जवणट्ठाए महामुणी ॥ १७ ॥

व्याख्या—अलोलः सरसाहारे प्राप्ते न लाम्पट्यवान्, न रसे स्निग्ध—मधुरादौ गृद्धः। 'जिब्भादंतो'त्ति 'प्राकृतत्वात् दान्तस्य परनिपाते' दान्ता वशीकृता जिह्वा येन स दान्तजिह्वोऽत एवामूर्च्छितः संनिधेरकरणेन तत्कालेऽप्यभिष्वङ्गाभावेन। एवंविधश्च न नैव 'रसट्ठाए'त्ति रसो धातुविशेषः 'स चाशेषधातूपलक्षणम्' ततो यथा तदुपचयः स्यात् तदर्थं न भुञ्जीत। तर्हि किमर्थम्? इत्याह—यापना निर्वाहोऽर्थात् संयमस्य तदर्थं महामुनिर्भुञ्जीतेति ॥ १७ ॥

अर्चनादिनिषेधमाह—

अच्चणं रयणं चेव वंदणं पूयणं तहा। इड्ढी—सक्कार—सम्माणं मणसा वि न पत्थए ॥ १८ ॥

व्याख्या—अर्चनां पुष्पादिभिः पूजाम्, रचनां निषद्यादिविषयां स्वस्तिकादिन्यासात्मिकां वा। 'चैवेति समुच्चया-

वधारणयो' 'नेत्यत्र सम्भन्त्स्यते' वन्दनं नमस्तुभ्यमिति वाचाऽभिष्टवनम्, पूजनं वस्त्रादिभिः प्रतिलाभनम्, तथा ऋद्धिरामर्पौषध्यादिरूपा, सत्कारोऽर्थदानादि, सन्मानोऽभ्युत्थानादिरित्यादि मनसाऽप्यास्तां वाचा न प्रार्थयेन्ममैव स्यादिति नैवाभिलपेत् ॥ १८ ॥

कि पुन. कुर्यात् ?—

सुक्कज्झाणं झियाइज्जा अनियाणे अकिंचणे। वोसट्ठकाए विहरिज्जा जाव कालस्स पज्जओ ॥ १९ ॥

व्याख्या–शुक्लध्यानं प्रागुक्तं यथा स्यात् तथा ध्यायेदनिदानो निदानरहितोऽकिञ्चनो निष्परिग्रहो व्युत्सृष्टः कायो येन स तथा विहरेद् 'अप्रतिबद्धविहारितयेति गम्यम्' 'यावदिति मर्यादायाम्' कालस्य मृत्यो. पर्याय. प्रस्तावो यावन्मरणसमय' क्रमप्राप्त. स्यादिति ॥ १९ ॥

काले प्राप्ते विधिं फलं चाह—

णिज्जूहिऊण आहारं कालधम्मे उवट्ठिए। चइऊण माणुसं बोंदिं पहू दुक्खे विमुच्चई ॥ २० ॥

व्याख्या–'णिज्जूहिऊण'त्ति परित्यज्याहार सलेखनाक्रमेण, झगिति तत्त्यागे वहुदोषसम्भवाद्। उक्तं च—

"देहंमि असलिहिए सहसा धाऊहिं खिज्जमाणेहिं। जायइ अट्टज्झाण सरीरिणो चरमकालंमि" ॥ १ ॥

---

१ देहेऽसलिखिते सहसा धातुषु क्षीयमाणेषु। जायते आर्तध्यान शरीरिणश्चरमकाले ॥ १ ॥

कदा ? इत्याह—कालधर्मे आयुःक्षयलक्षणे उपस्थिते प्रत्यासन्नीभूते त्यक्त्वा मानुषीं मनुष्यसम्बन्धिनीं बोंदिं शरीरं प्रभुर्वीर्यान्तरायक्षयतो विशिष्टसामर्थ्यवान् दुःखैः शारीरादिभिर्विमुच्यते तद्धेतुकर्मापगमत इति भावः ॥ २० ॥

कीदृशः सन् ? इत्याह—

निम्ममो निरहंकारो वीयरागो अणासवो। संपत्तो केवलं नाणं सासयं परिनिव्वुडे ॥२१॥ त्ति बेमि ॥

व्याख्या—निर्ममोऽपगतममकारः, निरहङ्कारः प्राग्वत्। यतो वीतरागः 'उपलक्षणाद् वीतद्वेषश्च'। अनाश्रवः कर्माश्रवरहितः। सम्प्राप्तः केवलं ज्ञानं शाश्वतं कदाचिदप्यव्यवच्छेदात्, परिनिर्वृतोऽस्वास्थ्यहेतुकर्माभावतः सर्वथा स्वस्थीभूत इति ब्रवीमीति पूर्ववत् ॥ २१ ॥ ग्रं. १०२ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायामनगारमार्गगतिनामकं पञ्चत्रिंशमध्ययनं समाप्तम् ॥ ३५ ॥

# अथ जीवाजीवविभक्तिसंज्ञं षट्त्रिंशमध्ययनम्।

अनन्तराध्ययने भिक्षुगुणा उक्तास्ते च जीवाजीवस्वरूपपरिज्ञानत एवासेवितु शक्यन्त इति तज्ज्ञापनार्थमधुना षट्त्रिंशमध्ययनमारभ्यते—

जीवाजीवविभत्तिं सुणेह मे एगमणा इओ। जं जाणिऊण भिक्खू सम्मं जयइ संयमे ॥ १ ॥

व्याख्या–जीवाश्चोपयोगलक्षणा अजीवाश्च तद्विपरीता जीवाजीवास्तेषां विभक्तिस्तत्तद्भेदादिदर्शनाद् विभागेनावस्थापनं जीवाजीवविभक्ति मे मम 'कथयत इति गम्यते' शृणुत 'हे शिष्या इति शेषः' किम्भूताः सन्तः? एकमनस एकाग्रचित्ता इत इत्यस्मादनन्तराध्ययनश्रवणादनन्तरम्। यां जीवाजीवविभक्तिं ज्ञात्वा भिक्षुः सम्यक् प्रशस्तं यथा स्यादेवं यतते यत्नं कुरुते। क? सयमे ॥ १ ॥

तामेवाह—

जीवा चेव अजीवा य एस लोए वियाहिए। अजीवदेसमागासे अलोए से वियाहिए ॥ २ ॥

व्याख्या–जीवाश्चैवाजीवाश्च। कोऽर्थः? जीवाजीवरूप एष प्रतिप्राणिप्रतीतो लोको व्याख्यातोऽर्हदादिभिरिति।

जीवाजीवानामेव यथायोगमाधाराधेयतया व्यवस्थितानां लोकत्वात्। अजीवो धर्माधर्माकाश-पुद्गलात्मकस्तस्य देशोंऽशोऽजीवदेश आकाशमलोकः स व्याख्यातो धर्मास्तिकायादिवृत्तिरहितस्याकाशस्यैवालोकत्वात्। उक्तं च—

"धर्मादीनां वृत्तिर्द्रव्याणां भवति यत्र तत् क्षेत्रम्। तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम्" ॥ १ ॥

इति जीवाजीवविभक्तिप्रसङ्गतो लोकालोकविभक्तिरप्युक्तेति भावः ॥ २ ॥

जीवाजीवविभक्तिर्यथा स्यात् तथाऽऽह—

**दव्वओ खित्तओ चेव कालओ भावओ तहा। परूवणा तेसिं भवे जीवाणमजीवाण य ॥ ३ ॥**

व्याख्या-द्रव्यतो द्रव्यमाश्रित्येदमियद्भेदं द्रव्यमिति। क्षेत्रतश्चेदमियति क्षेत्र इति। कालत इदमियत्कालस्थितिकमिति। भावत इमे अस्य पर्याया इति। प्ररूपणा तेषां विभजनीयत्वेन प्रक्रान्तानां भवेज्जीवानामजीवानां चेति॥३॥

स्वल्पवक्तव्यामजीवप्ररूपणां द्रव्यत आह—

**रूविणो चेवरूवी य अजीवा दुविहा भवे। अरूवी दसहा वुत्ता रूविणो वि चउव्विहा ॥ ४ ॥**

व्याख्या-रूपं स्पर्शाद्याश्रया मूर्त्तिस्तदेषामस्तीति रूपिणः, 'चः समुच्चये' 'रूविणो चेव'इत्यतो चकारादकारप्रश्लेपाद् वचनव्यत्ययाच्चारूपिणश्च नैषां तादृग् रूपमस्तीति कृत्वा। अजीवा द्विविधा 'भवे'त्ति भवेयुस्तत्राप्यरूपिणो दशधा दशप्रकारा उक्ताः 'अर्हदादिभिरिति शेषः'। रूपिणः पुनश्चतुर्विधा 'उभयत्राजीवा इति प्रक्रमः' ॥ ४ ॥

अरूपिणो दशविधत्वमाह—

धम्मत्थिकाए तद्देसे तप्पएसे य आहिए । अहम्मे तस्स देसे य तप्पएसे य आहिए ॥ ५ ॥

आगासे तस्स देसे य तप्पएसे य आहिए । अद्धासमए चेव अरूवी दसहा भवे ॥ ६ ॥

अनयोर्व्याख्या—धर्मास्तिकायो गत्युपष्टम्भलक्षणः सर्वदेशप्रदेशानुगतसमानपरिणतिमद् द्रव्यम् १ । तस्य धर्मास्तिकायस्य देशस्त्रिभाग–चतुर्भागादिस्तद्देशः २ । तस्यैव प्रदेशो निरंशो भागस्तत्प्रदेशः ३ आख्यातः कथितः । अधर्मास्तिकायः स्थित्युपष्टम्भकलक्षणः ४ । तस्याधर्मास्तिकायस्य देशश्चोक्तरूपः ५ । तस्यैव प्रदेशस्तथाविध एव ६ तत्प्रदेशः ॥ आकाशास्तिकायोऽवकाशावष्टम्भकः ७ । तद्देशः ८ । तत्प्रदेशः ९ आख्यातः । अद्धा कालो वर्तनालक्षणस्तद्रूपः समयोऽद्धासमयो निर्विभागत्वाच्चास्य न देशप्रदेशसम्भवः १० । एवमरूपिणो दशधा भवेयुरिति गाथाद्वयार्थः ॥ ५–६ ॥

एतानेव क्षेत्रत आह—

धम्माधम्मे य दो एए लोगमित्ता वियाहिया । लोगालोगे य आगासे समए समयखित्तिए ॥७॥

व्याख्या—धर्माधर्मौ धर्मास्तिकायाधर्मास्तिकायौ च द्वावप्येतौ लोकमात्रौ लोकपरिमाणौ व्याख्यातौ । तथा

लोकेऽलोके चाऽऽकाशं सर्वगतत्वात् तस्य । समय इत्यद्धासमयः समयोपलक्षितं क्षेत्रमर्धतृतीयद्वीप–समुद्रास्तद्विषयभूतमस्यास्तीति समयक्षेत्रिकस्ततपरतस्तस्यासम्भवात् । आवलिकादयोऽपि कालभेदाः समयमूलत्वादेतत्क्षेत्रवर्तिन एव ज्ञेयाः ॥ ७ ॥

एतानेव कालत आह—

धम्माधम्मागासा तिन्नि वि एए अणाइया । अपज्जवसिया चेव सवद्धं तु वियाहिया ॥ ८ ॥

समए वि संतइं पप्प एवमेव वियाहिये । आएसं पप्प साईए सपज्जवसिए वि य ॥ ९ ॥

अनयोर्व्याख्या–धर्माधर्माकाशानि त्रीण्यप्येतान्यनादिकानि, इतः कालात् प्रभृत्यमूनि प्रवृत्तानीत्यसम्भवात्; अपर्यवसितान्यनन्तानीत्यर्थः, न हि कुतश्चित् कालात् परत एतेषामसम्भव इति । 'चैवावधारणे' । सर्वाद्धां तु सर्वकालमेव सर्वदा स्वरूपापरित्यागतो नित्यानीति यावद् व्याख्यातानीति'लिङ्गव्यत्ययः प्राकृतत्वात्' ॥ समयोऽपि सन्ततिमपरापरोत्पत्तिरूपप्रवाहात्मिकां प्राप्याश्रित्यैवमेवानाद्यपर्यवसितत्वलक्षणेन प्रकारेण व्याख्यातः । आदेशं विशेषं प्रतिनियतव्यक्त्यात्मकं प्राप्याङ्गीकृत्य सादिकः सपर्यवसितोऽपि च 'समय इति योज्यम्' । विशेषापेक्षया ह्यभूत्वाऽयं भवति, भूत्वा च न भवतीति सादिनिधन उच्यते इति गाथाद्वयार्थः ॥ ८–९ ॥

इत्थमजीवानामरूपिणां द्रव्य–क्षेत्र–कालैः प्ररूपणा कृता । सम्प्रति भावप्ररूपणायां प्रस्तुतायामप्यमीषाममूर्त-

त्वेन वर्णादिपर्याया. प्ररूप्यमाणा अपि नावगन्तुं शक्या' । अनुमानतस्तु द्रव्याणां पर्यायावियुतत्वेन भावा गम्यन्त एवेति भावप्ररूपणामनादृत्य रूपिणो द्रव्यत. प्ररूपयितुमाह—

खंधा य खंधदेसा य तप्पएसा तहेव य । परमाणुणो य बोधव्वा रूविणो य चउव्विहा ॥ १० ॥

व्याख्या–स्कन्धा. १ 'चः समुच्चये' । स्कन्धाना देशा भागा' स्कन्धदेशाः २ । स्कन्धाना प्रदेशा निरंशा भागास्तत्प्रदेशाः ३ । तथैव च परमाणवो निर्विभागद्रव्यरूपाश्च ४ बोद्धव्या ज्ञातव्या रूपिण. 'च पुन.' चतुर्विधाश्चतुष्प्रकारा इति ॥ १० ॥

इह देश–प्रदेशानां स्कन्धेष्वेवान्तर्भावात् स्कन्धाः परमाणवश्चेति समासतो द्वावेव रूपिद्रव्यभेदौ । तयोश्च किं लक्षणम्? इत्याह—

एगत्तेण पहुत्तेण खधा य परमाणुणो ।
लोएगदेसे लोए य भइयव्वा ते उ खित्तओ ॥
इत्तो कालविभाग तु तेसि वुच्छं चउव्विहं ॥ ११ ॥

व्याख्या–एकत्वेन समानपरिणतिरूपेण, पृथक्त्वेन परमाण्वन्तरैरसंघातरूपेण 'लक्ष्यन्ते इति शेषः' के? इत्याह–स्कन्धाः परमाणवश्च । स्कन्धा हि संहतानेकपरमाणुरूपाः। परमाणवश्च परमाण्वन्तरैरसंहतिभाज. । एतानेव क्षेत्रत

आह—'लोए'त्ति लोकस्य चतुर्दशरज्ज्वात्मकस्यैकदेश एक-द्व्यादिसङ्ख्यातासङ्ख्यातप्रदेशात्मकः प्रतिनियतो भागो लोकैकदेशस्तस्मिन् लोके च भक्तव्या भजनीयास्ते स्कन्धाः परमाणवश्च 'तुः पूरणे' क्षेत्रतः क्षेत्रमाश्रित्य । अत्र च सामान्योक्तावपि परमाणूनामेकप्रदेशे एवावस्थानात् । स्कन्धाश्च बहुप्रदेशोपचिता अपि केचिदेकप्रदेशे तिष्ठन्ति, अन्ये तु सङ्ख्येयेष्वसङ्ख्येयेषु च प्रदेशेषु, यावत् सकललोके तथाविधाचित्तमहास्कन्धवद् भवेयुरिति भजनीयाः परिणतेर्विचित्रत्वात् ॥ 'इत्तो'त्ति इतः क्षेत्रप्ररूपणानन्तरं कालविभागं तु कालभेदं पुनस्तेषां स्कन्धादीनां वक्ष्ये चतुर्विधं साद्यनादि—सपर्यवसितापर्यवसितभेदेनानन्तरमेव वक्ष्यमाणेनेति । इयं षट्पादरूपा गाथा ॥ ११ ॥

प्रतिज्ञातमाह—

संतइं पप्प तेऽणाईया अपज्जवसिया वि य । ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ १२ ॥

व्याख्या—सन्ततिमपरापरोत्पत्तिप्रवाहरूपां प्राप्य ते स्कन्धाः परमाणवश्चानादयोऽपर्यवसिता अपि च । न हि ते कदाऽपि प्रवाहतो न भूता न भविष्यन्तीति । स्थितिं प्रतिनियतक्षेत्रावस्थानरूपां प्रतीत्याङ्गीकृत्य सादिकाः सपर्यवसिता अपि च ॥ १२ ॥

सादि—सपर्यवसितत्वेऽपि कियत्कालमेषां स्थितिः ? इत्याह—

असंखकालमुक्कोसं इक्को समओ जहन्नयं । अजीवाण य रूवीणं ठिई एसा वियाहिया ॥ १३ ॥

व्याख्या—असङ्ख्यकालमुत्कृष्टा, एकसमयं जघन्यिका, अजीवानां रूपिणां पुद्गलानामित्यर्थ. स्थितिरेषा व्याख्याता। जघन्यत एकसमयादुत्कृष्टतश्चासङ्ख्येयकालात् परतोऽवश्यमेव विघटनात् ॥ १३ ॥

कालतः स्थितिमुक्त्वा तदन्तर्गतमेवान्तरमाह—

अणंतकालमुक्कोसं इक्को समओ जहन्नय । अजीवाण य रूवीणं अंतरेयं वियाहियं ॥ १४ ॥

व्याख्या—अनन्तकालमुत्कृष्टम्, एकसमयं जघन्यकमजीवानां रूपिणामन्तरं विवक्षितक्षेत्रावस्थिते प्रच्युताना पुनस्तत्राप्तेर्व्यवधानमेतदुक्तरूप व्याख्यातम्, तेषां हि विवक्षितक्षेत्रावस्थितित प्रच्युतानां कदाचित् समयावलिकादिसङ्ख्यातकालतोऽसङ्ख्यातकालाद् वा पल्योपमादेर्यावदनन्तकालादपि तत्क्षेत्रावस्थिति. सम्भवतीति भाव. ॥१४॥

एतानेव भावतोऽभिधातुमाह—

वण्णओ गंधओ चेव रसओ फासओ तहा। संठाणओ य विण्णेओ परिणामो तेसि पंचहा ॥१५॥

व्याख्या—वर्णतो गन्धतो रसतः स्पर्शतस्तथा संस्थानतश्च । कोऽर्थ.? वर्णादीन् पञ्चाश्रित्य विज्ञेयो ज्ञातव्यः परिणाम. स्वरूपावस्थितानामेव वर्णाद्यन्यथाभवनरूपस्तेषामिति परमाणूना पञ्चधा पञ्चप्रकारः ॥ १५ ॥

एषामेव प्रत्येकमुत्तरभेदानाह—

वण्णओ परिणया जे उ पंचहा ते पकित्तिया । किण्हा नीला य लोहिया हालिद्दा सुक्किला तहा ॥

गंधओ परिणया जे उ दुविहा ते वियाहिया । सुब्भिगंधपरिणामा दुब्भिगंधा तहेव य ॥ १७॥
रसओ परिणया जे उ पंचहा ते पकित्तिया । तित्त–कडुय–कसाया अंबिला महुरा तहा ॥ १८ ॥
फासओ परिणया जे उ अट्ठहा ते पकित्तिया । कक्खडा मउया चेव गरुया लहुया तहा ॥ १९ ॥
सीया उण्हा य निद्धा य तहा लुक्खा य आहिया । इइ फासपरिणया एए पुग्गला समुदाहिया ॥
संठाणपरिणया जे उ पंचहा ते पकित्तिया । परिमंडला य वट्टा य तंसा चउरंसमायया ॥ २१ ॥

आसां व्याख्या–वर्णतः परिणता वर्णपरिणामभाजो येऽण्वादयः 'तुः पूरणे' पञ्चधा ते प्रकीर्त्तिताः कथिताः । तानेवाह–कृष्णाः कज्जलादिवत् । नीला नील्यादिवत् । लोहिता हिङ्गुलादिवत् । हारिद्रा हरिद्रादिवत् । शुक्लाः शङ्खादिवत् 'तथेति समुच्चये' ॥ गन्धतः 'सुब्भि' त्ति सुरभिर्गन्धो यस्मिन्नेवंविधः परिणामो येषां ते सुरभिगन्धपरिणामाः श्रीखण्डादिवत् । 'दुब्भि' त्ति दुरभिर्गन्धो येषां ते दुरभिगन्धा लशुनादिवत् ॥ रसतः तिक्ताः कोशातक्यादिवत् । कटुकाः शुण्ठ्यादिवत् । कषायाश्चापक्वकपित्थादिवत् । अम्ला अम्लवेतसादिवत् । मधुराः शर्करादिवत् ॥ स्पर्शतः कर्कशाः पाषाणादिवत् । मृदवो हंसरुतादिवत् । गुरवो हीरकादिवत् । लघवोऽर्कतूलादिवत् । शीता मृणालादिवत् । उष्णा वह्न्यादिवत् । स्निग्धा घृतादिवत् । रूक्षा भूत्यादिवत् । इत्यमुना प्रकारेण स्पर्शपरि-

णता एते स्कन्धादय॰ पूरण-गलनधर्माणः पुद्गला॰ समुदाहृता॰ सम्यगुपदिष्टास्तीर्थकृदादिभि ॥ सन्तिष्ठन्ते एभि-स्कन्धादय इति सस्थानानि । तद्रूपेण परिणता॰ परिमण्डलादयः प्रागुक्तस्वरूपा एवेति गाथापञ्चार्थ॰ ॥ १६-२१ ॥

सम्प्रत्येषामेव परस्परसम्बन्धमाह—

वण्णओ जे भवे किण्हे भइए से उ गन्धओ । रसओ फासओ चेव भइए संठाणओ वि य ॥ २२ ॥
वण्णओ जे भवे नीले भइए से उ गन्धओ । रसओ फासओ चेव भइए संठाणओ वि य ॥ २३ ॥
वण्णओ लोहिए जे उ भइए से उ गधओ । रसओ फासओ चेव भइए सठाणओ वि य ॥ २४ ॥
वण्णओ पीइए जे उ भइए से उ गधओ । रसओ फासओ चेव भइए संठाणओ वि य ॥ २५ ॥
वण्णओ सुक्किले जे उ भइए से उ गंधओ । रसओ फासओ चेव भइए सठाणओ वि य ॥ २६ ॥

आसा व्याख्या-वर्णतो य॰ स्कन्धादिर्भवेत् कृष्णः 'भइए' त्ति भाज्य॰ स पुनर्गन्धतो गन्धमाश्रित्य सुरभिगन्धि-र्दुरभिगन्धिर्वा स्यान्न तु नियतगन्ध एवेति भावः । एवं रसत॰ स्पर्शतश्चैव भाज्य॰ संस्थानतोऽपि च । अन्यतर-रसादियोग्यो वाऽसौ भवेदिति हृदयम् । अत्र च गन्धौ द्वौ, रसा पञ्च, स्पर्शा अष्टौ, सस्थानानि पञ्च, एते च मीलिता विंशतिरित्येक एव कृष्णवर्ण एतावतो भङ्गाँल्लभते २०। एव नीलोऽपि २०। लोहितोऽपि २०। पीतोऽपि

२०। शुक्लोऽपि २०। एवं पञ्चभिर्वर्णैर्विंशत्या गुणितैः शतं भवति १००। इति गाथापञ्चकार्थः ॥ २२-२६ ॥

गंधओ जे भवे सुब्भी भइए से उ वण्णओ। रसओ फासओ चेव भइए संठाणओ वि य ॥२७॥

गंधओ जे भवे दुब्भी भइए से उ वण्णओ। रसओ फासओ चेव भइए संठाणओ वि य ॥ २८ ॥

अनयोर्व्याख्या—गन्धतो यः स्कन्धादिर्भवेत् सुरभिर्भाज्यः स तु वर्णतोऽन्यतरकृष्णादिवर्णवान् स्यादिति भावः। एवं रसतः स्पर्शतश्चैव भाज्यः संस्थानतोऽपि च। इह रसादयोऽष्टादश ते च पञ्चभिर्वर्णैर्मीलितास्त्रयोविंशतिर्भवन्ति २३। एवं दुर्गन्धविषया अपि एतावन्त एव। ततश्च गन्धद्वयेन भङ्गानां षट्चत्वारिंशत् ४६ इति गाथाद्वयार्थः ॥२७-२८॥

रसओ तित्तए जे उ भइए से उ वण्णओ। गंधओ फासओ चेव भइए संठाणओ वि य ॥ २९ ॥

रसओ कडुए जे उ भइए से उ वण्णओ। गंधओ फासओ चेव भइए संठाणओ वि य ॥ ३० ॥

रसओ कसाए जे उ भइए से उ वण्णओ। गंधओ फासओ चेव भइए संठाणओ वि य ॥ ३१ ॥

रसओ अंबिले जे उ भइए से उ वण्णओ। गंधओ फासओ चेव भइए संठाणओ वि य ॥३२॥

रसओ महुरे जे उ भइए से उ वण्णओ। गंधओ फासओ चेव भइए संठाणओ वि य ॥३३॥

आसां व्याख्या—रसतस्तिक्तको यस्तु स्कन्धादिर्भाज्यः स तु वर्णतो गन्धतः स्पर्शतः संस्थानतोऽपि च। इह

तिक्तेन भङ्गानां विंशतिः २० । एवं कटुकेन २० । कषायेण २० । अम्लेन २० । मधुरेण २० । एव रसपञ्चक-संयोगे शत १०० गाथापञ्चकार्थः ॥ २९-३३ ॥

फासओ कक्खडे जे उ भइए से उ वण्णओ । गंधओ रसओ चेव भइए संठाणओ वि य ॥३४॥
फासओ मउए जे उ भइए से उ वण्णओ । गधओ रसओ चेव भइए संठाणओ वि य ॥३५॥
फासओ गरुए जे उ भइए से उ वण्णओ । गधओ रसओ चेव भइए संठाणओ वि य ॥३६॥
फासओ लहुए जे उ भइए से उ वण्णओ । गधओ रसओ चेव भइए संठाणओ वि य ॥३७॥
फासओ सीयए जे उ भइए से उ वण्णओ । गधओ रसओ चेव भइए सठाणओ वि य ॥३८॥
फासओ उण्हए जे उ भइए से उ वण्णओ । गधओ रसओ चेव भइए संठाणओ वि य ॥३९॥
फासओ निद्धए जे उ भइए से उ वण्णओ । गधओ रसओ चेव भइए संठाणओ वि य ॥४०॥
फासओ लुक्खए जे उ भइए से उ वण्णओ । गधओ रसओ चेव भइए संठाणओ वि य ॥४१॥

आसा व्याख्या–स्पर्शतः कर्कशो यस्तु स्कन्धादिर्भाज्य स तु वर्णतो गन्धतो रसत. संस्थानतोऽपि च । इह

वर्णादयः सप्तदश तद्योगात् तावन्त एव भङ्गाः स्युः । एवं मृदु १७, गुरु १७, लघु १७, रूक्ष १७, स्निग्ध १७, शीत १७, उष्ण १७ एतन्मीलने च जातं षट्त्रिंशं शतम् १३६ इति गाथाऽष्टकार्थः ॥ ३४–४१ ॥

परिमंडलसंठाणे भइए से उ वण्णओ । गंधओ रसओ चेव भइए फासओ वि य ॥ ४२ ॥
संठाणओ भवे वट्टे भइए से उ वण्णओ । गंधओ रसओ चेव भइए फासओ वि य ॥ ४३ ॥
संठाणओ भवे तंसे भइए से उ वण्णओ । गंधओ रसओ चेव भइए फासओ वि य ॥ ४४ ॥
संठाणओ य चउरंसे भइए से उ वण्णओ । गंधओ रसओ चेव भइए फासओ वि य ॥ ४५ ॥
जे आययसंठाणे भइए से उ वण्णओ । गंधओ रसओ चेव भइए फासओ वि य ॥ ४६ ॥

आसां व्याख्या–परिमण्डले संस्थाने 'वर्तत इति शेषः' भाज्यः स तु सामान्यप्रक्रमेऽपि परमाणूनां संस्थाना-भावात् स्कन्ध एव ग्राह्यः । वर्णतो गन्धतो रसतः स्पर्शतोऽपि च । अत्र च वर्णादियोगाद् विंशतिर्भङ्गाः स्युः २०, एवं वृत्तेन २०, त्र्यस्रेण २०, चतुरस्रेण २०, आयतेन च २० । एवं संस्थानपञ्चकभङ्गसंयोगे लब्धं शतम् १०० । एवं वर्ण–गन्ध–रस–स्पर्श–संस्थानानां सकलभङ्गकसङ्कलनातो जातानि त्र्यशीत्यधिकानि चत्वारि शतानि–अङ्कतोऽपि ४८२ । सर्वत्र जातावेकवचनम् । परिस्थूरन्यायेनैतदुक्तमन्यथा प्रत्येकमप्येषां तारतम्यतोऽनन्तत्वाद-नन्ता एव भङ्गाः सम्भवन्ति । इति गाथापञ्चकार्थः ॥ ४२–४६ ॥

अथोपसंहारद्वारेणोत्तरग्रन्थसम्बन्धमाह—

एसा अजीवविभत्ती समासेण वियाहिया । इत्तो जीवविभत्तिं वुच्छामि आणुपुव्वसो ॥ ४७ ॥

व्याख्या—एषाऽनन्तरोक्ताऽजीवविभक्तिः समासेन सङ्क्षेपेण व्याख्याता । इत इत्येतदनन्तर जीवविभक्तिं वक्ष्यामि आनुपूर्व्या ॥ ४७ ॥

यथाप्रतिज्ञातमाह—

संसारत्था य सिद्धा य दुविहा जीवा वियाहिया । सिद्धा णेगविहा वुत्ता तं मे कित्तयओ सुण ॥४८॥

व्याख्या—संसारो गतिचतुष्टयात्मकस्तत्र तिष्ठन्तीति संसारस्थास्ते च सिद्धाश्च द्विधा द्विभेदा जीवा व्याख्याता । तत्र सिद्धा अनेकधा उक्ताः । 'तमिति सूत्रत्वात्' तान् मे मम कीर्तयत. शृणुत । अल्पवक्तव्यत्वात् पश्चान्निर्देशेऽपि पूर्वं सिद्धभेदाभिधानमदुष्टम् ॥ ४८ ॥

एषामनेकविधत्वमाह—

इत्थी पुरिस सिद्धा य तहेव य नपुंसगा । सलिङ्गे अन्नलिगे गिहिलिङ्गे तहेव य ॥ ४९ ॥

व्याख्या—स्त्रियश्च पूर्वपर्यायापेक्षया सिद्धाश्च स्त्रीसिद्धा. । एवं पुरुषसिद्धाश्च । तथैव सिद्धशब्दयोगान्नपुंसक-

सिद्धाः । स्वलिङ्गं रजोहरण–मुखवस्त्रिकारूपं तस्मिन् सिद्धाः स्वलिङ्गसिद्धाः । अन्यदेतदपेक्षया लिङ्गमन्यलिङ्गं शाक्यादिसम्बन्धि तस्मिन् सिद्धाः । गृहिलिङ्गे गृहस्थवेषे सिद्धा मरुदेवास्वामिनीवत् । तथैवेति समुच्चये । चकारस्तीर्थसिद्धाद्यनुक्तभेदसूचकः ॥ ४९ ॥

सिद्धानेवावगाहनातः क्षेत्रतश्चाह—

उक्कोसोगाहणाए य जहन्न–मज्झिमाइ य । उड्ढं अहेयं तिरियं च समुद्दंमि जलंमि य ॥ ५० ॥

व्याख्या–उत्कृष्टा चासाववगाहना च शरीरमुत्कृष्टावगाहना पञ्चधनुःशतप्रमाणा तस्यां सिद्धाः । 'चः समुच्चये' 'जहन्न–मज्झिमाइ य'त्ति अवगाहनायामिति प्रत्येकं योगाज्जघन्यावगाहनायां द्विहस्तमानायां सिद्धाः । मध्यमावगाहनायामुत्कृष्ट–जघन्यान्तरालवर्तिन्यां सिद्धाः । ऊर्ध्वमित्यूर्ध्वलोके मेरुचूलिकाऽऽदौ चैत्यवन्दकचारणश्रमणानां केषांचिन्मुक्त्यवाप्तेः । अधश्चाधोलोकग्रामे सिद्धाः । तिर्यक् च तिर्यग्लोके चार्धतृतीयद्वीपसमुद्ररूपे । समुद्रे जले च नद्यादेः 'भू–भूधरादीनामुपलक्षणम्' । इत्थं स्त्रीसिद्धादीनभिदधता स्त्रीत्वादिषु सिद्धिः समर्थिता ॥ ५० ॥

तत्रापि क्व कियन्तः सिध्यन्ति? इत्याह—

दस य नपुंसएसुं वीसं इत्थियासु य । पुरिसेसु य अट्ठसय समएणेगेण सिज्झई ॥ ५१ ॥

चत्तारि य गिहिलिङ्गे अन्नलिङ्गे दसेव य । सलिङ्गेण य अट्ठसयं समएणेगेण सिज्झई ॥ ५२ ॥
उक्कोसोगाहणाए उ सिज्झंते जुगव दुवे । चत्तारि जहन्नाए जवमज्झट्ठुत्तरं सयं ॥ ५३ ॥

चउरुड्ढलोए य दुवे समुद्दे तओ जले वीसमहे तहेव [य] ।
सयं च अट्ठुत्तर तिरियलोए समएणेगेण [उ] सिज्झई धुवं ॥ ५४ ॥

आसां व्याख्या—दशेति दशसङ्ख्याः । 'चशब्दः समुच्चये' नपुंसकेषु 'सिध्यन्तीति संटङ्कः' । विंशतिः स्त्रीषु च । पुरुषेषु चाष्टभिरधिक शतमष्टशतं समयेनैकेन सिध्यति निष्ठितार्थं भवति ॥ चत्वारो गृहिलिङ्गे । दशैव चान्यलिङ्गे । अष्टशत स्वलिङ्गे च समयेनैकेन सिध्यति ॥ उत्कृष्टावगाहनायां तूक्तरूपायां सिध्यतो युगपदेककालं द्वौ । चत्वारो जघन्यावगाहनायाम् । 'जवमज्झ'त्ति यवमध्यमिव यवमध्यं मध्यमावगाहना तस्यामष्टोत्तरं शतम् । यवमध्यत्व चैषां मध्यमावगाहनायामुत्कृष्ट–जघन्यावगाहनयोर्मध्यवर्तित्वात् ॥ चत्वार ऊर्ध्वलोके च । द्वौ समुद्रे । त्रयो जले । विंशतिरध इत्यधोलोके । तथैव शत चाष्टोत्तरं तिर्यग्लोके समयेनैकेन सिध्यति । 'तुशब्दः पुनरर्थे' ध्रुवमिति निश्चितमिति गाथाचतुष्टयार्थः ॥ ५१–५४ ॥

तेषामेव प्रतिघातादिप्रतिपादनायाह—

कहिं पडिहया सिद्धा कहिं सिद्धा पइट्ठिया ?। कहिं बोंदिं चइत्ता णं कत्थ गंतूण सिज्झई ? ॥५५॥
अलोए पडिहया सिद्धा लोयग्गे य पइट्ठिया । इहं बोंदिं चइत्ता णं तत्थ गंतूण सिज्झई ॥ ५६ ॥

अनयोर्व्याख्या—कस्मिन् प्रतिहताः स्खलिताः कोऽर्थः ? निरुद्धगतयः सिद्धाः? । कस्मिन् सिद्धाः प्रतिष्ठिताः साद्यपर्यवसितं कालं स्थिताः ?। अन्यच्च क्व बोन्दिं शरीरं त्यक्त्वा कुत्र गत्वा 'सिज्झइ'त्ति 'वचनव्यत्ययात्' सिध्यन्ति निष्ठितार्था भवन्ति? । एतदुत्तरमाह—अलोके केवलाकाशलक्षणे प्रतिहताः स्खलिताः । तत्र धर्मास्तिकायाभावेन तेषां गतेरसम्भवात् । तथा लोकाग्रे च लोकस्योपरितमभागे प्रतिष्ठिताः सदाऽवस्थिताः । इह तिर्यग्लोकादौ बोन्दिं शरीरं त्यक्त्वा तत्र लोकाग्रे गत्वा सिध्यन्ति । पूर्वापरकालस्यासम्भवाद् यत्रैव समये भवक्षयस्तस्मिन्नेव मोक्ष-स्तत्र गतिश्चेति भाव इति गाथाद्वयार्थः ॥ ५५–५६ ॥

लोकाग्रं चेषत्प्राग्भाराया उपरीति यावति प्रदेशे, यत्संस्थाना, यत्प्रमाणा, यद्वर्णा चासौ तद् वक्तुमाह—

बारसहिं जोयणेहिं सव्वट्ठस्सुवरिं भवे । ईसीपब्भारनामा पुढवी छत्तसंठिया ॥ ५७ ॥
पणयालसयसहस्सा जोयणाणं तु आयया। तावइयं चेव वित्थिन्ना तिगुणो साहिय परिरओ ॥५८॥

अट्ठजोयणबाहल्ला सा मज्झंमि वियाहिया । परिहायंती चरिमंते मच्छियपत्ताउ तणुयरी ॥५९॥
अज्जुणसुवन्नगमई सा पुढवी निम्मला सहावेण । उत्ताणयछत्तयसंठिया य भणिया जिणवरेहिं ॥६०॥
संखंक-कुंदसंकासा पंडुरा निम्मला सुभा । सीयाए जोयणे तत्तो लोगंतो उ वियाहिओ ॥६१॥

आसां व्याख्या-द्वादशभिर्योजनैः सर्वार्थस्य सर्वार्थनाम्नो विमानस्योपर्यूर्ध्वं भवेदीषत्प्राग्भारनामा पृथिवी
भूमि. । छत्रं प्रतीतं तद्वत् संस्थितं संस्थानमस्या इति छत्रसंस्थिता । इह सामान्योक्तावप्युत्तानमेव छत्रं ज्ञेयम् ॥
पञ्चचत्वारिंशच्छतसहस्राणि योजनानां 'तु. पूरणे' आयता दीर्घा । 'तावइयं चेव'त्ति तावतश्चैव 'प्रक्रमाच्छतस-
हस्रान्' विस्तीर्णा विस्तरतोऽपि पञ्चचत्वारिंशच्छतसहस्रप्रमाणेति भाव । परिरय परिधिरिहायामात् त्रिगुण.
साधिक. किञ्चिदधिक इति ॥ अष्टावष्टसङ्ख्यानि योजनानि बाहल्यं स्थौल्यमस्या इत्यष्टयोजनबाहल्या ईषत्प्राग्भारा
मध्ये मध्यप्रदेशे व्याख्याता । किमित्येवम् ? अत आह-परि समन्ताद् हीयमाना चरमान्तेषु सर्वदिग्वर्तिषु पर्यन्तप्रदे-
शेषु मक्षिकायाः पत्रं पक्षो मक्षिकापत्रम् 'अपेर्गम्यत्वात्' तस्मादपि तनुतरा इति कृशेति यावत् । हानिश्चात्र
विशेषानभिधानेऽपि प्रतियोजनमङ्गुलपृथक्त्वं द्रष्टव्या ॥ अर्जुनं शुक्लं तच्च तत् सुवर्णकं चार्जुनसुवर्णकं तेन निर्वृत्ताऽ-
र्जुनसुवर्णकमयी सेतीषत्प्राग्भारा निर्मला स्वच्छा स्वभावेन नोपाधित इति । उत्तानकमूर्ध्वमुखं यच्छत्रकं

तत्संस्थिता च भणिता जिनवरैः । प्राक् सामान्यतश्छत्रसंस्थितेत्युक्त्वा यदिहोत्तानत्वमुक्तं तद् विशेषत इति न पौनरुक्त्यमथवाऽन्यकर्तृकेयं गाथेति ॥ शङ्खाङ्क–कुन्दानि प्रतीतानि तत्सङ्काशा वर्णतस्तत्सदृशी । अत एव पाण्डुरा श्वेता, निर्मला निष्कलङ्का, शुभाऽतिकल्याणावहेति। यदीदृशी सा पृथिवी ततः किम्? इत्याह–'सीयाए'त्ति शीतायाः शीतानाम्न्याः 'पृथ्व्या उपरीति शेषः' योजने ततस्तस्या उक्तरूपायाः पृथ्व्यास्ततो योजनमतिक्रम्येत्यर्थः । लोकान्तस्तु व्याख्यात इति गाथापञ्चकार्थः ॥ ५७–६१ ॥

यदि योजने लोकान्तस्तर्हि तत्र सर्वत्र सिद्धाः सन्तीत्याशङ्क्याह—

जोयणस्स उ जो तत्थ कोसो उवरिमो भवे। तस्स कोसस्स छब्भाए सिद्धाणोगाहणा भवे ॥६२॥

व्याख्या–योजनस्य 'तुः पुनः' यस्तत्र क्रोशो गव्यूतमुपरिवर्त्ती भवेत् । तस्य क्रोशस्य षड्भागे सत्रिभागत्रयस्त्रिंशदधिकधनुःशतत्रितयरूपे सिद्धानामवगाहनाऽवस्थितिर्भवेदिति ॥ ६२ ॥

अवगाहना च चलनसम्भवेऽपि स्यादत आह—

तत्थ सिद्धा महाभागा लोयग्गंमि पइट्ठिया । भवप्पवंचउम्मुक्का सिद्धिं वरगइं गया ॥ ६३ ॥

व्याख्या–तत्र सिद्धा महाभागा अचिन्त्यशक्तयो लोकाग्रे प्रतिष्ठिताः । भवा नारकादयस्तेषां प्रपञ्चो विस्तारस्ते-

नोन्मुक्तास्तत सिद्धिं वरा चेतरगत्यपेक्षया प्रधाना गतिश्च वरगतिस्तां गताः । अयं भाव', किल चलने भवप्रपञ्च एव हेतु , सिद्धाना हि तद्रहितत्वात् कुतस्तत्सम्भव इति ॥ ६३ ॥

तेषा तत्र कियत्यवगाहना? इत्याह—

उस्सेहो जस्स जो होइ भवमि चरममि उ । तिभागहीणा तत्तो य सिद्धाणोगाहणा भवे ॥६४॥

व्याख्या—उत्सेध उच्छ्रय 'प्रक्रमाच्छरीरस्य' 'जस्स'त्ति 'वचनव्यत्ययाद्' येषां सिद्धानां य इति यत्परिमाणो भवेद् भवे चरमे पर्यन्तवर्त्तिनि 'तुर्विशेषणे' । त्रिभागहीना त्रिभागोना ततश्च चरमभवोत्सेधात् सिद्धानामवगाहना स्वप्रदेशनिचितिर्भवेदेवं च शरीरविवरपूरण एतावतीत्यवगन्तव्यम् । उक्त हि—'देहंतिभागे सुसिर तप्पूरणओ तिभागहीण' त्ति ॥६४॥

एतानेव कालतो वक्तुमाह—

एगत्तेण साईया अपज्जवसिया वि य । पुहुत्तेण अणाईया अपज्जवसिया वि य ॥ ६५ ॥

व्याख्या—एकत्वेनासहायत्वेन ते सादिका अपर्यवसिता अपि च । यत्र हि काले ते सिध्यन्ति स तेषामादिर्न तु कदाचिन्मुक्तेर्भ्रंश्यन्ति, अतो न पर्यवसानमिति । पृथक्त्वेन बहुत्वेन सामस्त्यापेक्षयेति यावदनादिका अपर्यवसिता अपि च । न हि कदाचित् ते नाभूवन् न भविष्यन्ति चेति ॥ ६५ ॥

---

१ 'देहत्रिभागः शुषिर तत्पूरणवस्त्रिभागहीना' इति ।

एषामेव स्वरूपमाह—

अरूविणो जीवघणा नाण-दंसणसन्निया । अउलं सुहं संपत्ता उवमा जस्स नत्थि उ ॥ ६६ ॥

व्याख्या-अरूपिणस्तेषां रूपाद्यभावात् । जीवाश्च ते सततोपयुक्ततया घनाश्च शुपिरपूरणतो जीवघनाः । ज्ञान-दर्शने एव संज्ञा सम्यगवबोधरूपा सञ्जातैषामिति ज्ञान-दर्शनसंज्ञिता ज्ञान-दर्शनोपयोगवन्त इत्यर्थः । अतुलमपरिमितं सुखं सम्प्राप्ताः । उपमा यस्य सुखस्य नास्ति 'तुरेवार्थे' न विद्यत एव । यतः—'कर्मक्लेशविमोक्षाच्च मोक्षे सुखमनुत्तमम्' इति ॥ ६६ ॥

पुनस्तेषां क्षेत्रं स्वरूपं चाह—

लोएगदेसे ते सव्वे नाण-दंसणसंनिया । संसारपारनित्थिन्ना सिद्धिं वरगइं गया ॥ ६७ ॥

व्याख्या-लोकैकदेशे ते सिद्धा इत्यनेन मुक्ताः सर्वत्र तिष्ठन्ति व्योमवत् तापवर्जिताः' इति सर्वगतत्वमतमपास्तम् । तथात्वे सर्वत्र सर्वदा वेदनादिप्रसङ्गात् । ज्ञान-दर्शनसंज्ञिता इत्यनेन मा भूत् केषाञ्चित् ज्ञानसंज्ञा, केषाञ्चिद् दर्शनसंज्ञैव केवला किन्तूभे अपि सर्वेषामपीति । संसारपारं निस्तीर्णाः पुनरागमनाभावेनातिक्रान्ता इत्यनेन

"ज्ञानिनो धर्मतीर्थस्य कर्तारः परमं पदम् । गत्वाऽऽगच्छन्ति भूयोऽपि भवं तीर्थनिकारतः" ॥१॥

इति तेषां मतमनिष्ठितार्थत्वादिदोषप्रसङ्गेन निरस्तम् । सिद्धि वरगतिं गता इत्येतेन क्षीणकर्मणोऽपि लोकाग्रगमनस्वभावेनोत्पत्तिसमये सक्रियत्वमप्यस्तीति ख्याप्यते। इयं च गाथा प्राय क्वापि न दृश्यते । यत्र प्रतौ भवति, तत्रैव व्याख्यायते ॥ ६७ ॥

सिद्धानभिधाय संसारिण प्राह—

संसारत्था उ जे जीवा दुविहा ते वियाहिया। तसा य थावरा चेव थावरा तिविहा तहिं ॥ ६८ ॥

व्याख्या-ससारस्था इति प्राग्वत् 'तुशब्द सिद्धेभ्य. सङ्ख्याविशेषद्योतक.' ये जीवास्ते द्विधा व्याख्याता. । द्वैविध्यमेवाह-त्रसाश्च स्थावराश्चैव । स्थावरास्त्रिविधा त्रिप्रकारास्तस्मिन्निति द्वैविध्ये सत्यल्पवक्तव्यत्वात् पश्चान्निर्देशेऽप्यादौ स्थावराभिधानम् ॥ ६८ ॥

तत् त्रैविध्यमेवाह—

पुढवी-आउ-जीवा य तहेव य वणस्सई । इच्चेए थावरा तिविहा तेसिं भेए सुणेह मे ॥ ६९ ॥

व्याख्या-जीवशब्दस्य प्रत्येकं सम्बन्धात् पृथिव्येव जीवाः पृथिवीजीवाः । आपो जल ता एव जीवा अब्जीवाश्च । तथैव वनस्पतिजीवा । जीव-शरीरयोरन्योऽन्यानुगतत्वेन कथञ्चिदभेदात् पृथिव्यादिषु जीवव्यपदेश इति । इत्येते पृथिव्यादय स्थावरास्त्रिविधास्तेषा पृथिव्यादीनां भेदान् शृणुत मे मम 'कथयत इति शेषः' ॥ ६९ ॥

पृथिवीभेदानाह—

दुविहा पुढविजीवा उ सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता एवमेए दुहा पुणो ॥ ७० ॥

व्याख्या–द्विविधा द्विभेदाः पृथिवीजीवाः 'तुः प्राग्वत्' सूक्ष्मा बादराश्च । तथा पर्याप्ता आहार–शरीरेन्द्रियोच्छ्वास–वाक्–मनःपर्याप्तिषु चतसृभिस्ताभिः पर्याप्तिमन्तस्तद्विपरीताश्चापर्याप्ताः । एवमेते सूक्ष्मा बादराश्च पर्याप्तापर्याप्तभेदेन द्विधा पुनः प्रत्येकमिति ॥ ७० ॥

पुनरेषामुत्तरभेदानाह—

बायरा जे उ पज्जत्ता दुविहा ते वियाहिया । सण्हा खरा य बोधव्वा सण्हा सत्तविहा तहिं ॥ ७१ ॥

व्याख्या–बादरा ये पुनः पर्याप्ता द्विविधास्ते व्याख्याताः । कथम्? इत्याह–श्लक्ष्णाश्चूर्णितलोष्टकल्पा मृदुपृथ्वी तदात्मकजीवा अप्युपचारात् श्लक्ष्णाः । एवमुत्तरत्रापि । खराः कठिनाः 'चः समुच्चये' बोद्धव्याः । श्लक्ष्णाः सप्तविधास्तस्मिन् भेदद्वये ॥ ७१ ॥

सप्तविधत्वमेवाह—

किण्हा नीला य रुहिरा य हालिद्दा सुक्किला तहा । पंडु पणगमट्टिया खरा छत्तीसईविहा ॥ ७२ ॥

व्याख्या–कृष्णाः, नीलाश्च, रुधिराश्चेति लोहिता रक्ता इत्यर्थ । हारिद्राः पीताः, शुक्लाः 'तथेति समुच्चये' । 'पडु'त्ति पाण्डव –आपाण्डुरा ईषच्छुभ्रा इत्यर्थ.। इत्थ वर्णभेदेन षड्विधत्वमुक्तम् । इह च पाण्डुग्रहणं कृष्णादि-वर्णानामपि स्वस्थानभेदान्तरसम्भवसूचकम् । पनकोऽत्यन्तसूक्ष्मरजोरूपः स एव मृत्तिका । पनकस्य चाकाशे वर्तमानस्य लोके पृथिवीत्वेनारूढत्वाद् भेदेनोपादानम् । खरपृथिवीजीवाः षट्त्रिंशद्विधाः ॥ ७२ ॥

तानेवाह—

पुढवी य सक्करा वालुया य उवले सिला य लोणूसे। अय-तउय-तंब-सीसग-रुप्प-सुवन्ने य वयरे य॥ ७३ ॥
हरियाले हिंगुलए मणोसिला सासगंजण–पवाले। अब्भपडलब्भवालु य वायरकाये मणिविहाणा॥७४॥
गोमिज्जए य रुयगे अंके फलिहे य लोहियक्खे य। मरगय–मसारगल्ले भुयमोयग–इंदनीले य॥७५॥
चंदण–गेरुय–हसगब्भ–पुलए सोगंधिए य बोधव्वे । चदप्पभ–वेरुलिए जलकते सूरकते य ॥ ७६ ॥

आसा व्याख्या–पृथिवी शुद्धा या कर्करादिरूपा न भवति । शर्करा लघूपलशकलरूपा । वालुका प्रतीता। उपलो गण्डशैलादि । शिला च दृषत्।लवण समुद्रलवणादिः। ऊषश्च क्षारमृत्तिका। अयो लोह त्रपुक–ताम्र–सीसक–रूप्य–सुवर्णानि प्रतीतानि । वज्रश्च हीरक ॥ हरितालो हिङ्गुलको मन.शिलेति च प्रतीता एव । सासकश्च धातुविशेषः ।

अञ्जनं सौवीरकम्। प्रवालं विद्रुमः। अभ्रपटलं प्रसिद्धम्। अभ्रवालुकाऽभ्रपटलमिश्रा वालुका बादरा काये इति बादरपृथिवीकाये'अमी भेदा इति शेषः'। 'मणिविहाण'त्ति 'चस्य गम्यत्वाद्' मणिविधानानि च मणिभेदाः॥ तान्येवाह-गोमेदकश्च रुचकोऽङ्कः स्फटिकश्च लोहिताक्षश्च मरकतो मसारगल्लश्च भुजमोचक इन्द्रनीलश्च॥ चन्दनो गैरिको हंसगर्भः पुलकः सौगन्धिकश्च बोद्धव्यः। चन्द्रप्रभो वैडूर्यको जलकान्तः सूर्यकान्तश्च। इह च पृथिव्यादयश्चतुर्दश, हरितालादयोऽष्टौ, गोमेदकादयश्च क्वचित् कथञ्चिदन्तर्भावाच्चतुर्दशेत्यमी मीलिताः षट्त्रिंशद् भवन्तीति गाथाचतुष्टयार्थः॥ ७३-७६॥

बादरपृथिवीकायोपसंहारपूर्वकं सूक्ष्मपृथिवीकायानाह—

एए खरपुढवीए भेया छत्तीसमाहिया। एगविहमनाणत्ता सुहुमा तत्थ वियाहिया॥ ७७॥

व्याख्या-एते खरपृथिव्यास्तदविभागाच्च तत्स्थजीवानां भेदाः षट्त्रिंशदाख्याताः। 'एगविहमनाणत्त'त्ति एकविधा यतो न विद्यते नानात्वं भेदो येषां तेऽनानात्वाः। सूक्ष्मास्तत्रेति तेषु सूक्ष्म-बादरपृथिवीजीवेषु मध्ये व्याख्याताः॥ ७७॥

एतानेव क्षेत्रत आह—

सुहुमा य सव्वलोगंमि लोगदेसे य बायरा। इत्तो कालविभागं तु तेसिं वुच्छं चउव्विहं॥ ७८॥

व्याख्या—सूक्ष्माः सर्वलोके चतुर्दशरज्ज्वात्मके तत्र सर्वत्र सर्वदा तेषां भावात्। लोकस्य देशो विभागो लोकदेशस्तस्मिन् 'च. पुनरर्थे' बादरास्तेषा क्वचित् कदाचिदसत्त्वेन सर्वव्याप्त्यसम्भवात्। अथैतान् गाथाऽर्धेन कालत आह—'इत्तो'त्ति इतः क्षेत्रप्ररूपणानन्तरं कालविभागं तु तेषां वक्ष्ये चतुर्विधम् ॥ ७८ ॥

यथाप्रतिज्ञातमाह—

संतइं पप्प णाईया अपज्जवसिया वि य। ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ ७९ ॥

व्याख्या—सन्तति प्रवाहं प्राप्यानादिका अपर्यवसिता अपि च, तेषां प्रवाहतः सर्वदा सद्भावात्। स्थितिं भवस्थिति—कायस्थितिरूपां प्रतीत्याश्रित्य सादिकाः सपर्यवसिता अपि च, द्विविधाया अपि तस्या नियतकालत्वात्॥७९॥

तथैवाह—

बावीस सहस्साइं वासाणुक्कोसिया भवे। आउठिई पुढवीणं अंतोमुहुत्त जहन्निया ॥ ८० ॥

असंखकालमुक्कोसं अंतोमुहुत्तं जहन्निया। कायठिई पुढवीणं तं कायं तु अमुंचओ ॥ ८१ ॥

अनयोर्व्याख्या—द्वाविंशतिः सहस्राणि वर्षाणामुत्कृष्टा भवेदायुःस्थितिः पृथिवीनामिति पृथिवीजीवानामन्तर्मुहूर्तं जघन्यिका ॥ असङ्ख्यकालमुत्कृष्टा। अन्तर्मुहूर्तं जघन्यिका। काये पृथिवीकाये स्थितिस्ततोऽनुद्वर्तनेनावस्थानं काय-

स्थितिः पृथिवीनां तमिति पृथिवीरूपं कायं 'तुरेवार्थे' ततो 'अमुंचउ'त्ति अमुञ्चतामेवात्यजतामिति गाथाद्वयार्थः ॥ ८०-८१ ॥ इत्थं द्विविधाया अपि स्थितेर्नैयत्यदर्शनेन सादि-सपर्यवसितत्वमेषाम् ॥

कालस्य प्रक्रान्तत्वादन्तरकालमाह—

अणंतकालमुक्कोसं अंतोमुहुत्तं जहन्नयं । विजढंमि सए काए पुढवीजीवाण अंतरं ॥ ८२ ॥

व्याख्या—अनन्तकालमुत्कृष्टमन्तर्मुहूर्तं जघन्यकम् । 'विजढंमि'त्ति त्यक्ते स्वकीये काये पृथिवीजीवानामन्तरम् । किमुक्तं भवति ? यत् पृथिवीकायानामुद्वर्तनं या च पुनस्तत्रैवोत्पत्तिरनयोर्व्यवधानमिति ॥ ८२ ॥

एतानेव भावत आह—

एएसिं वण्णओ चेव गंधओ रस-फासओ । संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ ८३ ॥

व्याख्या—सुगमम् । नवरं विधानानि भेदाः 'सहस्र इति चोपलक्षणम्' वर्णादितारतम्यस्य बहुभेदत्वेनासङ्ख्यभेदत्वात् । वर्णादीनां भावरूपत्वात् ॥ ८३ ॥

अथाप्कायमाह—

दुविहा आउजीवा उ सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता एवमेए दुहा पुणो ॥ ८४ ॥

बायरा जे उ पज्जत्ता पचहा ते पकित्तिया । सुद्धोदए य उस्से हरयणु–महिया–हिमे ॥ ८५ ॥
एगविहमनाणत्ता सुहुमा तत्थ वियाहिया । सुहुमा सव्वलोगंमि लोगदेसे य बायरा ॥ ८६ ॥
संतइं पप्प णाईया अपज्जवसिया वि य । ठिइ पडुच्च साईया सपज्जवसिया वि य ॥ ८७ ॥
सत्तेव सहस्साइ वासाणुक्कोसिया भवे । आउठिई आऊण अतोमुहुत्तं जहन्निया ॥ ८८ ॥
असंखकालमुक्कोसा अंतोमुहुत्त जहन्निया । कायठिई आऊणं त कायं तु अमुंचओ ॥ ८९ ॥
अणतकालमुक्कोसं अतोमुहुत्तं जहन्नय । विजढंमि सए काए आउजीवाण अंतरं ॥ ९० ॥
एएसि वण्णओ चेव गंधओ रस–फासओ । संठाणादेसओ वा वि विहाणाइ सहस्ससो ॥ ९१ ॥

व्याख्या–गतप्राया एव । नवर शुद्धोदकं मेघमुक्त समुद्रादिजलम् । 'उस्से'त्ति अवश्यायः शरदादिषु प्राभातिकसूक्ष्मवर्ष. । हरतनु. प्रात' सस्नेहभूम्युद्भवस्तृणाग्रोदकविन्दुः । महिका धूमरी गर्भमासे सूक्ष्मवर्षः । हिम प्रतीतम् ॥ सप्तैव सहस्राणि वर्षाणामुत्कृष्टा भवेदायु स्थितिरपामप्जीवानामिति सूत्राष्टकार्थः ॥ ८४–९१ ॥

अथ वनस्पतिजीवानाह—

दुविहा वणस्सईजीवा सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता एवमेए दुहा पुणो ॥ ९२ ॥

बायरा जे उ पज्जत्ता दुविहा ते वियाहिया । साहारणसरीरा य पत्तेया य तहेव य ॥ ९३ ॥
पत्तेयसरीरा उ णेगहा ते पकित्तिया । रुक्खा गुच्छा य गुम्मा य लया वल्ली तणा तहा ॥ ९४ ॥
वलय[लया] पव्वया कुहणा जलरुहा ओसही तहा । हरियकाया य बोधव्वा पत्तेया इति आहिया ॥९५॥
साहारणसरीरा उ णेगहा ते पकित्तिया । आलुए मूलए चेव सिंगवेरे तहेव य ॥ ९६ ॥
हरिली सरिली सिस्स जावई केयकंदली । पलंडु–लसण–कंदे य कंदली य कुहवए ॥ ९७ ॥
लोहिणीहू य थीहू य तुहगा य तहेव य । कण्हे य वज्जकंदे य कंदे सूरणए तहा ॥ ९८ ॥
अस्सकन्नी य बोधव्वा सीहकन्नी तहेव य । मुसंढी य हलिद्दा य णेगहा एवमायओ ॥ ९९ ॥
एगविहमनाणत्ता सुहुमा तत्थ वियाहिया । सुहुमा सव्वलोगंमि लोगदेसे य बायरा ॥ १०० ॥
संतइं पप्प णाईया अपज्जवसिया विय । ठिइं पडुच्च साईया सपज्जवसिया विय ॥ १०१ ॥
दस चेव सहस्साइं वासाणुक्कोसियं भवे । वणस्सईण आउं तु अंतोमुहुत्तं जहन्नयं ॥ १०२ ॥
अणंतकालमुक्कोसा अंतोमुहुत्तं जहन्निया । कायठिई पणगाणं तं कायं तु अमुंचओ ॥ १०३ ॥

असंखकालमुक्कोसं अंतोमुहुत्तं जहन्नयं । विजढमि सए काए पणगजीवाण अंतरं ॥ १०४ ॥

एएसि वन्नओ चेव गधओ रस–फासओ । संठाणादेसओ वा वि विहाणाइ सहस्ससो ॥१०५॥

एता गाथा व्याख्यातप्राया एव । नवरं साधारणमनन्तजीवानामपि समानमेक शरीर येषां ते साधारणशरीरा. । 'उपलक्षण चैतदाहारान्नपानग्रहणयोरपि तेषा साधारणत्वात्' । 'पत्तेया य'त्ति प्रत्येकशरीराश्च एकमेकं प्रति प्रत्येकमेकैकशो विभिन्न शरीरमेषामिति प्रत्येकशरीरास्तेषां हि यदेकस्य शरीर तदन्यस्य न भवतीति ॥ प्रत्येकशरीराश्च 'अक्रमाज्जीवा , ये इति शेष ' अनेकधा ते प्रकीर्त्तिता.।वृक्षाश्चूतादयः।गुच्छा वृन्ताकीमुख्या.।गुल्माश्च नवमालिकादय.। लताश्चम्पकाद्या ।वल्ल्य कूष्माण्ड्याद्या' । तृणानि कुशादीनि ॥ लतावलयानि नालिकेरी–कदल्यादीनि, इह तेषां शाखान्तराभावेन लतारूपत्वम्, त्वचो वलयाकारत्वेन च वलयता । पर्वजा इक्ष्वादय' । कुहुणा भूमिस्फोटादयः । जलरुहा पद्मादय । औषधय' शाल्यादय.।तथा हरितानि तन्दुलीयकादीनि तान्येव काया. शरीराणि येषामिति हरितकायाश्च बोद्धव्या. प्रत्येका इत्याख्याता. ॥ साधारणशरीरास्तु आलुक–मूलकादयो हरिद्रापर्यन्ता. प्राय. कन्दविशेषास्तत्तद्देशप्रसिद्धा एवमादयोऽनेकधा ॥ साधारणलक्षणमिदम्—

"गूढसिराग पत्त सच्छीर ज च होइ निच्छीर । ज पि य पणट्ठसधिं अणतजीव वियाणाहि" ॥ १ ॥

---

१ गूढशिराक पत्र सक्षीर यच्च भवति नि क्षीरम् । यदपि च प्रणष्टसन्धि अनन्तजीव विजानीहि ॥ १ ॥

वनस्पतीनां प्रत्येकशरीरापेक्षयोत्कृष्टं दशवर्षसहस्रमानमायुरुक्तम् । साधारणानां जघन्यत उत्कृष्टतश्चान्तर्मुहूर्त्तायुष्कत्वात् । उक्तं च—"निगोयस्स णं भंते! केवइयं कालं आउठिइ पन्नत्ता? गोयमा! जहन्नेणं अंतोमुहुत्तं उक्कोसेणवि अंतोमुहुत्तं"। 'पणगाणं आउ'त्ति पाठे पनका उल्लिजीवा इह तदुपलक्षिताः सामान्येन वनस्पतयो गृह्यन्ते ॥ अनन्तकालमुत्कृष्टाऽन्तर्मुहूर्त्तं जघन्या कायस्थितिः पनकानाम्। इहापि सामान्येन वनस्पतिजीवान् निगोदान् वाऽपेक्ष्योत्कृष्टतोऽनन्तकालमुच्यते । विशेषापेक्षया हि प्रत्येकवनस्पतीनां तथा निगोदानां वादराणां सूक्ष्माणां चासङ्ख्येयकालैव स्थितिः । उक्तं च—"पत्तेयसरीरबायरवणप्फत्तिकाइयाणं भंते! केवइयं कालं कायट्ठिई पण्णत्ता? । गोयमा! जहण्णेणं अंतोमुहुत्तं, उक्कोसेणं सत्तरि सागरोवमकोडाकोडीओ। निओदे णं भंते! निओदे त्ति कालतो केचिरं होंति? । जहण्णेणं तं चेव, उक्कोसेणं अणंतं कालं अणंताओ उस्सप्पिणीओ। खेत्तओ अड्ढाइज्जा पुग्गलपरियट्टा । बायरनिगोदपुच्छा। जहण्णेणं तं चेव, उक्कोसेणं सत्तरि सागरोवमकोडाकोडीओ । सुहुमनिगोयपुच्छा ।

१ निगोदस्य नु भदन्त ! कियन्तं कालमायुःस्थितिः प्रज्ञप्ता ? । गौतम ! जघन्येनान्तर्मुहूर्त्तमुत्कृष्टेनाप्यन्तर्मुहूर्त्तम् ।

२ प्रत्येकशरीरबादरवनस्पतिकायिकानां भदन्त ! कियन्तं कालं कायस्थितिः प्रज्ञप्ता ? । गौतम ! जघन्येनान्तर्मुहूर्त्तम्, उत्कर्षेण सप्ततिः सागरोपमकोटीकोट्यः । निगोदो नु भदन्त ! निगोद इति कालतः कियच्चिरं भवति ? । जघन्येन तच्चैव, उत्कर्षेणानन्तं कालमनन्ता उत्सर्पिण्यः । क्षेत्रतोऽर्धतृतीयाः पुद्गलपरावर्त्ताः । बादरनिगोदपृच्छा । जघन्येन तच्चैव, उत्कृष्टेन सप्ततिः सागरोपमकोटीकोट्यः । सूक्ष्मनिगोदपृच्छा । जघन्येन तच्चैव, उत्कृष्टेनासङ्ख्येयं कालमिति ।

जहण्णेण त चेव, उक्कोसेण असखेज्ज काल ति" ॥ असङ्ख्यकालमुत्कृष्ट पनकजीवानामन्तरम् तत उद्वृत्य हि पृथिव्यादिपूत्पत्तव्यम् । तेषु चासङ्ख्येयकालैव कायस्थितिरिहापि तथाऽभिधानादिति सूत्रचतुर्दशकार्थ. ॥ ९२–१०५ ॥

प्रकृतमुपसहरन्नुत्तरग्रन्थ च सम्बन्धयन्नाह—

इच्चेए थावरा तिविहा समासेण वियाहिया । इत्तो उ तसे तिविहे वुच्छामि अणुपुव्वसो ॥ १०६ ॥

व्याख्या–इत्येवम्प्रकारा एते पृथिव्यादयः स्थानशीला स्थावरास्त्रिविधा. समासेन सङ्क्षेपेण व्याख्याता., विस्तरतो ह्यमीषा बहुतरभेदत्वात् । त्रयाणामप्यमीषां स्वयमवस्थितिस्वभावत्वात् । इतः स्थावरविभक्तेरनन्तरं 'तु. पुन.'त्रसास्त्रिविधान् वक्ष्यामि 'अणुपुव्वसो'त्ति आनुपूर्व्येति ॥ १०६ ॥

तानेवाह—

तेऊ वाऊ य बोधव्वा उराला य तसा तहा । इच्चेए तसा तिविहा तेसि भेए सुणेह मे ॥ १०७ ॥

व्याख्या–तेजोयोगात् तेजास्यग्नयस्तद्वर्त्तिनो जीवा अपि तथोक्ता । एवं वायवश्च बोद्धव्या. । 'उराल'त्ति उदारा एकेन्द्रियापेक्षया प्राय स्थूला द्वीन्द्रियादयश्च त्रसास्तथा । इत्येते त्रस्यन्ति देशाद् देशान्तरं सङ्क्रामन्तीति त्रसास्त्रिविधा. । तेजो–वाय्वोश्च स्थावरनामकर्मोदयेऽप्युक्तरूपं त्रसनमस्तीति । ततस्तेजो–वाय्वोर्गतित्रसः, उदाराणां च लब्धितोऽपि त्रसत्वमिति । तेषां तेज.प्रभृतीना भेदान् शृणुत मे कथयत इति ॥ १०७ ॥

तत्र तेजोजीवानाह—

दुविहा तेउजीवा उ सुहुमा बायरा तहा । पज्जत्तमपज्जत्ता एवमेए दुहा पुणो ॥ १०८ ॥
बायरा जे उ पज्जत्ता णेगहा ते वियाहिया । इंगाले मुम्मुरे अगणी अच्चि–जाला तहेव य ॥ १०९ ॥
उक्का विज्जू य बोधव्वा णेगहा एवमायओ । एगविहमणाणत्ता सुहुमा तत्थ वियाहिया ॥ ११० ॥
सुहुमा सव्वलोगंमि लोगदेसे य बायरा । इत्तो कालविभागं तु तेसिं वुच्छं चउव्विहं ॥ १११ ॥
संतइं पप्प णाईया अपज्जवसिया वि य । ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ ११२ ॥
तिन्नेव अहोरत्ता उक्कोसेण वियाहिया । आउठिई तेऊणं अंतोमुहुत्तं जहन्निया ॥ ११३ ॥
असंखकालमुक्कोसा अंतोमुहुत्तं जहन्निया । कायठिई तेऊणं तं कायं तु अमुंचओ ॥ ११४ ॥
अणंतकालमुक्कोसं अंतोमुहुत्तं जहन्नयं । विजढंमि सए काए तेउजीवाण अंतरं ॥ ११५ ॥
एएसिं वन्नओ चेव गंधओ रस–फासओ । संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ ११६ ॥

एताः प्रायः प्राग्वत् । नवरम्–अङ्गारो भास्वरेन्धनरूपः, मुर्मुरो भस्ममिश्राग्निकणरूपः, अग्निरुक्तभेदातिरिक्तः, अर्चिर्मूलप्रतिबद्धाग्निशिखा दीपशिखा वा, ज्वाला छिन्नमूलाऽग्निशिखैवेति गाथानवकार्थः ॥ १०८–११६ ॥

वायुजीवानाह—

दुविहा वाउजीवा उ सुहुमा वायरा तहा । पज्जत्तमपज्जत्ता एवमेए दुहा पुणो ॥ ११७ ॥
वायरा जे उ पज्जत्ता पंचहा ते पकित्तिया । उक्कलिया-मंडलिया-घण-गुंजा-सुद्धवाया य ॥ ११८ ॥
संवट्टगवाया य णेगहा एवमायओ । एगविहमणाणत्ता सुहुमा तत्थ वियाहिया ॥ ११९ ॥
सुहुमा सव्वलोगम्मि लोगदेसे य वायरा । इत्तो कालविभाग तु तेसिं वुच्छं चउव्विहं ॥ १२० ॥
संतइं पप्प णाईया अपज्जवसिया वि य । ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ १२१ ॥
तिन्नेव सहस्साइ वासाणुक्कोसिया भवे । आउठिई वाऊणं अंतोमुहुत्तं जहन्निया ॥ १२२ ॥
असखकालमुक्कोसा अतोमुहुत्तं जहन्निया । कायठिई वाऊणं तं कायं तु अमुंचओ ॥ १२३ ॥
अणतकालमुक्कोसं अतोमुहुत्तं जहन्नयं । विजढम्मि सए काए वाउजीवाण अंतरं ॥ १२४ ॥
एएसि वन्नओ चेव गधओ रस–फासओ । संठाणादेसओ वा वि विहाणाइ सहस्ससो ॥ १२५ ॥

एता अपि प्राग्वत् । पञ्चधेत्युपलक्षणमस्यानेकधेत्यभिधानात् । वातशब्दस्य प्रत्येकमभिसम्बन्धादुत्कलिकावाता

ये स्थित्वा स्थित्वा पुनर्वान्ति । मण्डलिकावाता वातोलीरूपाः । घनवाता रत्नप्रभाद्यधोवर्त्तिनां घनोदधीनां विमानानां चाधारा हिमपटलकल्पा वायवः । गुञ्जावाता ये गुञ्जन्तो वान्ति । शुद्धवाता उत्कलिकादिविकला मन्दानिलादयः ॥ संवर्त्तकवाताश्च ये बहिःस्थितमपि तृणादि विवक्षितक्षेत्रान्तः क्षिपन्ति । इति गाथानवकार्थः ॥११७–१२५॥

इत्थं तेजो–वायुत्रसानुक्त्वोदारत्रसानाह—

ओराला तसा जे उ चउहा ते पकित्तिया । बेइंदिय तेइंदिय चउरो पंचिंदिया चेव ॥ १२६ ॥

व्याख्या–उदारास्त्रसा ये पुनश्चतुर्धा चतुष्प्रकारास्ते प्रकीर्त्तिताः । चतुर्धात्वमेवाह–द्वे इन्द्रिये स्पर्शन–रसनाख्ये येषां ते द्वीन्द्रियाः । एतच्च निर्वृत्त्युपकरणाख्यं द्रव्येन्द्रियमभिप्रेत्योच्यते । भावेन्द्रियापेक्षयैकेन्द्रियाणामपीन्द्रियपञ्चकस्यापि सम्भवात् । एवं शेषेष्वपीन्द्रियेषु भावनीयम् । तथैव ते एव द्वे इन्द्रिये येषां तृतीयं घ्राणं ते त्रीन्द्रियाः । तान्येव त्रीणि चतुर्थं चक्षुश्च येषां ते चतुरिन्द्रियाः । येषां चत्वारि तानि पञ्चमं श्रोत्रमिति पञ्चेन्द्रियाः ॥१२६॥

तत्र द्वीन्द्रियभेदानाह—

बेइंदिया उ जे जीवा दुविहा ते पकित्तिया । पज्जत्तमपज्जत्ता तेसिं भेए सुणेह मे ॥ १२७ ॥

किमिणो सोमंगला चेव अलसा माइवाहया । वासीमुहा य सिप्पीया संखा संखणगा तहा ॥ १२८ ॥

पल्लोयाणुल्लया चेव तहेव य वराडगा। जलूगा जालगा चेव चंदणा य तहेव य ॥ १२९॥

इइ वेइंदिया एए णेगहा एवमायओ । लोएगदेसे ते सव्वे न सव्वत्थ वियाहिया ॥ १३० ॥

संतइं पप्प णाईया अपज्जवसिया वि य । ठिइ पडुच्च साईया सपज्जवसिया वि य ॥ १३१ ॥

वासाइं बारसेव उ उक्कोसेण वियाहिया । वेइंदियआउठिई अंतोमुहुत्तं जहन्निया ॥ १३२ ॥

संखिज्जकालमुक्कोसा अंतोमुहुत्त जहन्निया । वेइंदियकायठिई तं कायं तु अमुंचओ ॥ १३३ ॥

अणंतकालमुक्कोसं अंतोमुहुत्त जहन्नय । वेइंदियजीवाणं अंतरेयं वियाहियं ॥ १३४ ॥

एएसिं वन्नओ चेव गंधओ रस–फासओ । संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ १३५ ॥

एता. प्राय पूर्ववदेव द्वीन्द्रियाभिलापेन व्याख्येया । नवरं कृमयोऽशुच्यादिभवाः । अलसा प्रतीताः । मातृवाहका ये काष्ठशकलानि समोभयाग्रतया सम्बध्नन्ति । वासीमुखा वास्याकारमुखा । 'सिप्पीय'त्ति शुक्तयः । शङ्खा प्रसिद्धा. । शङ्खनिकास्तदाकृतय एवात्यन्तलघवो जीवा ॥ वराटका. कपर्दकाः । जलौकसो दुष्टरक्ताकर्षिण्य. । चन्दनका अक्षा. । शेषास्तु यथासम्प्रदाय वाच्या. ॥ वर्षाणि द्वादशैव तूत्कृष्टत इति गाथानवकार्थ ॥१२७–१३५॥

त्रीन्द्रियानाह—

तेइंदिया उ जे जीवा दुविहा ते पकित्तिया । पज्जत्तमपज्जत्ता तेसिं भेए सुणेह मे ॥ १३६ ॥
कुंथु—पिवीलिया दंसा उक्कलुदेहिया तहा । तणहार—कट्ठहारा य मालूगा पत्तहारगा ॥ १३७ ॥
कप्पासट्ठिमिंजा य तिंदुगा तउसमिंजगा । सदावरी य गुम्मी य बोधव्वा इंदगाइया ॥ १३८ ॥
इंदगोवगमाइया णेगहा एवमायओ । लोएगदेसे ते सव्वे न सव्वत्थ वियाहिया ॥ १३९ ॥
संतइं पप्प णाईया अपज्जवसिया वि य । ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ १४० ॥
एगूणवन्नहोरत्ता उक्कोसेण वियाहिया । तेइंदिय—आउठिई अंतोमुहुत्तं जहन्निया ॥ १४१ ॥
संखिज्जकालमुक्कोसा अंतोमुहुत्तं जहन्निया । तेइंदियकायठिई तं कायं तु अमुंचओ ॥ १४२ ॥
अणंतकालमुक्कोसं अंतोमुहुत्तं जहन्नयं । तेइंदियजीवाणं अंतरेयं वियाहियं ॥ १४३ ॥
एएसिं वन्नओ चेव गंधओ रस—फासओ । संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ १४४ ॥

एता अपि पूर्ववन्नवरं कुन्थवोऽनुद्धरितसत्त्वप्रभृतयः । पिपीलिका कीटिका ॥ गुम्मी शतपदी खज्जूरकः । एवमन्येऽपि यथासम्प्रदायं ज्ञेयाः ॥ एकोनपञ्चाशदहोरात्राण्यायुःस्थितिः । इति गाथानवकार्थः ॥ १३६—१४४ ॥

चतुरिन्द्रियानाह—

चउरिंदिया उ जे जीवा दुविहा ते पकित्तिया । पज्जत्तमपज्जत्ता तेसि भेए सुणेह मे ॥ १४५ ॥

अंधिया पुत्तिया चेव मच्छिया मसगा तहा । भमरे कीड-पयंगे य ढिकुणे कुकुणे तहा ॥१४६॥

कुकुडे सिंगिरीडी य नदावत्ते य विछिए । डोले य भिंगिरीडी य विरिली अच्छिवेहए ॥ १४७ ॥

अच्छिले माहए अच्छिरोडए विचित्तचित्तए । उहिजलिया जलकारी य तंनीया तंबगाइया ॥ १४८ ॥

इइ चउरिंदिया एए णेगहा एवमायओ । लोगस्स एगदेसमि ते सव्वे परिकित्तिया ॥ १४९ ॥

संतइ पप्प णाईया अपज्जवसिया वि य । ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ १५० ॥

छच्चेव य मासा उ उक्कोसेण वियाहिया । चउरिंदियआउठिई अंतोमुहुत्तं जहन्निया ॥ १५१ ॥

संखिज्जकालमुक्कोसा अंतोमुहुत्तं जहन्निया । चउरिंदियकायठिई तं कायं तु अमुंचओ ॥ १५२ ॥

अणंतकालमुक्कोसं अंतोमुहुत्तं जहन्नयं । विजढंमि सए काए अंतरेयं वियाहियं ॥ १५३ ॥

एएसिं वन्नओ चेव गंधओ रस-फासओ । संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ १५४ ॥

एता अपि पूर्ववदेव । नवरमेतज्जीवभेदाः केचित् प्रसिद्धाः, केचित् तत्तद्देशप्रसिद्धाः सम्प्रदायादवसेयाः । तथा षण्मासानेवोत्कृष्टा स्थितिः । इति गाथादशकार्थः ॥ १४५–१५४ ॥

पञ्चेन्द्रियानाह—

पंचिंदिया उ जे जीवा चउव्विहा ते विहाहिया ।
नेरइया तिरिक्खा य मणुया देवा य आहिया ॥ १५५ ॥

व्याख्या—पञ्चेन्द्रियास्तु ये जीवाश्चतुर्विधास्ते व्याख्यातास्तद् यथा—नैरयिकास्तिर्यञ्चश्च मनुजाश्च देवाश्चाख्याता-स्तीर्थकरादिभिः ॥ १५५ ॥

तत्र तावन्नैरयिकानाह—

नेरइया सत्तविहा पुढवीसू सत्तसू भवे । रयणाभ–सक्कराभा य वालुयाभा आहिया ॥ १५६ ॥
पंकाभा धूमाभा तमा तमतमा तहा । इइ नेरइया एए सत्तहा परिकित्तिया ॥ १५७ ॥
लोगस्स एगदेसंमि ते सव्वे उ वियाहिया । इत्तो कालविभागं तु तेसिं वुच्छं चउव्विहं ॥ १५८ ॥
संतइं पप्प णाईया अपज्जवसिया वि य । ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ १५९ ॥

पढमाए जहन्नेणं दसवाससहस्सिया ॥ १६० ॥
सागरोवममेगं तु उक्कोसेण वियाहिया । दुच्चाए जहन्नेणं एग तु सागरोवमं ॥ १६१ ॥
तिन्नेव सागरा उ उक्कोसेण वियाहिया । तईयाए जहन्नेणं तिन्नेव उ सागरोवमा ॥ १६२ ॥
सत्तेव सागरा उ उक्कोसेण वियाहिया । चउत्थीए जहन्नेण सत्तेव उ सागरोवमा ॥ १६३ ॥
दससागरोवमा उ उक्कोसेण वियाहिया । पंचमाए जहन्नेणं दस चेव उ सागरोवमा ॥ १६४ ॥
सत्तरससागरा उ उक्कोसेण वियाहिया । छट्ठीए जहन्नेणं सत्तरससागरोवमा ॥ १६५ ॥
वावीससागरा उ उक्कोसेण वियाहिया । सत्तमाए जहन्नेण वावीसं सागरोवमा ॥ १६६ ॥
तित्तीस सागरा उ उक्कोसेण वियाहिया । सा तेसिं कायठिई जहन्नुक्कोसिया भवे ॥ १६७ ॥
जा चेव उ आउठिई नेरइयाणं वियाहिया । अणंतकालमुक्कोसं अंतोमुहुत्तं जहन्नयं ॥ १६८ ॥
विजढंमि सए काए नेरइयाण तु अंतरं ॥ १६९ ॥
एएसिं वन्नओ चेव गंधओ रस-फासओ । संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ १६९ ॥

व्याख्या—नैरयिकाः सप्तविधाः सप्तप्रकाराः । यत. पृथिवीपु सप्तसु भवेयुस्ततस्तद्भेदात् तेषां सप्तविधत्वमिति भाव. । कास्ता सप्त ? इत्याह—'रयणाभ'त्ति रत्नाना वैडूर्यादीनामाभा स्वरूपत. प्रतिभासनमस्यामिति

रत्नाभा, इत्थं चैतत् तत्र रत्नकाण्डस्य भवनपतिभवनानां च विविधरत्नवतां सम्भवात् । एवं सर्वत्र । नवरं शर्करा श्लक्ष्णपाषाणशकलरूपा तदाभा । 'धूमाभ'त्ति यद्यपि तत्र धूमासम्भवस्तथापि तदाकारपरिणतानां पुद्गलानां च सम्भवात् धूमाभात्वम् । तमोरूपत्वाच्च तमःप्रभा । प्रकृष्टतरतमस्त्वाच्च तमस्तमा । इत्यनेन पृथिवीसप्तविधत्वप्रकारेण नैरयिका एते सप्तधा परिकीर्त्तिताः ॥ क्षेत्रतो लोकस्यैकदेशे ते नैरयिका व्याख्याताः । इतोऽनन्तरं कालविभागं वक्ष्ये चतुर्विधम् ॥ चतुर्विधत्वमेवाह—कालतः सन्ततिं प्राप्यानाद्यपर्यवसितत्वम् । स्थितिं प्राप्य सादिसपर्यवसितत्वमिति ॥ सागरोपममेकं तूत्कृष्टेन व्याख्याता प्रथमायां नरकपृथिव्यां जघन्येन दशवर्षसहस्रिका 'प्रस्तावादायुःस्थितिर्नैरयिकाणाम्' इतीहोत्तरसूत्रेषु च द्रष्टव्यम् ॥ त्रीण्येव सागरोपमाणि तूत्कृष्टेनाख्याता द्वितीयायां जघन्येन पुनरेकं सागरोपमम् ॥ सप्त सागरोपमाणि तूत्कृष्टेन तृतीयायां जघन्येन पुनस्त्रीण्येव तानि ॥ दश सागरोपमाणि तूत्कृष्टेन चतुर्थ्यां जघन्येन सप्तैव ॥ सप्तदश सागरोपमाणि तूत्कृष्टेन पञ्चम्यां जघन्येन दशैव ॥ द्वाविंशतिसागरोपमाण्युत्कृष्टेन षष्ठ्यां जघन्येन सप्तदशैव ॥ त्रयस्त्रिंशत् सागरोपमाणि तूत्कृष्टेन व्याख्याता सप्तमनरकपृथिव्यां जघन्येन द्वाविंशतिसागरोपमा ॥ आयुःस्थितिरुक्ता कायस्थितिमाह—या चैव पुनरायुःस्थितिर्नैरयिकाणां व्याख्याता सैव तेषां कायस्थितिर्जघन्योत्कृष्टा भवेद् । यतस्ते तत उद्वृत्ताः पुनस्तत्र नोत्पद्यन्ते, किन्तु गर्भज—पर्याप्त—सङ्ख्येयवर्षायुष्ष्वेवेति ॥ अन्तर—भावाभिधायकं सूत्रद्वयं प्राग्वत् । नवरमन्तर्मुहूर्त्तं जघन्यमन्तरं यदाऽन्यतरनरकादुद्वृत्य

कश्चिज्जीवो गर्भज-पर्याप्त-मत्स्यादिषूत्पद्यते। तत्रातिसंक्लिष्टाध्यवसायोऽन्तर्मुहूर्त्तमायु प्रतिपाल्य मृत्वाऽन्यतमनरक एवोपजायते तदा लभ्यत इति भाव । इति चतुर्दशसूत्रार्थ ॥ १५६–१६९ ॥

अथ तिरश्चामाह—

पंचिंदियतिरिक्खा उ दुविहा ते वियाहिया । संमुच्छिमतिरिक्खा उ गब्भवक्कंतिया तहा ॥१७०॥

व्याख्या–पञ्चेन्द्रियतिर्यञ्चो द्विधा ते व्याख्याता । संमूर्च्छनं संमूर्च्छा अतिशयमूढता तया निर्वृत्ताः संमूर्च्छिमास्ते च ते तिर्यञ्चश्च संमूर्च्छिमतिर्यञ्चो ये मन.पर्याप्त्यभावतः सदा समूर्च्छिता इवावतिष्ठन्ते । तथा गर्भे व्युत्क्रान्तिरुत्पत्तिर्येषां ते गर्भव्युत्क्रान्तिका आख्याता ॥ १७० ॥

तद्भेदानाह—

दुविहा वि ते भवे तिविहा जलयरा थलयरा तहा। खहयरा य बोधव्वा तेसि भेए सुणेह मे ॥१७१॥

व्याख्या–द्विधाऽपि ते तिर्यञ्चो भवन्ति त्रिधा । जलचराः स्थलचरा. खचराश्च बोधव्यास्तेषां भेदान् शृणुत मे 'कथयत इति शेष.' ॥ १७१ ॥

तत्र जलचरभेदानाह—

मच्छा य कच्छभा य गाहा य मगरा तहा। सुंसुमारा य बोधव्वा पंचहा जलयराहिया ॥ १७२ ॥

लोएगदेसे ते सव्वे न सव्वत्थ वियाहिया। इत्तो कालविभागं तु तेसिं वुच्छं चउव्विहं ॥ १७३ ॥
संतइं पप्प णाईया अपज्जवसिया वि य। ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ १७४ ॥
इक्का य पुव्वकोडी उक्कोसेणं वियाहिया। आउठिई जलयराणं अंतोमुहुत्तं जहन्निया ॥ १७५ ॥
पुव्वकोडीपुहत्तं तु उक्कोसेणं वियाहिया। कायठिई जलयराणं अंतोमुहुत्तं जहन्निया ॥ १७६ ॥
अणंतकालमुक्कोसं अंतोमुहुत्तं जहन्नयं। विजढंमि सए काए जलयराणं तु अंतरं ॥ १७७ ॥
एएसिं वन्नओ चेव गंधओ रस-फासओ। संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ १७८ ॥

व्याख्या-मत्स्या मीनाः। कच्छपाः कूर्माः। ग्राहा जलचरविशेषाः। मकराः सुंसुमारा अपि तद्विशेषा एव ॥ 'लोएगदेसे' इत्यादि षट् सूत्राणि क्षेत्र-काल-भावाभिधायीनि। तथेह पृथक्त्वं द्विप्रभृत्या नवान्तम् ॥१७२-७८॥

स्थलचरभेदानाह—

चउप्पया य परिसप्पा दुविहा थलयरा भवे। चउप्पया चउविहा उ ते मे कित्तयओ सुण ॥१७९॥
एगखुरा दुखुरा चेव गंडीपय सनप्पया। हयमाई गोणमाई गयमाइ सीहमाइणो ॥ १८० ॥
भु-उरगपरिसप्पा परिसप्पा दुविहा भवे। गोहाई अहिमाई इक्केक्का णेगहा भवे ॥ १८१ ॥

लोएगदेसे ते सव्वे न सव्वत्थ वियाहिया । इत्तो कालविभागं तु तेसिं वुच्छं चउव्विहं ॥ १८२ ॥
संतइं पप्प णाईया अपज्जवसिया वि य । ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ १८३ ॥
पलिउवमाइ तिन्नि उ उक्कोसेण वियाहिया । आउठिई थलयराण अंतोमुहुत्तं जहन्निया ॥ १८४ ॥
पलिउवमाइ तिन्नि उ उक्कोसेण साहिया । पुव्वकोडीपुहुत्तेणं अंतोमुहुत्तं जहन्निया ॥ १८५ ॥
कायठिई थलयराणं अतर तेसिमं भवे । कालं अणंतमुक्कोसं अंतोमुहुत्त जहन्नयं ॥ १८६ ॥
एएसिं वन्नओ चेव गंधओ रस–फासओ । संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ १८७ ॥

व्याख्या–प्राग्वत् । नवरं चतुष्पदाः परिसर्पाश्चेति द्विविधाः स्थलचरा भवेयुः । तत्र परि समन्तात् सर्पन्ति गच्छन्तीति परिसर्पाः ॥ तत्र चतुष्पदाश्चतुर्विधास्तानेवाह–एकखुरश्चरणाधोवर्त्यस्थिविशेषो येषां ते एकखुरा अश्वादयः । एवं द्विखुरा गवादयः । गण्डी पद्मकर्णिका तद्वद् वृत्ततया पदानि येषां ते गण्डीपदा गजादयः । 'सनप्पय'त्ति 'सूत्रत्वात्' सह नखैर्वर्तन्त इति सनखास्तथाविधानि पदानि येषां ते सनखपदाः सिंहादयः ॥ परिसर्पानाह–'भुउरग'त्ति भुजा शरीरावयवविशेषास्तैः परिसर्पन्तीति भुजपरिसर्पाः । उरो वक्षस्तेन परिसर्पन्तीत्युरःपरिसर्पाः । गोधादयः, अहयः सर्पास्तदादयो यथाक्रममेकैकोऽनेकधा गोधेरक–नकुलादिभेदतो गोणसाजगरादिभेदतश्च भवेयुः ॥

पल्योपमानि तु त्रीण्युत्कृष्टेन साधिकानि पूर्वकोटीपृथक्त्वेन एतेषां कायस्थितिः । पल्योपमायुषो हि न पुनस्तत्रैवोत्पद्यन्ते । ये तु पूर्वकोट्यायुषो मृत्वा तत्रैवोपजायन्ते तेऽपि ससाष्टभवग्रहणानि यावत् । पञ्चेन्द्रियनर–तिरश्चामधिकनिरन्तरभवान्तरासम्भवात् । अत एतावत एवाधिक्यस्य सम्भव इति भावः ॥ १७९–१८७ ॥

खचरानाह—

चम्मे उ लोमपक्खीया तइया समुग्गपक्खीया । वियपक्खी य बोधव्वा पक्खिणो य चउव्विहा ॥१८८॥
लोएगदेसे ते सव्वे न सव्वत्थ वियाहिया । इत्तो कालविभागं तु तेसिं वुच्छं चउव्विहं ॥ १८९ ॥
संतइं पप्प णाईया अपज्जवसिया वि य । ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ १९० ॥
पलिओवमस्स भागो असंखिज्जइमो भवे । आउठिई खहयराणं अंतोमुहुत्तं जहन्निया ॥ १९१ ॥
असंखभागो पलियस्स उक्कोसेण उ साहिओ । पुव्वकोडीपुहुत्तेणं अंतोमुहुत्तं जहन्निया ॥ १९२ ॥
कायठिई खहयराणं अंतरं तेसिमं भवे । कालमणंतमुक्कोसं अंतोमुहुत्तं जहन्नयं ॥ १९३ ॥
एएसिं वन्नओ चेव गंधओ रस–फासओ । संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ १९४ ॥

व्याख्या—पूर्ववत् । नवरं चर्मपक्षिणश्चर्मचटिकाद्यास्तेषां चर्मरूपा एव पक्षा भवन्ति । रोमपक्षिणो राजहंसादयः ।

समुद्रपक्षिण. समुद्रकाकारपक्षवन्तस्ते च मानुपोत्तराद् वहिर्वर्त्तिनः । विततपक्षिणो ये सर्वदा विस्तारितपक्षा एवासते । इह यत्क्षेत्र–स्थित्यन्तरादि प्राक्तनसदृशमेव पुन. पुनरुच्यते, तद् विस्तरार्थिशिष्यानुग्रहार्थं यदेवंविधा अपि प्रज्ञापनीया इत्यदुष्टमिति ॥ १८८–१९४ ॥

अथ मनुष्यानाह—

मणुया दुविहभेया उ ते मे कित्तयओ सुण । संमुच्छिमा य मणुया गब्भवक्कंतिया तहा ॥१९५॥
गब्भवक्कंतिया जे उ तिविहा ते वियाहिया । अकम्म–कम्मभूमा य अंतरद्दीवया तहा ॥ १९६ ॥
पनरस–तीसइविहा भेया अट्ठवीसई । संखा उ कमसो तेसिं इइ एसा वियाहिया ॥ १९७ ॥
संमुच्छिमाण एसेव भेओ होइ आहिओ । लोगस्स एगदेसमि ते सव्वे वियाहिया ॥ १९८ ॥
संतइं पप्प णाईया अपज्जवसिया वि य । ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ १९९ ॥
पलिओवमा उ तिन्नि उ उक्कोसेण वियाहिया। आउठिई मणुयाणं अंतोमुहुत्तं जहन्निया ॥२००॥
पलिओवमा उ तिन्नि उ उक्कोसेण साहिया । पुव्वकोडिपुहत्तेणं अंतोमुहुत्तं जहन्निया ॥ २०१ ॥
कायठिई मणुयाणं अंतरं तेसिमं भवे । अणंतकालमुक्कोसं अंतोमुहुत्तं जहन्नयं ॥ २०२ ॥

एएसिं वन्नओ चेव गंधओ रस-फासओ। संठाणादेसओ वा वि विहाणाइं सहस्ससो ॥ २०३ ॥

व्याख्या-प्राग्वत्। नवरं 'अकम्म-कम्मभूमा य'त्ति भूमेत्यस्य प्रत्येकं सम्बन्धादकर्मभूमौ भवा आकर्मभूमा एवं कार्मभूमाश्च। अन्तरमिह समुद्रमध्यं तस्मिन् द्वीपा अन्तरद्वीपास्तेषु जाता अन्तरद्वीपजाः॥ 'पनरस-तीसइविह'त्ति विधशब्दस्योभयत्र योगात् पञ्चदशविधाः कार्मभूमा भरतैरावत-विदेहाभिधानानां तिसृणां कर्मभूमीनां प्रत्येकं पञ्च-सङ्ख्यत्वादमीषामपि तदाधारत्वात् पञ्चदशसङ्ख्यत्वम्। त्रिंशद्विधा आकर्मभूमाः। अत्रापि हैमवत-हरिवर्ष-रम्य-कैरण्यवत-देवकुरूत्तरकुरुरूपाणां षण्णामप्यकर्मभूमीनां प्रत्येकं पञ्चसङ्ख्यया गुणितानां त्रिंशत्वात्। इह च क्रमश इत्युक्तावपि पश्चान्निर्दिष्टानामपि कार्मभूमानां मुक्तिसाधकत्वेन प्राधान्यादादौ भेदाभिधानम्। भेदाश्चाष्टाविंशतिरन्तर-द्वीपजानामिति विभक्तिविपरिणामेन सम्बन्धनीयम्। अन्तरद्वीपानां तत्सङ्ख्यत्वात् तद्भवत्वात् तेषाम्। ते चैवम्-क्षुल्लहिमवतः पूर्वस्यामपरस्यां च दिशि जम्बूद्वीपवेदिकान्तात्परतः प्रत्येकं द्वे द्वे दंष्ट्रे विदिगभिमुखे विनिर्गते। तद् यथा-पूर्वस्यामेकैशान्यभिमुखी दंष्ट्रा, द्वितीयाऽऽग्नेय्यभिमुखी, पश्चिमस्यामेका नैर्ऋत्यभिमुखी, द्वितीया वायव्य-भिमुखी। एवं चतसृषु विदिगभिमुखिषु दंष्ट्रासु प्रत्येकं त्रीणि त्रीणि योजनशतानि लवणसमुद्रमतिक्रम्य विदि-क्ष्वेकैकभावेन चत्वारोऽन्तरद्वीपाः प्रत्येकं योजनशतत्रयविस्ताराः सन्ति। ततस्तत्परतस्तास्वेव चतसृषु दंष्ट्रासु प्रत्ये-कमेकैकयोजनशतवृद्ध्या वर्धिताः षट्षडन्तरद्वीपाश्चतुर्भिर्गुणिताश्चतुर्विंशतिद्वीपाः स्युस्ततश्चाद्यान्तरद्वीपचतुष्क-

सहिता अष्टाविंशतिरन्तरद्वीपा सन्ति । एवं शिखरिणि पर्वतेऽप्यष्टाविंशतिरिति । सर्वसाम्याच्चैषां भेदेनाविवक्षितत्वान्न सूत्रेऽष्टाविंशतिसङ्ख्याविरोध इति भावः । तेषु च युगलधार्मिकाः प्रतिवसन्ति । तच्छरीरमानाद्येवम्—

"अंतरदीवेसु नरा धणुसयअट्ठूसिया सया मुइया । पालंति मिहुणभाव पल्लस्स असंखभागाऊ ॥ १ ॥

चउसट्ठी पिट्ठकरंडयाण मणुयाण तेसिमाहारो । भत्तस्स चउत्थस्स उ उणसीतिदिणाणुपालणया" ॥ २ ॥

नामायाम-परिध्यादि क्षेत्रसमासबृहट्टीकातोऽवसेयम् ॥ सम्मूर्च्छिमानामेष एव भेदो यश्चाकर्मभूमादिगर्भजानामुक्तो भवत्याख्यातः । ते हि तेषामेव वान्त-पित्तादिषु सम्भवन्त्यङ्गुलासङ्ख्येयभागमात्रावगाहना इति ॥ पल्योपमानि त्रीण्यायु स्थितिरिति युगलधार्मिकापेक्षया ॥ कायस्थितिश्च पल्योपमानि त्रीणि पूर्वकोटिपृथक्त्वेनाधिकानीति । एतच्च तिर्यक्-कायस्थित्यभिहिताभिप्रायेण ज्ञेयम् ॥ अन्तरस्य चानन्तकालत्व साधारणवनस्पतिकायस्थित्यपेक्षयेति सूत्रनवकार्थ. ॥ १९५-२०३ ॥

देवानाह—

**देवा चउव्विहा वुत्ता ते मे कित्तयओ सुण । भोमिज्ज-वाणमंतर-जोइस-वेमाणिया तहा ॥ २०४ ॥**

---

१ अन्तरद्वीपेषु नरा धनु शताष्टोच्छ्रिता सदा मुदिता । पालयन्ति मिथुनभाव पल्यस्यासङ्ख्यभागायुषः ॥ १ ॥

चतु षष्टिः पृष्ठकरण्डकाना मनुजाना तेषामाहार । भक्तेन चतुर्थेन तूनाशीतिदिनानुपालनता ॥ २ ॥

व्याख्या–देवाश्चतुर्विधा उक्तास्तान् मे कीर्त्तयतः शृणु । भौमेयका भवनवासिनो रत्नप्रभापृथिव्या अशीतिसहस्रोत्तरयोजनलक्षबाहल्याया उपर्येकं योजनसहस्रमवगाह्याधश्चैकं योजनसहस्रं मुक्त्वा मध्येऽष्टसप्तत्युत्तरयोजनलक्षे भवनवासिदेवानां भवनसद्भावात् । 'वाणमंतर'त्ति 'आर्षत्वाद्' विविधा व्यन्तराण्युत्कर्षापकर्षात्मकविशेषरूपाणि निवासभूतानि गिरिकन्दर–विवरादीनि येषां ते व्यन्तराः । द्योतयन्ते इति द्योतींषि विमानानि तन्निवासिनो देवास्तु ज्योतिष्काः । विशेषेण मानयन्त्युपभुञ्जन्ति सुकृतिन एतानीति विमानानि तेषु भवा वैमानिकाः । तथेति समुच्चये ॥ २०४ ॥

एषामेवोत्तरभेदानाह—

दसहा उ भवणवासी अट्ठहा वणचारिणो । पंचविहा जोइसिया दुविहा वेमाणिया तहा ॥२०५॥

व्याख्या–'तुरेवार्थे' दशधैव भवनवासिनः । अष्टधाऽष्टप्रकारा वनेषु क्रीडैकरसतया चरितुं शीलमेषां ते वनचारिणो व्यन्तराः । पञ्चविधा ज्योतिष्काः । द्विविधा वैमानिकास्तथेति ॥ २०५ ॥

एतेषामेव नामान्याह—

असुरा नाग–सुवन्ना विज्जू अग्गी य आहिया । दीवोदहि-दिसा-वाया थणिया भवणवासिणो ॥२०६॥

पिसाय–भूया जक्खा य रक्खसा किन्नरा य किंपुरिसा । महोरगा य गंधव्वा अट्ठविहा वाणमंतरा ॥
चंदा सूरा य नक्खत्ता गहा तारागणा तहा । दिसाविचारिणो चेव पचहा जोइसालया ॥ २०८ ॥
वेमाणिया य जे देवा दुविहा ते वियाहिया । कप्पोवगा य बोधव्वा कप्पाईया तहेव य ॥ २०९ ॥
कप्पोवगा य बारसहा सोहम्मीसाणगा तहा । सणंकुमार–माहिंदा बंभलोगा य लंतगा ॥ २१० ॥
महासुक्का ,हस्सारा आणया पाणया तहा । आरणा अच्चुया चेव इइ कप्पोवगा सुरा ॥ २११ ॥
कप्पाईया य जे देवा दुविहा ते वियाहिया । गेविज्जाणुत्तरा चेव गेविज्जा नव वियाहिया ॥ २१२ ॥
हिट्ठिमा हिट्ठिमा चेव हिट्ठिमा मज्झिमा तहा । हिट्ठिमा उवरिमा चेव मज्झिमा हिट्ठिमा तहा ॥२१३॥
मज्झिमा मज्झिमा चेव मज्झिमा उवरिमा तहा । उवरिमा हिट्ठिमा चेव उवरिमा मज्झिमा तहा ॥
उवरिमा उवरिमा चेव इइ गेविज्जगा सुरा । विजया वेजयंता य जयंता अपराजिया ॥ २१५ ॥
सव्वट्ठसिद्धगा चेव पंचहाणुत्तरा सुरा । इइ वेमाणिया एए णेगहा एवमायओ ॥ २१६ ॥
लोगस्स एगदेसंमि ते सव्वे परिकित्तिया । इत्तो कालविभागं तु तेसिं वुच्छं चउव्विहं ॥ २१७ ॥

संतइं पप्प णाईया अपज्जवसिया वि य। ठिइं पडुच्च साईया सपज्जवसिया वि य ॥ २१८ ॥

आसां व्याख्या–प्रायः प्रतीता एव। नवरं असुरा इत्यसुरकुमाराः। एवं नागकुमारादिष्वपि कुमारशब्दः सर्वत्र योज्यः। सर्वेऽपि ह्यमी कुमाराकारधारिणः कुमारवन्मधुरललितगतयः शृङ्गाराभिजातरूपविक्रिया अद्भुतवेषाभरण–प्रहरण–यान–वाहना उल्बणरागाः क्रीडापराश्चेत्यसुरकुमारा इत्युच्यन्ते ॥ तारागणाः प्रकीर्णतारकसमूहाः। दिशासु विशेषेण मेरुप्रादक्षिण्यनित्यचारितालक्षणेन चरन्ति परिभ्रमन्तीत्येवंशीला दिशाविचारिणः। तद्विमानानि ह्येकविंशैरेकादशाधिकैर्योजनशतैर्मेरोश्चतसृष्वपि दिक्ष्वबाधया नित्यमेव प्रदक्षिणं चरन्तीति तेऽप्येवमुक्ताः। ज्योतींष्युक्तन्यायतो विमानान्यालया आश्रया येषां ते ज्योतिरालयाः ॥ कल्पन्ते इन्द्रसामानिकादि–दशप्रकारत्वेन विभज्यन्ते देवा एतेष्विति कल्पा देवलोकास्तानुपगच्छन्त्युत्पत्तिविषयतया प्राप्नुवन्तीति कल्पोपगाः। कल्पानुक्तरूपानतीतास्तदुपरिवर्तिस्थानोत्पत्तितयाऽतिक्रान्ताः कल्पातीताः ॥ सुधर्मा नामेन्द्रस्य सभाऽस्मिन्नस्तीति सौधर्मः कल्पः, स एषां स्थितिविषयोऽस्तीति सौधर्मिणः। एवमीशानादिष्वपि व्युत्पत्तिः कार्या ॥ ग्रीवेव ग्रीवा लोकपुरुषस्य त्रयोदशरज्जूपरिवर्त्ती प्रदेशस्तां निविष्टतयाऽतिभ्राजिष्णुतयाऽऽभरणभूता ग्रैवेया देवावासास्तन्निवासिनो देवा अपि ग्रैवेयाः। न विद्यन्ते उत्तराः प्रधानाः स्थिति–प्रभाव–सुख–द्युति–लेश्याऽऽदिभिरेभ्योऽन्ये देवा इत्यनुत्तराः। ततो ग्रैवेया नवविधाः ॥ तद्यथा–'हेट्ठिम'त्ति अधस्तना उपरितनपङ्क्त्यपेक्षया प्रथमास्त्रयस्तेष्वपि 'हेट्ठिम' त्ति अधस्तना अधस्तना-

धस्तना प्रथमत्रिकाधोवर्त्तिन । ततः प्रथमत्रिके एवाधस्तनमध्यमा. । पुनस्तत्रैवाधस्तनोपरितनाः । एवं द्वितीयत्रिके मध्यवर्त्तिनि मध्यमाधस्तना ॥ मध्यममध्यमा. । मध्यमोपरितना. । तथा तृतीयोपरितनत्रिके उपरितनाधस्तना । उपरितनमध्यमा ॥ उपरितनोपरितनाः । 'इतिर्भेदसमासौ' तत एतावद्भेदा एव ग्रैवेयकाः सुराः । अभ्युदयविघ्नहेतून् विजयन्ते इति विजयास्तथा वैजयन्ता एवं जयन्ताः । अपरैरन्यैरभ्युदयविघ्नहेतुभिरजिता इत्यपराजिता. ॥ सर्वेऽर्था. सिद्धा इव सिद्धा येषां ते सर्वार्थसिद्धाः । ते हि जितप्रायकर्माण. भविष्यद्भद्रा एव तत्रोत्पद्यन्ते। इतीत्येवम्प्रकारा वैमानिका अनेकविधा एवमादय इति ॥ क्षेत्र–कालाभिधायक गाथाद्वयं सादिसपर्यवसितत्वभावनया ज्ञेयमिति गाथात्रयोदशकार्थ· ॥ २०६–२१८ ॥

देवानामायुःस्थिति–कायस्थिती आह—

साहिय सागरं एक्कं उक्कोसेणं ठिई भवे । भोमिज्जाणं जहन्नेण दसवाससहस्सिया ॥ २१९ ॥

पलिओवममेग तु उक्कोसेणं ठिई भवे । वंतराणं जहन्नेणं दसवाससहस्सिया ॥ २२० ॥

पलिओवमं तु एग वासलक्खेण साहियं । पलिओवमट्ठभागो जोइसेसु जहन्निया ॥ २२१ ॥

दो चेव सागराइं उक्कोसेणं वियाहिया । सोहम्मंमि जहन्नेणं एगं च पलिओवमं ॥ २२२ ॥

सागरा साहिया दुन्नि उक्कोसेणं ठिई भवे । ईसाणंमि जहन्नेणं साहियं पलिओवमं ॥ २२३ ॥
सागराणि य सत्तेव उक्कोसेणं ठिई भवे । सणंकुमारे जहन्नेणं दुन्नि उ सागरोवमा ॥ २२४ ॥
साहिया सागरा सत्त उक्कोसेणं ठिई भवे । माहिंदंमि जहन्नेणं साहिया दुन्नि सागरा ॥ २२५ ॥
दस चेव सागराइं उक्कोसेणं ठिई भवे । बंभलोए जहन्नेणं सत्त उ सागरोवमा ॥ २२६ ॥
चउद्दस उ सागराइं उक्कोसेणं ठिई भवे । लंतगंमि जहन्नेणं दस उ सागरोवमा ॥ २२७ ॥
सत्तरस सागराइं उक्कोसेणं ठिई भवे । महासुक्के जहन्नेणं चउद्दस सागरोवमा ॥ २२८ ॥
अट्ठारस सागराइं उक्कोसेणं ठिई भवे । सहस्सारे जहन्नेणं सत्तरस सागरोवमा ॥ २२९ ॥
सागरा अउणवीसं तु उक्कोसेणं ठिई भवे । आणयंमि जहन्नेणं अट्ठारस सागरोवमा ॥ २३० ॥
वीसं तु सागराइं उक्कोसेणं ठिई भवे । पाणयंमि जहन्नेणं सागरा अउणवीसई ॥ २३१ ॥
सागरा एक्कवीसं तु उक्कोसेणं ठिई भवे । आरणंमि जहन्नेणं वीसई सागरोवमा ॥ २३२ ॥
बावीस सागराइं उक्कोसेणं ठिई भवे । अच्चुयंमि जहन्नेणं सागरा इक्कवीसई ॥ २३३ ॥

तेवीस सागराइं उक्कोसेणं ठिई भवे । पढममि जहन्नेणं वावीसं सागरोवमा ॥ २३४ ॥
चउवीस सागराइ उक्कोसेणं ठिई भवे । वीयंमि जहन्नेण तेवीसं सागरोवमा ॥ २३५ ॥
पणवीस सागराइं उक्कोसेण ठिई भवे । तइयंमि जहन्नेणं चउवीस सागरोवमा ॥ २३६ ॥
छवीस सागराइ उक्कोसेणं ठिई भवे । चउत्थंमि जहन्नेणं सागरा पणवीसई ॥ २३७ ॥
सागरा सत्तवीसं तु उक्कोसेणं ठिई भवे । पचमंमि जहन्नेणं सागरा उ छवीसई ॥ २३८ ॥
सागरा अट्ठवीस तु उक्कोसेणं ठिई भवे । छट्ठंमि जहन्नेणं सागरा सत्तवीसई ॥ २३९ ॥
सागरा इगुणतीसं तु उक्कोसेण ठिई भवे । सत्तममि जहन्नेणं सागरा अट्ठवीसई ॥ २४० ॥
तीसं तु सागराइ उक्कोसेणं ठिई भवे । अट्ठमंमि जहन्नेण सागराइं उणतीसई ॥ २४१ ॥
सागरा इक्कतीसं तु उक्कोसेणं ठिई भवे । नवममि जहन्नेण तीसई सागरोवमा ॥ २४२ ॥
तित्तीस सागराइ उक्कोसेण ठिई भवे । चउसु पि विजयाईसुं जहन्ना एक्कतीसई ॥ २४३ ॥
अजहन्नमणुक्कोसं तित्तीस सागरोवमा । महाविमाणसवट्ठे ठिई एसा वियाहिया ॥ २४४ ॥

जा चेव आउठिई देवाणं तु वियाहिया। सा तेसिं कायठिई जहन्नमुकोसिया भवे ॥ २४५ ॥
अणंतकालमुक्कोसं अंतोमुहुत्तं जहन्नयं। विजढंमि सए काए देवाणं हुज्ज अंतरं ॥ २४६ ॥
एएसिं वन्नओ चेव गंधओ रस–फासओ। संठाणादेसओ चेव विहाणाणि सहस्ससो ॥ २४७ ॥

आसां व्याख्या–प्रायः सुगमा एव। नवरं साधिकं 'सागरमिति' सागरोपममेकमुत्कृष्टेन स्थितिर्भवेद् भौमेयकानां भवनवासिनाम्। इयं सामान्योक्तावप्युत्तरनिकायाधिपस्य बलेरेवावसेया। दक्षिणनिकाये त्विन्द्रस्यापि सागरोपममेव। जघन्येन दशवर्षसाहस्रिका। इयमपि सामान्योक्तावपि किल्बिषिकाणामेव स्थितिः। प्रभावादीनां देवेषु स्थित्या सहैव ह्रास इत्युत्तरत्रापि भावनीयम् ॥ पल्योपमं वर्षलक्षाधिकं ज्योतिषामुत्कृष्टस्थितिश्चन्द्रापेक्षं चैतत्, सूर्यस्य तु वर्षसहस्राधिकं पल्योपमायुः, ग्रहाणामपि तदेव वर्षाधिक्याविशेषितम्, नक्षत्राणां तस्यैवार्द्धम्, तारकाणां तु चतुर्भागः। पल्योपमाष्टभागो ज्योतिष्षु जघन्यस्थितिरित्यपि तारकापेक्षमेव, शेषाणां पल्योपमचतुर्भागस्यैव जघन्यस्थितित्वात्। इह चोक्तरूपयोरुत्कृष्ट–जघन्ययोरपान्तरालवर्त्तिनी मध्यमा स्थितिरिति सर्वत्र द्रष्टव्यम् ॥ तथा प्रथमे इति 'प्रक्रमात् ग्रैवेयके' अधस्तनाधस्तने। एवं द्वितीयादिग्रैवेयकेष्विति सम्बन्धनीयम् ॥ अविद्यमानं जघन्यमस्यामित्यजघन्या, तथा अविद्यमानमुत्कृष्टमस्यामित्यनुत्कृष्टा, अजघन्या चासावनुत्कृष्टा च 'मोऽलाक्षणिकः'। महच्च

तदायु स्थित्यपेक्षया विमानं च महाविमानं तच्च तत् सर्वेऽर्थी अनुत्तरसुखादयो यस्मिंस्तत् सर्वार्थं च महाविमानसर्वार्थं तस्मिन्। स्थितिरिति सर्वत्रायुःस्थिति' 'प्रक्रमाद् देवानाम्'॥ तथाऽऽयु.स्थितेरेव कायस्थितित्वाभिधानेन तत्रानन्तरमनुत्पत्तिरेवेत्यभिप्राय इति सप्तविंशतिगाथार्थं । अन्तर–विधानाभिधायि सूत्रद्वयं पूर्ववद् व्याख्येयम् ॥ २१९–२४७॥

अथ निगमयितुमाह—

संसारत्था य सिद्धा य इइ जीवा वियाहिया। रूविणो चेवरूवी य अजीवा दुविहा वि य ॥२४८॥

व्याख्या–संसारस्थाश्च सिद्धाश्चेतीत्येवं जीवा व्याख्याताः । रूपिणश्चैव 'रूवीय'त्ति अकारप्रश्लेपादरूपिणश्चाजीवा अपि च द्विधा व्याख्याता इति ॥ २४८ ॥

उपदेशमाह—

इइ जीवमजीवे य सुच्चा सद्दहिऊण य । सव्वनयाण अणुमए रमेज्जा संजमे मुणी ॥ २४९ ॥

व्याख्या–इतीत्येवं जीवाजीवान् श्रुत्वाऽवधार्य, श्रद्धाय च तथेति प्रतिपद्य । सर्वनयाना ज्ञान–क्रियानयान्तर्गतानां नैगमादीनामनुमतेऽभिप्रेते, कोऽर्थः ? ज्ञानसहितसम्यक्चारित्ररूपे रमेत रतिं कुर्यात् संयमे पृथिव्याद्युपमर्दोपरमरूपे मुनिः ॥ २४९ ॥

ततश्च यद् विधेयं तदाह—

तओ बहूणि वासाणि सामण्णमणुपालिय । इमेण कमजोगेण अप्पाणं संलिहे मुणी ॥ २५० ॥

व्याख्या–ततस्तदनन्तरं बहूनि वर्षाणि श्रामण्यं श्रमणभावमनुपाल्यानेन वक्ष्यमाणेन, क्रमः परिपाटी तेन योगस्तपोऽनुष्ठानरूपो व्यापारः क्रमयोगस्तेनात्मानं संलिखेद् द्रव्यतो भावतश्च कृशीकुर्याद् मुनिरिति । यदुक्तम्—

"[1]परिपालिओ य दीहो परियाओ वायणा तहा दिण्णा । निप्फाइया य सीसा सेयं मे अप्पणो काउं" ॥ १ ॥ २५० ॥

सम्प्रति संलेखनाभेदाभिधानपूर्वकं क्रमयोगमाह—

बारसेव उ वासाइं संलेहुक्कोसिया भवे । संवच्छरं मज्झिमया छम्मासा य जहन्निया ॥ २५१ ॥

पढमे वासचउक्कंमि विगईनिजूहणं करे । बिइए वासचउक्कंमि विचित्तं तु तवं चरे ॥ २५२ ॥

एगंतरमायामं कट्टु संवच्छरे दुवे । तओ संवच्छरद्धं तु नाइविगिट्ठं तवं चरे ॥ २५३ ॥

तओ संवच्छरद्धं तु विगिट्ठं तु तवं चरे । परिमियं चेव आयामं तंमि संवच्छरे करे ॥ २५४ ॥

कोडीसहियमायामं कट्टु संवच्छरे मुणी । मासद्ध–मासिएणं तु आहारेणं तवं चरे ॥ २५५ ॥

---

१ परिपालितश्च दीर्घः पर्यायो वाचना तथा दत्ता । निष्पादिताश्च शिष्याः श्रेयो मे आत्मनः कर्तुम् ॥ १ ॥

व्याख्या—द्वादशैव न तु न्यूनाधिकानि वर्षाणि संलेखनं द्रव्यत· शरीरस्य, भावत· कषायाणां कृशताऽऽपादनं संलेखनेत्यर्थ· । उत्कृष्टा सर्वगुर्वी भवेत् । संवत्सरं वर्षं मध्यमिका । षण्मासा च पुनस्ततो जघन्यिका ॥ इत्थं संलेखनायास्त्रैविध्ये उत्कृष्टाया क्रमयोगमाह—प्रथमे आद्ये वर्षचतुष्के विकृति· क्षीरादिस्तस्य निर्यूहणमाचाम्लस्य निर्विकृतस्य वा करणेन परित्यागस्तं विचित्रतपसः पारणके 'करे'त्ति कुर्यात् । द्वितीये वर्षचतुष्के विचित्रमेव चतुर्थ—षष्ठाष्टमादिरूप तपश्चरेत् । अत्र च पारणके सम्प्रदाय·—'उग्गमविसुद्ध कप्पणिज्ज पारे'[1] इति ॥ एकेन चतुर्थलक्षणेन तपसाऽन्तर व्यवधानं यस्मिंस्तदेकान्तरमायाममाचाम्लं 'कट्टु'त्ति कृत्वा संवत्सरौ द्वौ । ततस्तदनन्तरं संवत्सरार्धं मासषट्कं 'तुः पूरणे' नैवातिविकृष्टमष्टम—द्वादशादि तपश्चरेदासेवेत ॥ तत· संवत्सरार्धं षण्मासलक्षणं 'तु पुन·' विकृष्टमेव 'तुरेवार्थे' तपश्चरेत् । अत्रैव विशेषमाह—'परिमियं चेव'त्ति 'च: पूरणे' तत· परिमितमेव स्वल्पमेव आयाममाचाम्ल तस्मिन्ननन्तर द्विधा विभज्योपदर्शिते संवत्सरे कुर्यात् । विकृष्टतपःपारणके कोटीसहितत्वाद्यविशेषितमाचाम्ल करोतीत्यर्थ ॥ इत्थमेकादशसु वर्षेष्वतिक्रान्तेषु द्वादशे वर्षे यत् कुर्यात् तदाह—कोटाग्रभागे प्रत्याख्यानाद्यान्तकोणरूपे सहिते मिलिते यस्मिंस्तत् कोटीसहितम् । को भावः ? विवक्षितदिने प्रातराचाम्लं प्रत्याख्याय तथाहोरात्रं प्रतिपाल्य पुनर्द्वितीयेऽह्नि आचाम्लमेव प्रत्याचष्टे । ततो द्वितीयस्यारम्भकोटिराद्यस्य तु पर्यन्तकोटि-

१ उद्गमविशुद्ध कल्पनीय पारयेत् ।

रुभे अपि मिलिते भवत इति तत् कोटीसहितमुच्यते । अन्ये त्वाहुः—आचाम्लमेकस्मिन् दिने कृत्वा द्वितीयदिने च तपोऽन्तरं कृत्वा तृतीयदिने आचाम्लमेव कुर्वतः कोटीसहितमुच्यते । उभयार्थसंवादिनी चेयं गाथा—

"पैट्ठवणओ य दिवसो पञ्चक्खाणस्स निट्ठवणओ य । जहियं समिति दोन्नि उ तं भणइ कोडिसहियं तु" ॥ १ ॥

इत्थं कोटीसहितमाचाम्लं कृत्वा संवत्सरे 'प्रक्रमाद् द्वादशे' मुनिः साधुः 'मासद्ध'त्ति 'सूत्रत्वात्' मासे कृतो मासिकस्तेन । एवमर्धमासिकेन 'आहारेणं' ति पारणकाशनेन 'उपलक्षणत्वादाहारत्यागेन च' । तप इति 'प्रस्तावाद् भक्तपरिज्ञादिकमनशनम्', चरेदनुतिष्ठेत् । एतद्विस्तरः श्रीनिशीथचूर्णितोऽवसेयः । इति गाथापञ्चकार्थः ॥२५१–२५५॥

इत्थं प्रतिपन्नानशनस्याशुभभावनानां परिहार्यतामनर्थहेतुतां च दर्शयितुमाह—

कंदप्पमाभिओगं किब्बिसियं मोहमासुरत्तं च । एयाओ दुग्गईओ मरणंमि विराहिया हुंति ॥२५६॥

व्याख्या—'पदैकदेशे पदसमुदायोपचारात्' कन्दर्पेति कन्दर्पभावना । एवमाभियोग्यभावना । किल्बिषिकभावना । मोहभावना । असुरत्वभावना च । एताः सर्वा अपि भावना दुर्गतिहेतुत्वेन दुर्गतयः 'कारणे कार्यातिदेशात्' । दुर्गतिश्चेह 'अर्थाद् देवदुर्गतिः' तद्वशतो हि व्यवहारतश्चारित्रे सत्यप्येतद्विधसुरनिकायोत्पत्तिरेव चारित्रविकलतया नानागतिभाक्त्वमिति । उक्तं हि—

१ प्रस्थापनकश्च दिवसः प्रत्याख्यानस्य निष्ठापनकश्च । यत्र समितः द्वौ तु तद् भण्यते कोटिसहितं तु ॥ १ ॥

"जो सजओ वि एयासु अप्पसत्थासु भावणं कुणइ । सो तव्विहेसु गच्छइ सुरेसु भईओ चरणहीणो" ॥ १ ॥

कदा? इत्याह—मरणे मरणसमये । कीदृश्यः सत्यो दुर्गतयो भवन्त्येताः? विराधिकाः 'सम्यग्दर्शनादीनामिति गम्यते' भवन्ति । इह च 'मरणे' इत्यभिधानम्, पूर्वमेतत्सत्तायामप्यन्तकाले शुभभावनासद्भावे सुगतेरपि सम्भवोपदर्शनार्थम् ॥ २५६ ॥

मिच्छादंसणरत्ता सनियाणा हु हिंसगा । इय जे मरंति जीवा तेसिं पुण दुल्लहा बोही ॥ २५७ ॥

व्याख्या—मिथ्यादर्शनमतत्त्वे तत्त्वाभिनिवेशरूपं तस्मिन् रक्ता आसक्ता मिथ्यादर्शनरक्ताः, सह निदानेन साभिष्वङ्गप्रार्थनारूपेण वर्तन्त इति सनिदाना , 'हुः पूरणे' हिंसकाः प्राण्युपमर्दकारिण इत्येवरूपा ये म्रियन्ते जीवास्तेषां पुनर्दुर्लभा बोधि प्रेत्य जिनधर्मप्राप्तिः ॥ २५७ ॥

सम्मद्दंसणरत्ता अनियाणा सुक्कलेसमोगाढा। इय जे मरंति जीवा सुलहा तेसिं भवे बोही ॥२५८॥

व्याख्या—सम्यग्दर्शनं तत्त्वरुचिरूपं तस्मिन् रक्ताः, अनिदानाः, शुक्लेश्यामवगाढाः प्रविष्टा इति ये म्रियन्ते सुलभा तेषां बोधिः ॥ २५८ ॥

---

१ य सयत्तोऽप्येताभिरप्रशस्ताभिः भावना करोति । स तद्विधेषु गच्छति सुरेषु, भक्तभ्चरणहीनः ॥ १ ॥

मिच्छादंसणरत्ता सनिआणा कण्हलेसमोगाढा। इय जे मरंति जीवा तेसिं पुण दुल्लहा बोही ॥२५९॥

व्याख्या–प्राग्वत्। ननु पुनरुक्तत्वान्निरर्थकमिदं सूत्रम्, हिंसकत्वाभिधानेन कृष्णलेश्याऽवगाहकत्वस्याप्युक्तत्वात्। नैवम्, विशेषज्ञापनार्थत्वादस्य। विशेषश्च सर्वत्र तथाविधसंक्लिष्टपरिणामरूपता द्रष्टव्या। अन्यथा हि सामान्येन तद्विशेषणविशिष्टानामपि तद्भवे भवान्तरे वा बोधिदर्शनाद् व्यभिचार्येवेदं स्याद्। इह मिथ्यादर्शनरक्तत्वादीनामेव विशेषज्ञापनमिति गाथाऽर्थः ॥ २५९ ॥

संलेखनादिमाहात्म्यमाह—

जिणवयणे अणुरत्ता जिणवयणं जे करिंति भावेणं। अमला असंकिलिट्ठा ते होंति परित्तसंसारी॥२६०॥

व्याख्या–जिनवचनेऽनुरक्ता जिनवचनं तदुक्तानुष्ठानं ये कुर्वन्ति भावेनाऽऽन्तरपरिणामेन, न तु बहिर्वृत्त्यैव। अमला मिथ्यात्वादिभावमलरहिताः। असंक्लिष्टा रागादिसंक्लेशरहितास्ते भवन्ति 'परित्तः' समस्तदेवादिभवाल्पताऽऽपादनेन परिमितः स चासौ संसारश्च परित्तसंसारः स विद्यते येषां ते परित्तसंसारिणः कतिपयभवाभ्यन्तरमुक्तिभाज इत्यर्थः। 'प्राकृतत्वाद् वचनव्यत्ययः' ॥ २६० ॥

बालमरणाणि बहुसो अकाममरणाणि चेव बहुयाणि। मरिहंति ते वराया जिणवयणं जे न याणंति ॥

व्याख्या–'सुव्यत्ययात्' बालमरणैर्विपभक्षणोद्बन्धनादिनिबन्धनैर्बहुशोऽनेकधा, अकाममरणैरनिच्छामरणैश्च बहुभि. 'एवेति पूरणे'। मरिप्यन्ति ते वराका बहुदु खभाजनतयाऽनुकम्पनीया जिनवचनं ये न जानन्ति 'ज्ञानफलत्वादनुष्ठानस्य' न चानुतिष्ठन्तीति ॥ २६१ ॥

अतो जिनवचनं भावत. कर्त्तव्यम्। तद् भावकरणं चालोचनया। सा च तच्छ्रवणार्हाणामेव देयाऽतस्तानाह—

बहुआगमविन्नाणा समाहिउप्पायगा य गुणगाही। एएण कारणेणं अरिहा आलोयणं सोउं ॥२६२॥

व्याख्या–बहु सूत्रतोऽर्थतश्च स चासावागमश्च तस्मिन् विशिष्टं ज्ञानमेपामिति बह्वागमविज्ञाना। समाधेश्चित्तस्वास्थ्यस्योत्पादकाश्च। को भाव. ? देश–कालाशयादिविज्ञतया मधुर–गम्भीरप्रभृतिभणितिभिः समाधिमेवालोचनाऽऽदातॄणामुत्पादयन्तीति। गुणग्राहिणश्च परेषां सद्भूतगुणग्रहणशीला'। एतैर्बह्वागमविज्ञानत्वादिभिः कारणैरर्हा योग्याः 'भवन्त्याचार्यादय इति गम्यते'। आलोचनां विकटनाम् 'अर्थात् परैर्दीयमानाम्' श्रोतुम्। एते एवालोचनाश्रवणफलं परेषां विशुद्धिलक्षणं सम्पादयितुमीशते इति ॥ २६२ ॥

सम्प्रति कन्दर्पादिभावनानां यत् परिहार्यत्वमुक्तम्। तत्र यत् कुर्वता ताः कृताः स्युस्तत्परिहारेणैव तासां परिहार इति ज्ञापनार्थमाह—

कंदप्प-कोक्कुयाइं तह सील-सहाव-हास-विगहाहिं। विम्हावेंतो य परं कंदप्पं भावणं कुणइ ॥ २६३ ॥

व्याख्या-कन्दर्पः-अट्टहासहसनम्, अनिभृतालापाश्च गुर्वादिनाऽपि सह निष्ठुर-वक्रोक्त्यादिरूपाः, कामकथा, कामोपदेश-प्रशंसाश्च। यदुक्तम्-

"[1]कहकहकहस्स हसणं कंदप्पो अणिहुया य संलावा। कंदप्पकहाकहणं कंदप्पुवएस-संसा य" ॥ १ ॥

कौत्कुच्यं द्विधा कायकौत्कुच्यं वाक्कौत्कुच्यं च, तत्राद्यं यत् स्वयमहसन्नेव भ्रू-नयन-वदनादि तथा करोति यथाऽन्यो हसति। द्वितीयं तज्जल्पति येनान्यो हसति, तथा नानाजीवविरुतानि मुखातोद्यवाद्यतां च विधत्ते तद् वाक्कौत्कुच्यम्। ततः कन्दर्पश्च कौत्कुच्यं च कन्दर्प-कौत्कुच्ये 'कुर्वन्निति शेषः'। तथा शीलं च फलनिरपेक्षा वृत्तिः, स्वभावश्च परविस्मयोत्पादनाभिसन्धिनैव तत्तन्मुखविकारादि, हासश्चाट्टहासादिः, विकथाश्च परविस्मापककविविधोल्लापाः, शील-स्वभाव-हास-विकथास्ताभिर्विस्मापयंश्च विस्मितं कुर्वन् परमन्यम्। कन्दर्पयोगात् कन्दर्पाः 'प्रस्तावाद् देवाः' तेषामियं तेपूत्पत्तिहेतुतया कान्दर्पी तां भाव्यते आत्मसान्नीयते आत्माऽनयेति भावना तद्भवाभ्यासरूपा तां करोति। एवमुत्तरत्रापि भावनीयम् ॥ २६३ ॥

१ कहकहकहस्स हसनं कन्दर्पोऽनिभृताश्च संलापाः। कन्दर्पकथाकथनं कन्दर्पोपदेश-शंसा च ॥ १ ॥

आभियोगिकीभावनामाह—

**मंताजोगं काउं भूईकम्मं च जे पउंजति । सायरसइड्ढिहेउ अभिओगं भावणं कुणइ ॥ २६४ ॥**

व्याख्या–मन्त्राः प्रागुक्तरूपास्तेषामायोगो व्यापारो मन्त्रायोग । यदिवा मन्त्राश्च योगाश्च तथाविधद्रव्यसंयोगा. 'सूत्रत्वात्' मन्त्रयोगं तत् कृत्वा व्यापार्य, भूत्या भस्मना 'उपलक्षणत्वान्मृदा सूत्रेण वा' कर्म रक्षाऽर्थं वसत्यादेः परिवेष्टनं भूतिकर्म 'चशब्दात् कौतुकादि' च यः प्रयुङ्क्ते । किमर्थम् ? सातं सुखम्, रसा माधुर्यादय., ऋद्धिरुपकरणादिसम्पद्, एता हेतवो यस्मिंस्तत् सात–रसर्द्धिहेतु । को भाव. ? सातायर्थं मन्त्र–योगादि प्रयुङ्क्ते । एवमाभियोगीं भावना करोति । इह च सातार्थ्यथाभिधानम्, नि.स्पृहस्यापवादत एतत्प्रयोगे प्रवचनप्रभावनादिगुण एवेति ख्यापनार्थम् । उक्तं हि—

"[1]एयाणि गारवट्ठा कुणमाणो आभिओगियं बधे । बीइओ गारवरहिओ कुब्बइ आराहओ छवधा" ॥ १ ॥ २६४ ॥

किल्बिषिकीभावनामाह—

**नाणस्स केवलीणं धम्मायरियस्स संघ–साहूणं । माई अवन्नवाई किब्बिसियं भावणं कुणइ ॥२६५॥**

व्याख्या–ज्ञानस्य श्रुतज्ञानादे , केवलिनाम्, धर्माचार्यस्य धर्मोपदेशकस्य, सङ्घस्य साधवश्च तेपाम्, मायी वञ्चक. ।

---

१ एतानि गौरवार्थं कुर्वाण आभियोगिक बध्नाति । द्वितीयो गौरवरहितः करोत्याराधकोऽबन्धात् ॥ १ ॥

अवर्णवादी निन्दकः । तत्रावर्णोऽश्लाघारूपः स चैवम्—श्रुतज्ञानस्य, पुनःपुनस्त एव कायास्तान्येव व्रतानि, तावेव च प्रमादाप्रमादाविहाभिधेयौ । मोक्षाधिकारिणां च किं ज्योतिर्योनिपरिज्ञानेन ? इत्यादि भाषते । यदाह—

"[1]काया वया य ते च्चिय ते चेव पमायमप्पमाया य । मोक्खाहिगारियाणं जोइस—जोणीहिं किं च पुणो" ? ॥ १ ॥

केवलिनां च, ज्ञान—दर्शनयोः क्रमेणोपयोगे परस्परावरणता, युगपदुपयोगे चैक्यापत्तिः । उक्तं च—

"[2]एगतरसमुप्पाए अण्णोण्णावरणया दुवेण्हं पि । केवलदंसण—णाणाणमेगकाले य एगत्तं" ॥ १ ॥

धर्माचार्यस्य, जात्यादिभिरधिक्षेपणादीति । उक्तं च—

"[3]जच्चाईहिं अवण्णं विहसइ वट्टइ ण यावि उववाए । अहिओ च्छिद्दप्पेही पगासवादी अणणुकूलो" ॥ १ ॥

सङ्घस्य च, बहवः श्व—शृगालादिसङ्घाताः कोऽयमिह सङ्घः । साधूनां च, नामी परस्परमपि सहन्ते । तत एव देशान्तरयायिनोऽन्यथा त्वेकत्रैव संहत्या तिष्ठेयुः । अत्वरितगतयो मन्दयायिन अत एव बकवृत्तिरियमेषामित्यादि । एवंविधमवर्णं वदितुं शीलमस्येत्यवर्णवादी । मायाऽस्य स्वस्वभावविनिगूहनादिनाऽस्तीति मायी । यथोक्तम्—

---

१ काया व्रतानि च तान्येव तावेव प्रमादाप्रमादौ च । मोक्षाधिकारिणां ज्योतिर्योनिभिः किं च पुनः ? ॥ १ ॥

२ एकतरसमुत्पादेऽन्योन्यावरणता द्वयोरपि । केवलदर्शन—ज्ञानयोरेककाले चैकत्वम् ॥ १ ॥

३ जात्यादिभिरवर्णं विहसति वर्तते न चाप्युपपाते । अहितः च्छिद्रप्रेक्षी प्रकाशवादी अननुकूलः ॥ १ ॥

"[1]गूहइ आयसहाव घायइ य गुणे परस्स संते वि । चोरो व सव्वसंकी गूढायारो वितहभासी" ॥१॥ त्ति ।

कैल्बिषिकीं भावनां करोति ॥ २६५ ॥

'विचित्रत्वात् सूत्रकृतेः' मोहीप्रस्तावेऽपि प्रागासुरीभावनामाह—

अणुबद्धरोसपसरो तह य निमित्तमि होइ पडिसेवी । एएहिं कारणेहिं आसुरियं भावणं कुणइ ॥२६६॥

व्याख्या—अनुबद्धः सन्ततोऽव्यवच्छिन्नो रोषस्य क्रोधस्य प्रसरोऽस्येत्यनुबद्धरोषप्रसरः । नित्यं विरोधशीलतया पश्चात्तापाकरणतया क्षामणादावपि मन प्रसत्त्यप्राप्तेरिति भाव' । यदुक्तम्—

"[2]निच्च वुग्गहसीलो काऊण ण याणुतप्पए पच्छा । ण य खामिओ पसीयइ अवराहीण दुवेण्ह पि" ॥ १ ॥

तथा च निमित्तमतीतानागत–वर्त्तमानादिभेदात् त्रिधा तस्मिन् विषये प्रतिसेवीत्यवश्यं प्रतिसेवकोऽपुष्टालम्बनेऽपि तदासेवनात् । एताभ्या कारणाभ्यामासुरीं भावना करोति ॥ २६६ ॥

मोहीभावनामाह—

सत्थग्गहणं विसभक्खण च जलण च जलपवेसो य । अणायारभंडसेवा जम्मण-मरणाणि बंधंति ॥२६७॥

---

१ गूहते आत्मस्वभाव घातयति च गुणान् परस्य सतोऽपि । चौर इव सर्वशङ्की गूढाकारो वितथभाषी ॥ १ ॥

२ नित्य व्युद्ग्रहशील कृत्वा न चानुतप्यते पश्चात् । न च क्षामित प्रसीदति अपराधिनोर्द्वयोरपि ॥ १ ॥

व्याख्या–शस्त्रं खड्गादि तस्य ग्रहणम् 'उपलक्षणत्वादात्मनि वधार्थं व्यापारणम्' शस्त्रग्रहणम्। विषं तालपुटादि तस्य भक्षणं विषभक्षणं च । ज्वलनं भस्मीकरणम् 'आत्मन इति गम्यते' । जले प्रवेशो निमज्जनं जलप्रवेशः । 'चशब्दोऽनुक्तभृगुपातादिपरिग्रहार्थः' । आचारः शास्त्रविहितो व्यवहारस्तदभावोऽनाचारस्तेन भाण्डस्योपकरणस्य सेवा हास्यमोहादिभिः परिभोगोऽनाचारभाण्डसेवा 'गम्यमानत्वादेतानि कुर्वन्तो यतयः' जन्म–मरणानि 'उपचारात् तद्धेतुकर्माणि' बध्नन्त्यात्मना श्लेषयन्ति । संक्लेशजनकत्वेन शस्त्रग्रहणादीनामनन्तभवहेतुत्वात्।एतेन चोन्मार्गप्रतिपत्त्या सन्मार्गविप्रतिपत्तिराक्षिप्ता । तथा चार्थतो मोहीभावनोक्ता । यतस्तल्लक्षणं चेदम्—

"उम्मग्गदेसओ मग्गनासओ मग्गविपडिवत्ती य । मोहेण य मोहित्ता संमोहं भावणं कुणति" ॥ १ ॥ त्ति ।

एतासां च फलम्? यदाहुः—

"एयाओ भावणाओ भावित्ता देवदुग्गइं जंति । तत्तो य चुया संता पडंति भवसागरमणंतं" ॥ १ ॥ २६७ ॥

इइ पाउकरे बुद्धे नायए परिनिवुए । छत्तीसं उत्तरज्झाए भवसिद्धीयसंमए ॥ २६८ ॥ त्ति बेमि ॥

व्याख्या–इतीत्यनन्तरमुपवर्णितान् 'पाउकरे' त्ति 'सूत्रत्वात्' प्रादुष्कृत्य कांश्चिदर्थतः कांश्चन सूत्रतोऽपि प्रकाश्य

---

१ उन्मार्गदेशको मार्गनाशको मार्गविप्रतिवर्त्ती च । मोहेन च मोहयित्वा सम्मोहीं भावनां करोति ॥ १ ॥ इति ।
२ एता भावना भावयित्वा देवदुर्गतिं यान्ति । ततश्च च्युताः सन्तः पतन्ति भवसागरमनन्तम् ॥ १ ॥

प्राप्येत्यर्थः । किम्? इत्याह–परिनिर्वृतो निर्वाणं गत इति सम्बन्धः। कीदृश सन् कः ? इत्याह–बुद्धः केवलज्ञानाव-गतसर्ववस्तुतत्त्वो ज्ञातजो ज्ञातकुलसम्भव 'अर्थाद् भगवान् वर्द्धमानस्वामी'। षट्त्रिंशत्सङ्ख्यानुत्तरा, प्रधाना अध्याया अध्ययनानि तत उत्तराश्च तेऽध्यायाश्चोत्तराध्यायास्तान् विनयश्रुतादीन्। भवसिद्धिका भव्यास्तेषां सम्मिति भृश मता अभिप्रेता भवसिद्धिकसमतास्तान्। अथवा 'पाउकरे'त्ति प्रादुरकार्षीत् प्रकाशितवान् । तत्र परिनिर्वृत, क्रोधाद्युपशमतः स्वस्थीभूत, ॥ निर्युक्तिकारोऽप्येतन्माहात्म्यमाह—

"जे किर भवसिद्धीया परित्तसंसारिया य जे भव्वा । ते किर पढंति एए छत्तीसं उत्तरज्झाए" ॥ १ ॥

व्याख्या–ये इत्यनिर्दिष्टनिर्देशः 'किलेति सम्भावने' भवसिद्धिका भव्याः । 'परित्त' परिमितश्चासौ संसारश्च परित्तसंसारः स विद्यते येषा ते परित्तससारिका आसन्नसिद्धिका । भव्या सम्यग्दर्शनादिगुणयोग्या भिन्न-ग्रन्थय इत्यर्थः । 'च' समुच्चये' । ते एव 'किलेति परोक्षासवादे' पठन्त्यधीयन्ते । एतानि षट्त्रिंशदुत्तराध्ययनानि विनयाख्यादीनि ॥ १ ॥ ततो यद् विधेयं तदाह—

"तम्हा जिणपन्नत्ते अणतगम–पज्जवेहिं सजुत्ते । अज्झाए जहजोगं गुरुप्पसाया अहिज्जेज्जा" ॥ २ ॥

व्याख्या–तस्माज्जिनै, श्रुतजिनादिभि, प्रज्ञसा' प्ररूपिता जिनप्रज्ञप्तास्तान् । अनन्ताश्च ते गमाश्चार्थावबोधप्रकारा, पर्यवाश्च शब्दपर्यवार्थपर्यवरूपा अनन्तगमपर्यवास्तै, संयुक्तास्तान् अध्यायान् 'प्रक्रमादुत्तराध्यायान्' 'जहाजोग'त्ति

योग उपधानाद्युचितव्यापारस्तदनतिक्रमेण यथायोगम् । गुरूणां प्रसादश्चित्तप्रसन्नता गुरुप्रसादस्तस्माद् हेतोरधीयेत पठेन्न त्वेतदध्ययनयोग्यताऽवाप्तौ प्रमादं कुर्यादिति भावः । एतेनाध्ययनार्थिना हि गुरवोऽवश्यं प्रसादनीयास्तदधीनत्वात् तस्येति ॥ २ ॥ इति परिसमाप्तौ । ब्रवीमीति गणधरोपदेशेनेति ॥ २६८ ॥ ग्रन्थाग्रं ७०८ ॥

इति श्रीखरतरगच्छाधिराजश्रीजिनभद्रसूरिशिष्यश्रीकमलसंयमोपाध्यायविरचितायां सर्वार्थसिद्धौ श्रीउत्तराध्ययनटीकायां जीवाजीवविभक्तिनामकं षट्त्रिंशमध्ययनं समाप्तम् ॥ ३६ ॥

# टीकाकृत्प्रशस्तिः ।

अस्ति चान्द्र कुल नित्यनिर्मलज्योतिरास्पदम् । तस्माद् दोषावहान्मन्दानुगादस्यत् कलङ्किनः ॥ १ ॥
नैकेऽत्रासन् गुरव' कवयो ध्वान्तारय. समङ्गलका । छायाभुवो बुधा अपि न सतमसो न सभुजङ्गाश्च ॥ २ ॥
तेष्वासीदुदयी सुधर्मगणभृत्पट्टानुपूर्वीभव , ख्यातः सूरिवरो जिनेश्वरगुरुर्वक्ता कविः सयमी ।
शुद्ध यत्समयानुयोगममल यत्सयम दुर्लभः, क्ष्मापालो विनिरीक्ष्य सत्वरतरेत्याख्या व्यधाद् यद्गणे ॥ ३ ॥
अजनि तदनु सूरिर्योगमार्गानुविद्ध—प्रकृतिरभयदेवो देवतार्च्यक्रमाब्जः ।
भुवनमपि नवाङ्गीनूलवृत्तिप्रपञ्च—प्रजनितमधुनाऽपि क्षालयद् यद्यशोऽस्ति ॥ ४ ॥
विचारचञ्चुर्वाङ्मयपारधाता, गुरुर्गरीयान् जिनवल्लभोऽभूत् ।
सूत्रोक्तमार्गाचरणोपदेश-प्रावीण्यपात्र न हि यादृशोऽन्यः ॥ ५ ॥
कूष्माण्ड्याऽऽस्तिकनागदेवतपसा सन्तुष्टया यद्युग-प्राधान्य प्रकटीकृत सुकृतिनामानन्दकन्दाम्बुदम् ।

